INTERNATIONAL ACADEMY OF SANSKRIT RESEARCH

# MAHARAJA BHOJARAJA'S
# Sringara Prakasha

## FOURTH & FINAL VOLUME

**Prakashas 25 to 36**

## म हा रा जा भो ज दे व वि र चि तः
## शृ ङ्गा र प्र का शः

२५-३६ प्रकाशात्मकः

च तु र्थ श्चा न्ति मो भा गः

Collated by

**H. H. Yadugiri Sampathkumara Ramanuja Jeer Swamy**

Revised, Edited and Published by

**G. R. JOSYER**

Founder, International Academy of Sanskrit Research,

and Printed by

G. N. JOSYER, B.E.

AT CORONATION PRESS, MYSORE-4.

 Rs. 35

# FOREWORD

At last, at long last, we have completed printing Maharaja Bhojaraja's majestic literary work, 'Sringara Prakasha' The four volumes have taken a toll of over 20 years and involved heavy strain It has been like Bhageeratha bringing the Ganges for the salvation of his ancestors !

At the same time we were being urged to publish Maharshi Bharadwaja s "Vymanika Sastra", another great work of the past We have felt like carrying both the Himalayas and Vindhyas on our frail shoulders !

God, through the inner voice urged us to undertake the two works, and sustained us through the physical and financial strain of the two monumental undertakings

The manuscript of the Foruth volume of Sringara Prakasha was far from perfect, and proved taxing The ink was faded, the writing was marred by "hand mistakes" the pages were torn and presented gaps amidst the writing Much erudition and insight was required to make the printing approximate to the thousand year old manuscript of Bhojaraja as he wrote his beloved work That precious manuscript, where did it go ? Why were there only 2 or 3 imperfect copies in Kerala, and not a scrap anywhere else in India, not even in Bhojaraja's home State of Central India ?

Let us be grateful that at last we have found Bhojaraja's great work, and that the complete work in four volumes is now available to the world of Sanskrit scholars

It is curious that it was left to us to accomplish the great task The Kerala University where the manuscript was found could have published it The Madras University which has a copy and to which the Yatiraja Swamy offered his manuscript for publishing rebuffed him The Mysore University

also, which has become insular and parochial, disdained him. The Vikram University of Bhojaraja's home State, should have undertaken it, but did not. And now a humble, aged Sanskritist of Mysore has fulfilled the task which four Universities had felt to be beyond them ! Bhartrihari says,

प्रारभ्यते नखलु विघ्नभयेननीचैः प्रारभ्यविघ्न विहता विरमंतिमध्याः ।
विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमाना प्रारभ्यमुत्तमगुणानपरित्यजन्ति ॥

We hope the spirit of Bhojaraja, and the spirit of Sri Yadugiri SampathKumara Swami, feel pleased that the manuscript has at last seen the light of day. Perhaps before long we shall meet them in person in the gardens of Elysium, in Indra's Deva Sabha, or among the Nityasooris of Vykuntha, or the Pramathas of Kylaasa !

**G. R. JOSYER**

*OM TAT SAT*

यावन्मूर्ध्नि हिमांशुकन्दलवती स्वर्वाहिनी धूर्जटे
यावद्वक्षसि कौस्तुभस्तबकिते पद्मा मुरद्वेषिणः ।
यावच्चित्तभुवस्त्रिलोकविजयप्रौढं धनुः कौसुमं
भूयात्तावदियं कृतिः कृतधियां कर्णावतंसोत्पलम् ॥

# विषयसूचिका

पृष्ठे


| | | |
|---|---|---|
| १. | पंचविंशः प्रकाशः | ८७१ |
| २. | षड्विंशः प्रकाशः | लुप्तः |
| ३. | अभियोगविधिप्रकाशक स्सप्तविंशः प्रकाशः | ८९२ |
| ४. | दूतविशेषवर्णनंनाम अष्टाविंशः प्रकाशः | ९०७ |
| ५. | दूतकर्मोपवर्णनंनाम एकोनत्रिंशः प्रकाशः | ९४९ |
| ६. | मानप्रकाशोनाम त्रिंशः प्रकाशः | ९८१ |
| ७. | प्रवासोपवर्णनंनाम एकत्रिंशः प्रकाशः | १०४९ |
| ८. | करुणरसविनिर्णयोनाम द्वात्रिंशः प्रकाशः | ११०७ |
| ९. | सम्भोगशब्दार्थप्रकाशोनाम त्रयस्त्रिंशः प्रकाशः | ११४३ |
| १०. | प्रथमानुरागप्रकाशोनाम चतुस्त्रिंशः प्रकाशः | ११७९ |
| ११. | मानानन्तरादिप्रकाशोनाम पंचत्रिंशः प्रकाशः | १२०५ |
| १२. | सम्भोगावस्थाप्रकाशोनाम षट्त्रिंशः प्रकाशः | १२३२ |






अद्यधारासदाधारा सदालंबासरस्वती ।
पंडितामंडितास्सर्वे भोजराजेभुवंगते ॥

कविषुवादिषुभोगिषु देहिषु
द्रविणवत्सु सतामुपकारिषु ।
धनिषुधन्विषु धर्मधनेष्वपि
क्षितितले नहिभोजसमोनृपः ॥



॥ श्रीः ॥

# महाराजाधिराज भोजदेवविरचिते

# ॥ शृङ्गारप्रकाशे ॥



## पञ्चविंशः प्रकाशः

तत्रवैधर्म्यात् साधर्म्यमेवप्रागभिधातव्यं भवति। महाविषयत्वात् — किंपुनः प्रथमानुरागस्य साधर्म्यं, किंवैधर्म्यं। इति। तत्र साधर्म्यं चतुर्णामपि विप्रलम्भभेदानां सामान्य लक्षणयोगः। वैधर्म्यं तु सजातीयेभ्यो विजातीयेभ्यश्च भेदप्रतिपादकः विशेषलक्षणयोगः इति।

तत्र साधर्म्यसूत्रस्य चत्वारोऽर्थस्कन्धाः :— (१) भावस्कन्धः (२) भावजन्मस्कन्धः (३) भावानुबन्धस्कन्धः (४) भावप्रकर्षस्कन्धः, इति। तेषु नायकयोः प्रागसङ्गतयोः मिथो दर्शन श्रवणाभ्यामवस्थिताभिमानपरस्परानुरागः अन्यतरानुरागो वेतिभावस्कन्धः। अभिलषणी याऽलिङ्गनादीनामनवाप्तौ मत्यां समुपजायमानैस्तैस्तैरुत्कण्ठादिभिर्व्यभिचारिभावैरिति भावजन्म स्कन्धः। मनोवाग्बुद्धिजन्मभिश्चानुभावै रनुबन्ध इति भावानुबन्धस्कन्धः। प्राप्तप्राप्य प्रकर्षावस्थोपि विप्रलम्भशृङ्गाराख्यां लभत इति, भावप्रकर्षस्कन्ध इति। एतेनैतदुक्तं भवति —

एतेनैतदुक्तं भवति। विषयाश्रयालम्बनसंयोगो भावस्कन्धः। पश्चाद्भ्यासप्रत्ययोत्पत्तियोगो भावजन्मस्कन्धः, वेगभावनास्थितस्थापकाख्यवासनासंयोगो भावानुबन्धस्कन्धः, विभावानुभाव व्यभिचारिसंयोगो भावप्रकर्षस्कन्धः। तदुक्तम्। भावजन्मानुबन्धप्रकर्षानुरूपास्तावस्या ? समुदय इति।

तत्र भावस्कन्धे नायकयोर्मिथोदर्शनश्रवणाभ्यां इत्यनेनास्य सविकल्पकप्रत्यक्षानुमानोपमान शाब्देतिह्यार्थापत्ति सम्भवाभावप्रमाणे व्यापारागोचरवस्तुविषयतामुपदिशति। निर्विकल्पक प्रत्यक्षोऽनेन प्रत्युक्तः। तेनव्यवहारात् भावात् दर्शिरिह ज्ञानवचनोदर्शनार्थः, तेन प्रत्यक्षानु

मानोपमानार्थापत्तिसम्भवाभावानां दर्शनात्षोढा शब्दैतिह्यश्रुतानुमान श्रुतोपमान श्रुतार्थापत्तिश्रुत सम्भवानां श्रवणात्षोढेत्येवमुभयथापीति सिद्धं भवति । तथाहि

नसोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वशब्देन गम्यते ॥

तत्रश्चोपजायमानः परस्पराश्रयोऽन्यतराश्रयो वा मिथो विलक्षणविषयो वा दृगालम्बनः श्रुत्यालम्बनो वा प्रमाणभेदः प्रथमानः प्रथते । तत्र दर्शनतः षोढा प्रत्यक्षानुरागोऽनुमानानुराग उपमानानुरागोऽर्थापत्त्यनुरागः सम्भवानुरागोऽभावानुराग इति श्रवणोऽपि तावदेव । शाब्दानुराग ऐतिह्यानुरागः श्रौतानुमानिकः, श्रौतोपमानिकः, श्रौतार्थापत्तः, श्रौतसम्भव इति । तत्राक्षमक्षं प्रतिगतं विज्ञानं प्रत्यक्षं । तदपि षोढा साक्षात् प्रतिबिम्ब प्रतिमोत्प्रेक्षास्मृतिस्वप्न भेदात् तत्र प्रतिविषयाभ्यासः साक्षात्प्रत्यक्षः यथा—

अविअण्णपेच्छणिज्जेणतक्खणंमामिदिट्ठेण ।
सिविणअपीएणअपाणिएणतह्णच्चिअणपिव्ठा ॥

प्रत्यक्षस्यैव देहमात्रप्रतिभासः प्रतिबिम्बं यथा—

णच्चणसलाहणणिहेणपासपरिसंठिआतरूणगोपी ।
सरिसगोविआणइचुम्बइकवोलपडिमागअंकह्नं ॥

नर्तन श्लाघन निभेन पार्श्वपरिसंस्थिता निपुण गोपी ।
सदृश गोपीनां चुम्बति कपोलप्रतिमागतं कृष्णम् ॥

बाह्येन्द्रियनिरपेक्षमदृष्टवशमाकस्मिकमननुभूतानुभूतविषयज्ञानं प्रतिभानं यथा—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषिमेमनः ।
सतांहि संदेह पदेषुवस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥

परोक्षेऽपि प्रत्यक्षविषये प्रमाणाधिगतवस्तुधर्माध्यारोपणमुत्प्रेक्षा यथा—

अहसाहि अणेण हरिअवदिट्ठाआरपअविळासं ।
निजइ पडिवण्णुपेक्खाणिसण्णकअ अंपि अत्तेइ ॥

प्रमाणानुभूतस्य वस्तुनो मनसि प्रतिबिम्बनं स्मृतिः यथा—

जंजंपुळ एमिदिसं पुरओळिहिओ वदीससेऽथन्त ।
तुहपठिमापरिपाठीं पवहइवसअळं दिसाअक्कं ॥

यांयां प्रलोकयामिदिशं पुरतो लिखित एव दृश्यसे तंत्र ।
तव प्रतिमा परिपाठीं वहतीव सकल दिशाचक्रम् ॥

अविषयेन्द्रियव्यापारमेन्द्रियेणैव विषयेषु यदनुभवनं मानसं स स्वप्नः । यथा—

जाने स्वप्नविधौ ममाद्य चुलुकोत्सेक्यं पुरस्तादभूत्
प्रत्यूषे परिवेषमण्डलमिव ज्योत्स्नासपत्नंमहः ।
अस्यान्तर्नखनिस्तुषीकृत शरच्चन्द्रप्रभैरङ्गकैः
दृष्ट्वा काप्यबला बलात्कृतवती सामन्मथं मन्मथम् ॥

स्वप्नादयः प्रमाणाभासत्वादप्रमाणमिति चेत्तन्न प्रथमानुरागोत्पत्तौ प्रमाणतदाभासयोरविशेषात्।

लिङ्गदर्शनाल्लिङ्गिप्रतिपत्तिरनुमानम् । तदुक्तम् ।

अनुमेयेन सम्बद्धं प्रसिद्धत्वं तदन्वये
तदभावेतु यन्नास्ति तल्लिङ्गमनुमापकम् ।
विपरीतमतो यत्स्यादेकेन द्वितयेनवा
विरुद्धासिद्धसन्दिग्धमलिङ्गंकाश्यपोऽब्रवीत् ॥

वयंतु लिङ्गमात्रमेव ब्रूमः तदाभासस्यापि प्रथमानुरागनिमित्तत्वात् । तदपि षोढा । सामान्यतो दृष्टं विशेषतो दृष्टं प्रत्यक्षतो दृष्टं परोक्षतो दृष्टं विद्यमानाविषय माविद्यमानविषयम् च । यथा— कार्येणकारणं , स्वरेण पुत्रम् , कृत्तिकोदयेन रोहिण्युदयम् , प्रदेशान्तर प्राप्तादित्यगतिं ,

धूमेनाग्निं निमित्तेन भाविनमर्थं जानाति। तत्र सामान्येन गृहीतव्याप्तिकं सामान्यतो दृष्टं यथा—

उन्नमितैकभ्रूलतमाननमस्याः पदानिरचयन्त्याः।
कण्टकिनेन प्रथयति मय्यनुरागं कपोलेन॥

विशेषेण गृहीतव्याप्तिकं विशेषतो दृष्टं यथा—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपंक्तिर्दृश्यतेऽभिनवा॥

प्रत्यक्षेण गृहीतव्याप्तिकं प्रत्यक्षतो दृष्टं यथा—

अविभिन्नन्तीप्रथमं प्रियायाः सोच्छ्वासमन्तःकरणं करोति।
सन्तापदग्धस्य शिखण्डियूनो दृष्टेः पुरस्तादचिरप्रभेव॥

परोक्षेण गृहीतव्याप्तिकं परोक्षतो दृष्टं यथा—

एतानि निरसहतनोरसमञ्जसानि शून्यं मनः पिशुनयन्ति पदानितस्याः।
एते च मार्गतरवः कथयंति तापमालम्बितोज्झितपरिग्लपितैः प्रवालैः॥

वर्तमान वस्तुगोचरो विद्यमानविषयो यथा—

अशोकनरुहज्जरुस्तबकमाल भारोयथा यथा कुरवकस्तनुमतनुकोरकैरर्चति।
यथा च तिलकद्रुमः सृजति मञ्जरीजालकं तथेहपुरतो वने पुरवधूजनः क्रीडति॥

म....त...द्यावस्तुगोचरमविद्यमान विषय यथा—

शान्तमिदमाश्रम पदं स्फुरतिचबाहुः कुतः फलमिहास्य।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र॥

तदेतत् षड्विधमपि स्वार्थानुमान परार्थानुमान श्रावणप्रमाणपट्के वक्ष्याम। अविज्ञात स्वरूपस्य वस्तुनः साधर्म्यादिभिरुपदेशादि सव्यपेक्षैः साक्षात्करणमुपमानं। उक्तं च। प्रसिद्ध

साधर्म्यवैधर्म्यात्साध्यसाधनमुपमानम्। उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिं जनयतीति। तदपि षोढैव। साधर्म्योपमानम्, वैधर्म्योपमानं, मुद्रोपमानं, शिल्पोपमानं, संज्ञोपमानं, ऽभिनयोपमानमिति। संज्ञासाधर्म्यवैधर्म्यमुद्रा शिल्पाभिनीतिभि ब्रूते! वस्तुनो रूपमुपमानं तदुच्यते। तत्र साधर्म्योपमानं यथा—

निर्माल्यं नयन श्रियः कुवलयं वक्त्रस्य दासः शशी
कान्तिः प्रावरणं तनोर्मधुमुचो यस्याश्च वाचः किल।
त्रिंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावणः
त्वां द्रष्टुं जनकात्मजां हृदय हे नेत्राणि मित्रीकुरु ॥

वैधर्म्योपमानं यथा—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः॥

मुद्रोपमानं यथा—

सचकितमिव विस्मयाकुलाभिः शुचिसिकतास्वतिमानुषाणि ताभिः।
क्षितिषु ददृशिरे पदानि जिष्णोः उपहितकेतुरथाङ्गलाञ्छनानि ॥

शिल्पोपमानं यथा—

लीलावधूतपद्मा प्रथयन्ती पक्षपातमधिकं मे।
मानसमुपैति केयं चित्रगता राजहंसीव ॥

संज्ञोपमानं यथा—

दट्ठूणतव्ळत्राणंपरिअणमज्झंमिपोढमहिळाए।
पव्पुव्ळदळं कमळं करेण मउळाविअंव्किव्स ॥

अभिनयोपमानं यथा—

पइविरणिग्गअदळोएरंडोसाहजव्वतरूणाणं।
एव्मघरे व्–अवइएव्दहमे–व्घणीवसइ ॥

तत्र-प्रत्यक्षागमानेवोपमानमिति काणादकपिलपातञ्जलाः। तथाहि। यथा गौ स्तथा गवय इत्ययं स गोसदृशो गवय इति। नात्र गवानुभवोपदेश स्मरण गवय दर्शनानामतिरिक्तं स्फुरति। यत् प्रसिद्धे तुरीयं प्रमाणमङ्गीकुर्मः यत्कैश्चिदुक्तमनेन सदृशी मदीया गौरित्येत दुपमानं तदपि सादृश्योद्बोधितस्मृतिबीजप्रभवगवानुभवस्मरणतो नातिरिच्यत इति।

अत्रोच्यते। उक्तमेवास्माभिः किंतदितिचेदविज्ञातस्वरूपस्य वस्तुनः साधर्म्यादिभिरुपदेशादि सव्यपेक्षैः सत्कारणमुपमानमिति उपदेशादयः पुनरुभयज्ञाने चक्षुरादय इव तत्सहकारिणो नतद्व्यपदेशहारिणः। तथाचेन्द्रियार्थसन्निकर्षोत्पन्नत्वेऽपि उभयजन्मव्यपदेश्यपदेन व्यवच्छिन्न मक्षपादपादैः।

किञ्चान्यदास्तामस्य निर्णीतौ महत्येषा कथा। परीक्षकाणां हि प्रायेणोपमानमेवप्रमाणं प्रत्यक्षा दीनि निरुपमायामेवान्तर्भवन्ति। तथाहि। व्यवहारोपयोगिप्रमाणं सनुविकल्पकज्ञानपूर्वं सवि कल्पकंज्ञानम् शब्दस्य संबन्धग्रहणसमयेऽर्थाप्रतिपादकम्। तदुत्तरकालन्तु तत्सादृश्येन अवबोधकत्वात्कथं नप्रत्यक्षमुपमानम्। आह च विन्ध्यवासी। शब्दस्य सामान्यम् वाच्यम्। तच्चसादृश्यरूपमिति। सामान्यं च पूर्वदृष्टव्यक्त्यवच्छिन्न मपूर्वव्यक्तौप्रतीयमानं, तदुक्तम्। सा दृश्यम्, तच्चोपमानमेव भवति। प्रत्यक्षस्य चोपमानान्तर्भावे प्रागेवानुमानमुपमानं यथा तथेतिव्यपदेश······स्वार्थानुमाने लिङ्गमधिगतलिङ्गिनोऽधिगमहेतुः। तदधिगमश्च प्रत्यक्षा दिपूर्वक इति। यथा तथेति च व्यपदेशात्परार्थानुमाने चोक्तमनुमानकारैः तत्रागमः, प्रतिज्ञा, हेतु, रनुमानं, दृष्टान्तः, प्रत्यक्ष, मुपमान, मुपनय इति। शाब्दं तु साक्षा···पमान मेवेदं तदित्यादिव्यपदेशात् एतेनार्थापत्तिसम्भवाभावा अपि तत्प्रसिद्धैव व्याख्याताः। तैर्हितेऽनुमानैरन्तर्भाविता इति। ऐतिह्यं तु शाब्दविशेषण एवं तस्मात्सर्वं प्रमाणमुपमानं।

यद्येवमुपमानमेवास्तु किं प्रत्यक्षादिभिरिति अत्रोच्यते। गतानुगतिकन्यायोऽविचा रितरमणीयः संसारव्यवहार इव विचारं न क्षमते।

तथाहि। भगवता अक्षपादेन प्रमाणप्रमेयान्तर्भूताअपि संशयादयश्चतुर्दश पृथगुक्ताः। निग्रहस्थानान्तर्भावेऽपि हेत्वाभासच्छलत्रयजातिनिग्रहस्थानानां पृथक्प्रस्थानमभिहितम्। असिद्धानै कान्तिकान्तर्गताअपि विरुद्धादयो हेत्वाभासाः पञ्चहेतूनुपादाय चतुष्पट्केण त्रिंशतापोडशकद्वयेन च द्विसहस्रे द्वात्रिंशके इति वर्णिताः।

एवं धर्मकीर्तिनापि स्वभावानुपलब्धिरिति वक्तव्ये स्वभावानुपलब्धिः कार्यानुपलब्धिः कार णानुपलब्धिः व्यापकानुपलब्धिः स्वभावविरुद्धोपलब्धिः कार्यविरुद्धोपलब्धिः कारणविरुद्धोपलब्धिः विरुद्धकारणोपलब्धिः विरुद्धकार्योपलब्धिः व्याप्तविरुद्धोपलब्धि रित्येकादशधा

न्नुपलब्धयो विकल्पिताः लोकेऽपि दृश्यते । ब्राह्मणा आयाता वसिष्ठश्चायात इति । तद्वदुपमानान्तर्गतत्वेऽपि प्रत्यक्षादिप्रमाणवर्णनमिति दृष्टः श्रुतोवान्यथानोपपद्यत इत्यर्थान्तरपरिकल्पनार्थापत्तिः साप्यषट्प्रमाणपूर्वकत्वात् षट्प्रकारापि दृष्टार्थापत्तिः प्रत्यक्षपूर्विका , अनुमानपूर्विका , उपमानपूर्विका , अर्थापत्तिपूर्विका , अभावपूर्विकाचेति । श्रुतार्थापत्तिस्तु श्रावणषट्के वक्ष्यामः । सानुमानतः सामग्रिभेदाद्भिद्यते । तथाहि । पक्षेवृत्तिः । सपक्षवत्त्वविपक्षावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चानुमानलक्षणमर्थापत्तौऽनुपक्षधर्मत्वाद्यनपेक्षस्तथानुपपद्यमानोऽर्थः स्वसिद्ध्यर्थमर्थान्तरं कल्पयति। तत्र दृष्टार्थापत्तिः प्रत्यक्षपूर्विका यथा—

सन्तापसन्तति महाव्यसनायतत्यां आसक्तमेतदनपेक्षित हेतुचेतः ।
प्रायश्शुभंच त्रिदधात्यशुभं च जन्तो स्सर्वङ्कषा भगवती भवितव्यतैव ॥

अनुमानपूर्विका यथा—

नादस्तावद्विकलकुररी कूजितस्निग्धतारः
चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति ।
अन्तर्भिन्नं भ्रमतिहृदयं विह्वलत्यङ्गमङ्गम्
गात्र स्तम्भः स्खलयति गतिं कः प्रकारः किमेतत् ॥

उपमानपूर्विका यथा—

शिखरिणि क्वनु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
तरुणि येन तवाधर पाटलं दशति बिम्बफलं शुकशावकः ॥

अर्थापत्तिपूर्विका यथा—

स्थितमुरसि विशालं पद्मिनीपत्रमेतत कथयति नतथान्त र्मन्मथोत्थामवस्थां ।
अतिशयपरितापग्लापिताऽङ्ग्या यथास्याः स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥

सम्भवपूर्विका यथा—

जनः पुण्यैर्यायाज्जलधिजलभावं जलमुच
स्तथावस्थंचैनं निदधतुशुभैश्शुक्तिवदने ।
ततस्तां श्रेयोभिः परिणतिमसौविन्दतु यथा
रुचिंतन्वन् पीनस्तनि हृदितवायं विलुठति ॥

अभावपूर्विका यथा—

अह्सा तहिं कहिंचिअवाणीरवणंमि चुक्कसंकेआ ।
तुहदंसणंमिमग्गइ पब्मुट्ठणिहाणठाणव्व ॥

संभावनाज्ञानं सम्भवः सोऽपि षट्प्रकार एव । संभावना संशयवितर्कवायोवादसम्प्रत्यय प्रीत्यनुसन्धिभेदात् । तत्र प्रबलकारणकलापदर्शनात्कार्योत्पत्तिसम्प्रधारणसम्भावना मेघोदया वृष्टिरिति यथा—

मामुग्धपोढछोबअवाळाएइमिएहरिससुअपरिंव्ळं ।
विणिअंपणदंसणकोउहळग्गहिओगहिळि ॥

अर्वाक्चेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यवस्थातश्च । विशेषापेक्षो विमर्शः संशयः स्थाणुर्वा पुरुषोवेत्यादि । यथा—

किंरूपं स्फुटमत्र सा शशिमुखे धत्ते तदत्यद्भुतम्
मामुत्साहयितुं परापकरणे चित्तंकिमस्मत्स्वसुः ।
इत्यन्तर्विकसद्वितर्कविधुरं चेतस्तथा वर्तते
स्वल्पोप्येष मम प्रयातिपुरतः पन्थायथादीर्घतां ॥

...शावलम्बी प्रत्ययः सन्देहः इहापि पाक्षिकी संभावनास्त्येव । साप्रवृत्तिहेतुः । तथा ह्यनिश्चितेऽपि प्रतिबन्धकाभावे सुखसाधनंज्ञानं प्रमाणमेवेति । अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहो वितर्कः पुरुषेणानेन भवितव्यमिति । स यथा—

अस्याः सर्गविधौ प्रजापतिरभू च्चन्द्रो नु कान्तिप्रदः
श्रृङ्गारैकरसः स्वयंनु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं स विषय व्यावृत्त कौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥

....नामैकमुख्यः प्रायोवादः प्रायेणौचोनरास्तकषायिण इति । स यथा—

ह्रिया सर्वस्यासौ हरति विदितास्मीतिवदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमतुलं
प्रिया प्रायेणारन्ते हृदयनिहितातङ्कविधुरा ॥

कार्यार्थे प्रवर्तितस्य यथोक्ताधान्तर चिह्नदर्शनं सम्प्रत्ययः, यथैतद्दृष्टद्वारं तथाग्रे नागकन्यका नगरमिति, स यथा—

प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः
परिष्वङ्गं लब्ध्वा तवकथमिवान्यत्र रमताम् ।
तथा च व्यापारः कमलनयनाया नयनयो
स्त्वयिव्यक्तस्नेहस्तिमितरभणीय श्चिरमभूत् ॥

अन्यथा व्यवस्थितपदार्थतदात्वदर्शनात्प्रागुपलब्धेऽपि तदात्वसम्भावना प्रत्यनुसन्धिः, सोऽपि कपोलपाण्डुतादिसूचितः तस्याः स्मराभिष्वङ्गः । सोऽपि स्वप्रियग्धन इति । स यथा—

माभैः शशाङ्क मम शीधुनि नास्ति राहुः खे रोहिणी कथय कातर किं बिभेषि ।
प्रायोविदग्धवनिताजनसंगमेषु पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥

प्रमाणसप्तकव्यापारातीतप्रमेयग्राहकं प्रमाणमभावः, सत्वेकोऽपि प्रमेयोपाधिभेदाद्विभिद्यमानः षोढा सम्भवति प्रागभाव प्रध्वंसाभावः, इतरेतराभावोऽत्यन्ताभावःसंबन्धाभावः सर्वाभाव इति । तत्र प्रागभावः क्षीरे दधिनास्तीति । स यथा—

जावणउंढुमनिधणअ मुहीए ।
तावच्चिअधुधुक्कारिआइमअणेण अंगाइ ॥

प्रध्वंसाभावः क्षीरं दधि नास्तीति । स यथा — स्वस्तिभुग्भ्यः सम्प्रतिसलिलाञ्जलिरेव मन्मथकथायतोऽपि मामतिवर्यंतरदृशांतरलयन्ते । इतरेतराभावः स्तम्भः कुड्यो न भवतीति । स यथा —

न देवकन्यका नापि गन्धर्वकुलसम्भवा ।
तथाप्येरा तपोभङ्गं विधातुं वेधसोप्यलम् ॥

अत्यन्ताभावः शशविषाणं नास्तीति । स यथा—

जंज॰अ॰धिसारं तं सोदेइ॰ति कि॰धअ॰चरिअं ।
अणहोताअंपि दिण्णं दोहुग्गंतु उसवं तीणं ।

सम्बन्धाभाव श्रोगृहेनास्तीति । स यथा—

मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥

सर्वाभाव स्तस्यनामपि नास्तीति । स यथा—

गामाप ससेसानुमरणसे साकुडुंगपरिवाडं ।
अह्नोवि जीअसेसा पे॰म॰तण अ॰धिसेसं वि ॥

सम्भवाभावयोरनुमा ...... घटते । सामान्यादेरभावात् । तथाहि । निश्चयात्मकमनुमानमनिश्चयात्मा सम्भवस्तथाऽप्यन्यूनाभावेन गतार्थत्वमिति चेन्न । उत्पत्तिकाले तस्यापि विपर्यात्मकत्वात् । अभाववस्तुनानुमानसदृशामपि स्पृशति । तदुक्तम्—

मयूरो वृक्षमारुह्य कृत्वा दिगवलोकनम् ।
हन्तृभावमभावेन ज्ञात्वा नृत्यति निर्भयः ॥

स इन्द्रियव्यापारभावभावित्वेन प्रत्यक्ष इति चेन्न । प्रत्यक्ष लक्ष्यस्त योगात् । तथाहि । इन्द्रियार्थसन्निकर्षं ज्ञानं प्रत्यक्षमिन्द्रियार्थयो .... सदाभावादौ न घटते । अथाघटंभूतलमित्यत्र विशेषणविशेष्याभावः सन्निकर्षो भविष्यति । यथा ... संयोगः, संयुक्तः, समवायः, समवेतसमवायः, समवेतसमवायो संयुक्तसमवेतसमवायो विशेषणविशेष्यभावश्चेति षोढा । सन्निकर्षस्तेषु संयोगात्, द्रव्यग्रहणं संयुक्तसमवायाद्गुणग्रहणंसंयुक्तसमवेतसमवायात् । गुणत्वग्रहणं समवाया च्छब्दग्रहणं विशेषणविशेष्यभावात् अभावग्रहणमिति । धर्मविकल्परयाग एव धर्माणाम् । तथा

ऽप्यनुत्पत्तिमान् विनाशी प्रागभावः, उत्पत्तिमानप्यविनाशी प्रध्वंसाभावः । ततश्च यथैव सामग्र्याभावभूतं भूतलमुपलभ्यते न तथा तद्विशेषणमभाव इति। न चागृहीतविशेषणाविशेष्येबुद्धिः प्रवर्तत इत्यतो — भावग्राहकं प्रमाणान्तरमभ्युपगन्तव्यम् । स च प्रमाणसप्तकव्यापारातीतविषयग्राहकोऽभाव एवेति । तान्येतानि प्रत्यक्षानुमानार्थापत्तिसम्भवाभावसमाख्यानि दर्शनतः षट्प्रमाणानि प्रतिपादितानि । अथ श्रवणतः शब्दैनिहश्रुतानुमानादिप्रमाणषट्कं वक्ष्यामः । तत्र शब्दविज्ञानादसन्निकृष्टेऽर्थे ज्ञानं शाब्दम् । तद् द्विविधमौपदेशिकमनौपदेशिकं च । तत्रोपदेशः षोढा । विधिवादो, अर्थवादः, संज्ञावादः, स्वरूपवादः, मन्त्रवादो, ऽनुवाद, इति । तत्र प्रवृत्तिनिवृत्त्योर्विधायको विधिः स चतुर्धा । उत्पत्तिविधिः, नियोगविधिः, प्रयोगविधिः, अधिकारविधिश्चेति । तदुक्तम् ।,

उत्पत्तिविधियोगाख्यः प्रयोगादिः क्रियार्थकः ।
एको विधिस्तत्परतो त्रिभेदेन विभिद्यते ॥

तन्त्राज्ञानुरूपस्वरूपज्ञापनापरउत्पत्तिविधिः । यथा—

तत उदयगिरेरिवैक एषः स्फुरितगुणद्युतिसुन्दरः कलावान् ।
इह जगति महोत्सवस्य हेतुः नयनवतामुदियाय बालचन्द्रः ॥

शेषभावेन कर्मादीनां विनियोजनापरो विनियोगविधिः । यथा—

असौविद्याधारदिशशुरपि विनिर्गत्य भवना
दिहायातः सम्प्रत्यविकल शरच्चन्द्र मधुरः ।
यदालोकस्थाने भवति पुरमुन्मादतरलैं
कटाक्षैर्नारीणां कुवलयित वातायनमिव ॥

अत्र लिङ्गलोपिनि यथा बर्हिर्देवसदनं दामीतिलिङ्गादनेन मन्त्रेण बर्हींषि लुनीयाः कर्मानुष्ठानापरः प्रयोगविधिः । यथा—

परश्चक्षूरागस्तदनुमनमो मन्युपरता तनुर्ज्यानिर्यस्य त्वयि समभवद्यत्र.... ।
.... सोऽयं प्रेया निह सुवदने मुञ्च जडतां विधातुर्वैदग्ध्यं विलसतु सकामोस्तु मदनः ॥

नियोज्यविशेषप्रतिपादनापरो ऽधिकारविधिर्यथा—

शरत् ज्योत्स्नाकान्तं कुमुदमिवतं नन्दयतु सा
सुजातं कल्याणी भवतु कृतकृत्यः स च युवा ।
गरीयानन्योन्य प्रगुण गुणनिर्माणनिपुणो
विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु ॥

... विहितस्य कर्तृत्वे कर्तुरधिकारेषा प्रयोगविधेरेव प्राधान्यम् । तदुक्तम् ।

अभिधात्री श्रुतिः काचिद्विनियोगपरामता ।
विधात्री च तृतीया सा प्रयोगो यन्निबन्धनः ॥

स लिट्, लोट्, तव्यादि प्रत्ययाभिधेयः पुरुषमिष्टाभ्युपायावच्छिन्नायां भावनायामप्रवृत्तं प्रवर्तयति, प्रवृत्तं च रागतोऽ — चतुर्धा, स्तुति, निन्दा, पुराकल्पः, पराकृतिरिति । तत्र विद्यमानाविद्यमानगुणसङ्कीर्तनं स्तुतिः । यथा ।

कामं नृपाः सन्तु सहस्रशोन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥

दोषप्रकाशनं निंदा । यथा—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगंबरत्वेन निवेदितं वसु ।
वरेषुयद्बालमृगाक्षिमृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥

एवं पुराभूदिति पुराकल्पः । यथा—

अपेतव्याहारं धुतविविध शिल्पव्यतिकरं करस्पर्शारम्भ प्रगलित दुकूलान्त शयनं ।
मुहुर्बद्धोत्कम्पं दिशिदिशिमुहुः प्रेरितदृशोरहल्या सुत्राम्णोः क्षणिकमिहतत्संगतमभूत् ॥

व्याहतस्य प्रवादः पराकृतिर्यथा —

अयुक्तरूपं किमतः परं भवेत् त्रिनेत्रवक्षस्सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे पदं चिताभस्म रजः करिष्यति ॥

सचायमर्थप्रकाशोऽर्थवादः प्ररोचनया पुरुषमप्रवर्तमानं स्तुतिपुराकल्पाभ्यां प्रवर्तयति । रागतः प्रवृत्तं निन्दापराकृतिभ्यां निवर्तयति । कर्मव्यतिहारहेतुः संज्ञा । सापि चतुर्धा । अन्वर्थिकी, पारिभाषिकी, नैमित्तिकी, यादृच्छिकी चेति । तत्र संज्ञार्थमनुगतान्वर्थिकी यथा—

असौ शरण्यः शरणागतानां अगाधसत्वो मगध प्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः परन्तपोनामयथार्थनामा ॥

अनपेक्षितसंज्ञार्था पारिभाषिकी यथा —

तस्यान्वये भूपतिरेपजातः प्रतीपइत्यागमवृद्धसेवी ।
येनश्रियः संश्रयदोषरूढं स्वभावलोलेत्ययश.प्रमृष्टम् ॥

निमित्त सव्यपेक्षा नैमित्तिकी यथा —

तां पार्वतीत्याभिजनेन नाम्ना

अविद्यमानव्युत्पत्तिर्यादृच्छिकी, यथा—

लाङ्गलोल्लिख्यमानाया यत्र भूमेः समुद्गता ।
सीतेव भूमिलेयंतुद्वितीया जनकात्मजा ॥

सा तु चतुर्विधापि विधिनिषेधार्थमर्थवादानुवादौ बिभर्ति । मिथो विवेकहेतुः स्वरूप .... पि चतुर्धा, जातिः , गुणः क्रिया द्रव्यमिति । तत्र सामान्याभिधायिनी जातिः यथा—

रतेरिव निधानानि रत्नानामिवराशयः ।
अमृतस्येव कुम्भानि योषितः केन निर्मिताः ॥

आश्रितोविशेषणं च गुणः, यथा—

बध्नन्नङ्गेषु रोमाञ्चं कुर्वन्मनसि निर्वृतिम् ।
नेत्रेचामीलयन्नेव प्रियास्पर्शः प्रवर्तते ॥

मनश्शरीर परिस्पन्दः क्रिया, यथा—

शिञ्जानमञ्जुमञ्जीरकाञ्चीसञ्चारचारवः ।
रमयन्ति मनः कान्ता नितान्तं योगिनामपि ॥

विशेषाभिधायि द्रव्यं यथा—

सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।

इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनां ॥

तदनुःप्रभेदकमपि विध्यनुरोधेन हानोपादानबुद्धिमुपकल्पयति । मननत्राणधर्माणः शब्ददेवतात्मानो मन्त्रास्तेऽपि चतुर्धा । वैदिकाः, पौराणिकाः, सैद्धान्तिकाः, लौकिकाश्च । तत्र वेदोपनिबद्धा वैदिकाः यथा—

सोमोददद्गन्धर्वाय गन्धर्वोऽददद्गग्नये ।

रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥

पुराणोपनिबद्धाः पौराणिकाः । यथा—

श्रियावियुज्यते नाथ न कदाचिद्यथा भवान् ।

तथा कलत्र सम्बन्धो देव मा मे वियुज्यताम् ॥

सिद्धान्तोपनिबद्धाः सैद्धान्तिकाः । यथा—

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थ साधनि ।

शरण्ये वत्सले गौरि नारायणि नमोऽस्तुते ॥

लोके विदिताः लौकिकाः । यथा—

गोनासाय नियोजितागदरजाः सर्पाय बद्धौषधिः

कण्ठस्थाय विषाय वीर्यमहिते पाणौमणीन्बिभ्रती ।

भर्तुर्भूतगणाय गोत्र जरती निर्दिष्ट मन्त्राक्षरा

रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः ॥

ते चतुर्विधा अपि कर्माणि प्रकाशयन्तो रक्षन्ति । विधिविहितस्यानुवचनमनुवादः । स विध्यर्थो, निषेधार्थः, स्तुत्यर्थो, निन्दार्थश्च । यद्द्रव्यं हि विधत्ते, निषेधति, स्तौति, निन्दति वा ; तत्र विध्यर्थो यथा—

इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचना गौरशरीरयष्टिः ।

अन्योन्यशोभा परिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥

निषेधार्थो यथा—

अथाह वर्णी विदितो महेश्वरः तदर्थिनी त्वं पुर एव वर्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्यतं तवानुवृत्तिं न तु कर्तुमुत्सहे ॥

स्तुत्यर्थो यथा—

उवाच चैनं परमार्थतो हरं

निन्दार्थो यथा—

अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना सहिष्यसे तत्प्रथमावलम्बनम् ॥

सोऽयमुपदेशश्चतुर्विंशतिविधोऽपि विधिरित्युच्यमानः साक्षाद्विकल्पेन समुच्चयेन विधया नियमेन परिसङ्ख्यया च निषेधति । यथोच्यते ।

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ विकल्पनियमे सति ॥

समुच्चयोऽसमावेशे परिसङ्ख्याविकल्पयोः । तत्र साक्षाद्विधानं यथा—

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।
द्वीपान्तरानीत लवङ्गपुष्पैरपाकृतस्वेदलवामरुद्भिः ॥

विकल्पविधानं यथा—

उभे एव क्षमे वोढुमुभयोर्वीर्यमाहितम् । सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ॥

समुच्चयविधानं यथा—

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे । समुद्ररशना चोर्वी सखी च युवयोरियम् ॥

नञादिनिषेधो यथा—

निवर्तयास्मादसमीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
उपेक्षते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥

नियमनिषेधो यथा—

जगति जयिनस्तेते भावानवेन्दु कलादयः
प्रकृतिमधुरास्सन्त्येवान्ये मनो मदयन्तिये ।
ममतु यदियं यातालोके विलोचनजद्रिका
नयनविषयं जन्मन्येक रसएव महोत्सवः ॥

परिसङ्ख्या निषेधो यथा—

अयं तया रथक्षोभादंसेनांसो निर्पीडितः ।
एकः कृती शरीरेऽस्मिन् शेषमङ्गं भुवो भरः ॥

. विधिश्च विधिरूपो निषेधरूपो वा प्रयोजकाप्रयोकतया द्विरूपः । तत्र च साधारणे कर्मण्येकस्य प्राधान्येन हेतुत्वं प्रयोजकता । स विधिरूपे यथा ।

त्वदपाङ्गाह्वयंजैत्रमनङ्गास्त्रवदङ्गने । क्षिप्रं त्वयान्यकस्तेन(सकेन)? सोप्यहं मनसिक्षतः ॥

निषेधरूपो यथा—

असह्यहुङ्कारनिवर्तितः पुरा पुरारिमप्राप्तमुखः शिलीमुखः ।
इमां हृदि व्यायतपातमक्षिणोद्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥

विधिषु प्रयोगविधेः प्रयोजकत्व मितरेतरेषां तु त्रयाणामप्रयोजकत्वं । तत्रोत्पत्तिविध्यपेक्षित भेदप्रतिपादकानि शब्दान्तरादीनि षट् प्रमाणानि । शब्दान्तर, अभ्यासः, संज्ञा, सङ्ख्या, गुणः, प्रकरणमितिस्वरूपपरो हि विधिर्भिनत्तिकर्मेति । तत्र शब्दान्तरभेदो यथा—

चंदं कीराणनहे पहिअण पहेमआण छेत्तम्मि ।
तुह कळमगो विछोकारवरसिअं नचळइपअम्पि ॥

तत्र नभसिक्षेत्रेचैकमेव वृन्दमिति प्राप्ते कीरपथिक मृगशब्दान्तरेभ्यो भेदः । अभ्यासाद् भेदो यथा—

अद्दंसणेणपेम्मं अवेइ अइदंसणेण विअवेइ ।
पिसुणजणजम्पिएणवि अवेइएमेअविअवेइ ॥

छाया :

अदर्शनेनप्रेमापैत्यतिदर्शनेनाप्यपैति ।

पिशुनजनजल्पितेनाप्यपैत्येवमेवाप्यपैति ॥

अत्र दर्शनादिभिः प्रेमार्तेति से वाच्ये अपेहीति पदाभ्यासः प्रेमभेदं बोधयति । कस्यचिद्दर्शनेन कस्यचिददर्शनेन कस्यचित्पिशुनजनजल्पितेन कस्यचिदेवमेवेति । संज्ञाभेदो यथा—

मैथिलीमुदवहद्रघूद्वहो लक्ष्मणो ललितवाचमूर्मिलाम् ।

यौ तयोरवरजौवरोजसौ तौकुशध्वजसुतेसुमध्यमे ॥

अत्र रघूद्वहत्वमैथिलीत्वाभ्यां भेदे प्राप्ते लक्ष्मण ऊर्मिलामुदवहदिति संज्ञातो भेदः सङ्ख्यातो भे ··· स्थाण—,

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।

कला च सा कान्तिमती कलावतः त्वमस्य लोकस्य च नेत्रकौमुदी ॥

अत्र कपालिसमागमप्रार्थनया भेदे प्राप्ते द्वयमिति सङ्ख्यातो भेदः । गुणाद्भेदो यथा—

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।

आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥

अत्र पाण्ड्योऽयमित्युक्तेऽनेकराजन्यसमानाभिहारात्र ज्ञायते कोसाविति । अंसार्पितलम्ब हारत्वादिभेदकविशेषगुणयोगात् धीः (?) । प्रकरणान्तराद्भेदो यथा—

शशिनमुपगतेयं कौमुदीमेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।

इतिसमगुणयोग प्रीतयस्तत्र पौराः श्रवणकटुनृपाणा मेकवाक्यं विवव्रुः ॥

अत्रेयमिति सर्वनामपदप्रयोगात् न ज्ञायते । का साऽत्यभेदे प्राप्ते स्वयंवरप्रस्तावादिन्दुमतीति प्रकरणान्तराद्भेदः । एवमेतद्भेदक प्रमा । .... रनो विवेकहेतुर्भेदः । स तु क्रियार्थोपाधिभेदात् कारकभेदाद्वाभवति । नात्र कनीयानपि विशेषः । येषाञ्चकार्येऽर्थेवेदस्य प्रामाण्यं तेषां मते । प्रभिन्दतीति सिद्धे च भेदे प्रधानाङ्गभावविवक्षा तत्र विनियोगविध्यपेक्षित शेषभावप्रतिपादकानि श्रुतिलिङ्गादि षट् प्रमाणानि, श्रुतिः, लिङ्गं, वाक्यं, प्रकरण, स्थानं, समाख्येति । परोपकारभावो विशेषः । स श्रुतितो यथा—

अनेन यूनासह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते।
शिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु॥

अत्रानेनेत्यादितृतीयाश्रुत्या पार्थिवस्याङ्गभावः प्रतिपाद्यते। तृतीया हि षष्ठीपदप्रधानादेव। लिङ्गतो यथा—

असौ विद्याधारःशिशुरपि विनिर्गत्य भवना
दिहायातः सम्प्रत्यविकलशरच्चन्द्र मधुरः।
यदालोकस्थाने भवतिपुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव॥

अत्र सौभाग्यसूचकाभिगामिकसमस्तपरगुणाभिधायिपदप्रयोगलिङ्गमाधित्यस्याभिप्राय विनिवर्तने नियोगः। प्रकरणतो यथा—

अध्यास्य चाम्भः पृषतोक्षितानि शैलेयनद्धानि शिलातलानि।
कलापिनां प्रावृषि पश्यनृत्तं कान्तासु गोवर्धन कन्दरासु॥

अत्र कलापिनृत्तदर्शनादिकं किमन्योपकारकमुतेन्दुमतीयौवनश्रीनिर्वेशोपकारकमिति सन्देहे प्रकरणादुत्तरः पक्षः इदं हि सभाव्यभर्तारमंमुद्यानमिति प्रकरणे पठ्यते। स्थानतो यथा—

असौ कुमारस्तमजोऽनुजातः त्रिविष्टपस्येव पतिं जयन्तः।
गुर्वींधुरं यो भुवनस्य पित्रा धुर्येण दम्यक्सदृशीं बिभर्ति।

अत्र राज्यधुरोद्वहनादिसादृश्यात्पितृसन्निधौ श्रूयमाणस्य स्थानतस्तद्गौरवाभ्यासुपपत्तिः। समाख्यातो यथा—

सच्चं सण्णा धण्णा जातइ अंकेम्मवेतगिरिधरणे।
गुरुभारवावडेण विअअञ्अंअंछं चिरंदिण्ठा॥

अत्र धन्येति समाख्यायलात्सदैव तस्याः प्रियप्रसादपात्रत्वमेव विनियोगः। एवमेतत्प्रधानविशेषभावात् विनियोजकं प्रमाणषट्कम्। अत्रापि कर्मणः कारकस्य वा शेषभाव इति समानं पूर्वेण। अवगते च प्रधानाङ्गभावे क्रमापेक्षा। तत्र प्रयोगाविध्यपेक्षिततम(?)प्रतिपादकानि

श्रुत्यर्थादीनि षट् प्रमाणानि । श्रुतिः, अर्थः, पाठः, स्थानं, मुख्यं, प्रवृत्तिकमिति । तेषां पर्येणानुष्ठानं क्रमः । स श्रौतो यथा—

सम्भाव्य भर्तारममुं युवानं मृदुप्रवालोत्तर पुष्पशय्ये ।
वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि यौवनश्रीः ॥

अत्र सम्भाव्येति पूर्वं काले क्त्वाश्रुतेः श्रौतः क्रमः । आर्थो यथा—

ईसं जणंति कडंति वंमहं त्रिप्पिअं सहावंति ।
विरहेणदंति मरिउं अहो इव्णा तव्सबहुमव्गा ॥

अत्रपूर्वं मन्मथवृद्धिस्तत ईर्ष्या प्राङ्मरणाभावः ततो विप्रियसहिष्णुत्वमित्यर्थः । क्रमः यथा अग्निहोत्रं जुहोति यवागूं पचतीति । पाठक्रमो यथा—

अनेन कल्याणि करे गृहीते महाकुलीनेन महीवगुर्वी ।
रत्नानुविद्धार्णवमेखलाया दिशस्सपत्नीभव दक्षिणायाः ॥

अत्र पृथ्वीसामान्यादक्षिणासाधर्म्याच्च पूर्वं पतित्वं पश्चात्करग्रहणमित्यर्थे प्राप्ते पाठसामर्थ्यात्पूर्वं करग्रहणं ततः पतित्वमिति क्रमः । स्थानक्रमो यथा—

सातुह क एणवाळअणिव्चंघरदारतोरणणिसव्णा ।
ओसूसइवंदणमाळिअव्वदिअहव्चि अवाई ॥

अत्र गृहद्वारतोरणनिषण्णत्वेन चन्दनमालासन्निधेः दिनेदिने सापि शुष्यति शुष्यते रणरणायते चेति क्रमः । मुख्य क्रमो यथा—

वेविरसिव्णकरंगुळिपरिग्गहव्खळिअळेहणीमव्गे ।
सेत्थिव्चिअणसमव्पइपिअसहि ळेहंमिकिंव्ळिहिमो ॥

वेपनशील खिन्न करांगुलि परिग्रहस्खलित लेखनीमार्गे ।
स्वस्त्येव नसमाप्यते प्रियसखि लेखे किं लिखामः ॥

अत्र स्वस्ति शब्दस्य माङ्गलिकत्वेन मुख्यत्वाल्लेखे प्राङ्निवेशस्ततोऽव्यवहितस्थाननाम्नोऽस्थप्रतियोगिनोऽनन्तरमक्षरस्य ततः सन्देशस्येति क्रमः । प्रावृत्तिक क्रमो यथा—

पढमं वामणविहिणा पच्छाहुकओ विअंभमाणेण ।
थणजुअळेणइण्मुहुमहणेणव्वबळिबंधो ॥

अत्र त्रिविक्रमप्रवृत्तावपि स्मरप्रवृत्तावपि प्राग्वामनत्वं ततो विजृम्भणं पश्चाद्बलिबन्ध इति क्रमः। सिद्धेषु च भेदाद्भिन्नाभावकर्मेषु शब्दानामनेकार्थत्वेन कदाचिदयौगपद्येनार्थानामनुष्ठेयत्वादि प्राप्तौ तदर्थं निर्धारणापेक्षा। तत्राधिकारविषयपेक्षितानि समस्तानेकार्थशब्दसाधारणान्यर्थप्रकरणादीनि षट्प्रकाराणि। अर्थः, प्रकरणं, लिङ्गं, औचित्यं, देशः, काल इति। निर्धारणं विभागतः पृथक्करणम्। तदर्थतो यथा—

गतिर्वेणी च नागेन वपुरूरू च रम्भया ।
पाणी प्रवालै रोष्ठौ च तस्यास्तुल्यत्वमाययुः ॥

अत्र गतिर्गजसदृशी, वेणी सर्पसदृशी, वपुः सुरस्त्री सदृशं, ऊरू कदली सदृशौ, पाणी पल्लवोपमौ, ओष्ठौ विद्रुमोपमाविति अर्थतोऽनेकार्थशब्दार्थं विभागः। प्रकरणाद्यथा—

ळच्छीए मुद्धकुवळअदळुज्जळाजहिमहणविरमम्मि ।
दिट्ठी जअइसअंवरमाळव्वहरिम्मिणिपडंती ॥

अत्र लक्ष्मीस्वयंवरप्रकरणतो हरिशब्देन विष्णुरुच्यते। लिङ्गतो यथा—

कळहो ळुज्जळगोरंकळहोळसिआसुरअराईसु ।
चुंबंतिअद्धअच्छंविअत्थजुअईमुहद्धवण्णा ॥

अत्र गौरसितशब्दाभ्यां कलधौतशब्दस्य स्वर्णरौप्य वाचकत्वेन यथाक्रमं युवतिमुखशरद्विभावयोरुपमानविभागः। औचित्यतो यथा—

सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरूः ।
आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्तमिवानुरागम् ॥

अत्राङ्गनारूपमौचित्यतः करभशब्देन धनुःकोट्यग्रभागो विधीयते। नोष्ट्रावयव इति। देशतो यथा—

पउमप्पहद्दिअंकं मअच्छिपुंडरीअपुंडरीएण ।
करसंधिएण मग्गसि पुंडरिअसमाउळेरण्णे ॥

अत्र देशतः पुण्डरीकशब्दोऽरण्यविशेषणे व्याघ्रमाह करस्थानेपद्म मातपत्रस्थानेछत्रमिति

विभागः । कालतो यथा—

कालअति सुओरव्रेहेरि डिण्णदरदिव्ठस्वणुअणिणळाए ।
पारावआणव्रिरुए हिणिवण्णइजाअन्विअणव्सुळाएणंत्रदेव्रउळं ॥

यथावा—

पाळेइअच्छभळ्ळं वउअह कुग्गामदेउळद्दारे ।
हेमंतआळरहिओ णिज्ञाअंनं पलालग्गिम् ॥

छाया :

पाटयत्यच्छभल्लमिव पश्यतकुग्रामदेवकुलद्वारे ।
हेमन्तकाल पथिको विध्मायमानं पलालाग्निम ॥

—: पञ्चविंशे प्रकाशे पतनुत्तर भागस्य मातृका न प्राप्ता :—

—: षड्विंशः प्रकाशोऽपि नामावशिष्टः मातृका नोपलब्धा :—



॥ श्रीः ॥

# महाराजाधिराज भोजदेवविरचिते

# ॥ शृङ्गारप्रकाशे ॥

## सप्तविंशः प्रकाशः

*　　*　　*　　*　　*　　*

*　　*　　*　　*　　*　　*

आदौ किञ्चिल्लुप्तम्

सङ्केतापचारो यथा—

चोरिअरअसद्दालुइ मापुत्तिअ भसु अंधआरम्मि ।
अहिअअरं लक्खिजसि तमभरिएदीव सी हेव्व ॥

छाया—

चौर्यरतश्रद्धाशीले मा पुत्रि भ्रमांधकारे ।
अधिकतरंलक्ष्यसे तमोभृते दीपशिखेव ॥

यथावा—

हलिअमुआमुहससिकंतिपहअतिमिरम्मि ।
इअ हअग्गामे ओ मामि कह वसिज्जइ संकेअअभंगदूमिआसाही ॥

सङ्केतमनोरथो यथा—

फलहीवाहणपुण्णाहमंगळे लंगले कुणं तीए ।
असईअमणो रहगब्भिणीएहूव्धा थरहरंति ॥

छाया—

कार्पासीक्षेत्रकर्षणपुण्याहमङ्गलं लांगलेकुर्वत्याः ।
असत्या मनोरथ गर्भिण्या हस्तौ थरथरायेते ॥

यथावा—

अंतो हुंतु घज्जइछिंदंते देअरेणइकिरंजं ।
हिअअब्भअमणोरहणविपरं मुहीमुह्ला ॥

सङ्केतोत्कण्ठा यथा—

संकेअऊसुअमणोगहवइधूआकडक्खसंचविओ ।
तंबंगअं णवेअइवीडाओअं परं दुहइ ॥

छाया—

संकेतोत्सुकमनोगृहपति रस्तुपाकटाक्षसंज्ञापितः ।
.... गतंनवेत्ति व्रीडायोगंपरंद्रुहति ॥

यथावा—

संकेअकुडुंगुव्ळीणसउणि कोळाहळं सुणंतीए ।
घरकम्मवाउदाए वहुए सीअंति अंगाइ ॥

सङ्केतहर्षणं यथा—

ओव्वेइजाकुसुंभं तापव्विअपुव्तिपुव्ळिआपूवा ।
मव्गेण मुहुवमंती कव्ळाइपरंपरातुव्था ॥

यथावा—

सिव्ळिग्गिगुळिमे गामे वोदुहपइरंमिपुव्ति दिव्णासि ।
रव्जअ पव्गवंसं तुव्गमाअं मुहुव्थिव्चिहिंसि ॥

सङ्केताश्वासो यथा—

किंरुअसिओणहमुहीधअलाअंतेसुधाळिछेत्तेसु ।
हरिआलमंडिअमुहीणडिव्वसण वाडिआजाआ ॥

छाया—

किंरोदिष्यवनतमुखी धवलायमानेषु शालिक्षेत्रेषु ।
हरितालमंडित मुखी नटीव शणवाटिका जाता ॥

यथावा—

असण्णकुडुंगे जुण्णदेउळेवहुजुआणसंकिण्णे ।
थेरोत्तिपईमारुअसुपुत्तिदिण्णासिसुग्गामे ॥

सङ्केतागमो यथा—

गोळणईए तूहेचव्वन्तो राइआएपत्ताइं ।
उप्पडइमक्कडोकोक्खएइपोट्टं च विट्टइ ॥

छाया—

गोदावरीनद्याः कच्छेचर्वयन् राजिकायाः पत्राणि ।
उत्पतति मर्कटः खोक्खशब्दंकरोत्युदरं च ताडयति ॥

यथावा—

ओसरइधुणइ साहं कोक्खामुहळोपुणोसमुल्लिअइ ।
जंपूपळंणगेण्हइ भमरोत्तिकईपढमदट्ठो ॥

छाया—

अपसरति धुनोतिशाखां खोखामुखरः पुनः समुल्लिखति ।
जम्बूफलंनगृह्णाति भ्रमरइतिकपिः प्रथमदष्टः ॥

सङ्केतभ्रंशो यथा—

सामाइ सामळीए अ०ध०चिपुळो इंरीए मुखसोहा ।
जंबूदळकअक०णाव अंसभमिरे हळिअउत्ते ॥

छाया—

श्यामायाः श्यामलायतेऽर्धाक्षिप्रलोकनशीलाया मुखशोभा ।
जम्बूदलकृतकर्णावतंस भ्रमणशीले हलिकपुत्रे ॥

यथावा—

गह्लाइमणोहळिअ०सि अडअणाणिअपङ्०सपञ्चय्खं ।
दु०मणमुहु०सवाणीरमंजरिं देइदिअर०स ॥

सङ्केतविघ्नो यथा—

वाहि०ता पडिवअणं णदेइ रुसेइ ए०कमे०क०स ।
अ०सईक०जेणविणा पइ०पमाणेणईकव्छे ॥

छाया—

व्याहृता प्रतिवचनं नददाति रुष्यत्येकैकस्य ।
असतीकार्येण विनाप्रदीप्यमाने नदीकच्छे ।

यथावा—

णि०प०च्चिमाइअसई दु०खाळोआइमुहुअपुप्फाइ ।
छिआबंधु०सवअ०ठिआइरुअरीसमु०च्चिणइ ॥

छाया—

निष्पश्चिमानी असती दुःखालोकानि मधूकपुष्पाणि ।
चितायां बन्धोरिवास्थीनि रुदती समुच्चिनोति ॥

सङ्केतोपन्नो यथा—

आअण्णे इअउअणाकुडुंगहेव्ठम्मिदिण्णसंकेआ ।
अग्गपअपेल्लिआणं मंमरअंजुण्णपत्ताणं ॥

आकर्णयत्यसती कुंजाधोदत्तसंकेता । अग्रपदप्रेरितानां मर्मरकं जीर्णपत्राणाम् ॥

यथा—

अण्णासंकाएतमंघआरवाअण्णपवणेण्णि ।
सव्तिणिऊहंतिच्चिअहसईतेणमहकाआ ॥

सङ्केतभङ्गो यथा—

चिंतेहिंअंगसंगो वअव्सअण्णिण्णिअंणिउवाअं ।
साउणतळहोपा . . णतेणदव्हातुसारेण ॥

यथावा—

अत्तातहरमणिज्जंअम्हअगामव्समंडणीभूअं ।
लुअत्तिलवाडिसरिच्चंसि सिरेणकअंचिसिणिसंडं ॥

श्वश्रु तथारमणीय मस्माकंग्रामस्य मण्डनीभूतं । लूनतिलवाटीसदृशं शिशिरेणकृतं बिसिनीषण्डं ॥

सङ्केतानुसङ्गो यथा—

वच्छइणइतेव्छनुकुमोण्पिआहवाहेपहम्ममाणीए ।
सण्णजुआणोकीरइ गामोच्चिअहळिअधूआए ॥

यथावा—

ओसएवसंतकासअसिडिळिअळंगळविळाहिगामाहिं ।
अण्णततोणीआभोइए सव्णळोआगहवइव्स ॥

सङ्केताशयो यथा—

दिव्ठम्मिघरपरोहडवाकुकरंजपइंमिसिंचंते ।
अण्णोण्णपेसिअव्छंदिअेरणग्रहुव्ल्लिआहसइ ॥

यथावा—

ठाणेदाणेवलिआवळणे वळणेसवेअसकुडुंगा ।
णगओसिअव्मगामंमिदिअरेणदिव्ठातुएसुरळा ॥

सङ्केतोपश्चयो यथा—

सोमुव्धमओमअतण्हिअणिआहितहदूमिओहआसाहिं ।
जहसव्भावमईणंविणईणपरंमुहोजाओ ॥

यथावा—

अव्वुंचणपुव्वंवणभितहदूमिआसाहिं ।
जहसाएठाइहव्ठे हुरुत्तविंचूअविडवव्स ॥

सङ्केतप्रार्थना यथा—

बहुपुत्र्कभरो णामिअभूमीगअसाहसुणसुविर्णचिं ।
गोळातडविअडकुडंगमहुअसिणिअंगळिज्जासु ॥

बहुपुष्पभरावनामित भूमीगतशाख शृणुविज्ञप्तिम् । गोदातटविकट निकुंजमधूक शनैर्गलिष्यसि ॥

यथावा—

सिकतिलतलाः सान्द्रच्छायास्तनान्तविलम्बिनः
शिशिरमरुतां लीलावासाः कणज्जलरङ्कवः ।
अविनयव्रतीनिर्विच्छेदस्मरव्ययदायिनः
कथय मुरले केनामीतकृतानिचुलद्रुमाः ॥

सङ्केतबहुमानो यथा—

चुंबइवास०णिमुहीदइअकपोळंव पंडुर०छाअं ।
असईणि मुत्रणपडवाअव०सवाआणिअं प०तं ॥

यथावा—

गामं शुणणिअलिअक॰णव॰कपड्डु॰थदूरमणिइ॰गो ।
ण॰ते॰ळपसि॰खिर होइओविगामो सुहं वसइ ।

सङ्केतकालमनयं यथा—

जंजंतणगअंपिवपू · · म॰तणिअ॰छएअसअं ।
आणीदवाहणि॰भरभरिअ॰छीवेतसवुडुंगं ॥

यथावा—

व॰धावि॰छइपंसुलिगामास॰णेसुरुणछेवूतेसु ।
म॰गसक॰णसरि॰छंदीसळव॰णंपळाअ॰स ॥

सङ्केतानुक्रोशो यथा—

तालूरभमाउलखडिअकेसरोगिरिणईएपूरेण ।
दरबु॰डुंउवु॰डणिवु॰डमहअरोहीरइकळंम्बो ॥

जलावर्तभ्रमाकुलखण्डितकेसरो गिरिनद्याः पूरेण । दरमग्नोन्मग्ननिमग्न मधुकरो ह्रियते कदंबः ॥

यथावा—

जइम॰गिअ॰णसरिअंजेणजहि॰छाइ॰दिअंसुरअं ।
ताएएणिस॰चेणभ॰मएर॰खवाणीरं ॥

सङ्केताक्षेपणं यथा—

भ॰जंत॰सवितुहस॰गगामिणोणइकरंजसाहाओ ।
पाआअ॰जविध॰मिअतुह कहँधरणिं विअछिवंति ॥

भंजतोपि तवस्वर्गगामिनोनदीकरञ्जशाखाः । पादावद्यापि धार्मिकतवकथं धरणीमेवस्पृशतः ॥

यथावा—

एग्हहमेत्तेगा मेणपडइभिक्खंतिकीसमंभणसि ।
धम्मिअकरंजभजअजंजीअसितंमपिदेबहुअम् ॥

एतावन्मात्रेग्रामे नपतति भिक्षेति किमितिमांभणसि । धार्मिककरंजभंजकयज्जीवसि तदपिते बहुलम् ।

सङ्केताभिरक्षा यथा—

पहिउ॰छ्रणसंकाउलाहिंअसईहिं बहलतिमिर॰स ।
आईपणेणणिहुअंवड॰ससि॰ताइँप॰ताइं ॥

पथिकच्छेदन शंकाकुलाभि रसतीभि र्बहुळतिमिरस्य । आलेपनेन निभृतं वटस्यलिकानि पत्राणि ।

यथावा—

धम्मिअभमवीसथ्यो सोमुणहोअज्ज मारिओतेण ।
गोदावरी इकच्छकुडुंगवासिणा दरिअमिहेण ॥

भ्रमधार्मिकाविस्रब्धः सशुनकोद्यमारितस्तेन । गोदातटविकटकुंजवासिनादृप्तसिंहेन ॥

सङ्केततात्पर्यं यथा—

असमिऊमसंतेहिंउच्छुडइतहणिरुध्दमाणंमि ।
संकेअकुडुंगेअड अणाएहिअअम्मिळिखत्तं ॥

यथावा—

खुज्जंति जडंतेहिं पळविआहोंतिपछ्वंतेहिं ।
गामासएपळासेहिंपंसुळीहिअअसम्भाव ॥

सङ्केतोपज्ञापो यथा—

उम्भूळंतिजहतीरतइवणिचहसितहअहंमण्णे ।
होहिसितुमम्पि मुरलेगंगमिवतवसिपरिवारा ॥

यथावा—

रअणाअरस्ससाहेमिणम्मए अज्जमुद्ददक्खिण्णा ।
वेअसळदाघरंतं णीआजंतुंसिपूरेण ॥

रत्नाकरस्यशंसामिनर्मदे अद्यमुक्तदाक्षिण्या । वेतसलतागृहांतंनीतायत्त्वमसि पूरेण ॥

सङ्केतोपालम्भो यथा—

एसाएमज्जाआमुध्धसहावाएपअसिसिराए ।
. . मुरळेत्रहसिपाणीअंडथ्थइकुडुंगो ॥

यथावा—

तंकच्थगअंतुहत्तरुणतीरवाणीरभंजणसमच्थं ।
णवऊरजळकावेरिअग्गकच्छेपळिप्पंते ॥

सङ्केतविप्रलम्भो यथा—

गामवडस्सपिउच्छाआवंडुमुहीणपंडुरच्छाअं ।
हिअएणसमंअसईणँपडइवाआहअंपत्तं ॥

ग्रामवटस्यपितृष्वस आपांडुमुखीनां पांडुरच्छायम् । हृदयेनसममसतीनां पतति वाताहतं पत्रम् ॥

यथावा—

. . . कइरघणवावणविअडसाहअइजणजणिअपरिओसं ।
जणसेसिअवेड सितणअप॰खओकेणछिणासि ॥

सङ्केताशीर्यता—

असतीइवंधवघणविअडसाहप॰तळजळासआण ।
दिअहेविणिसामुहसमकुडुंगजिवेहिम॰झजीएण ॥

यथावा—

जहइ॰छातहरमिअंणअगहिआ अ॰जजूवसंगहणे ।
तुहतावीतीरकुडुंगखुणएहिविड॰थ॰सं ॥

सङ्केतप्रश्नो यथा—

पडमु॰ळिअव्रासोहो॰ळाइबहळमअरंदसुरभिगंधाइ ।
गोळेकु . . . . णमिमोतुहपुळिणाइ ॥

यथावा—

अंगाणंतणुआरअसि॰खावअदीहरोइअ॰वाणं ।
विणआइ॰कमआरअमाणंपम्हसि॰जासु ॥

अंगानां तनुकारक शिक्षकदीर्घरोदितव्यानाम् । विनयाविक्रमकारक मामा पेनांप्रस्मारिष्यसि ॥

बिरहविस्फुरणं यथा—

वैरि०जंतोपुवंकएहिक०मेहिंकेहिंवराओ
सुम०छंतोदु०सह जणाणराएजणेपरइ ।
अरंभोज०सइमोणीसासाआससोसिअसरीरो
परिणाहेकहंहोहिइणआणिमोद०ढपे०म०स ॥

सखीसम्प्रश्नो यथा—

वअणेअपळंअंतसीसण्णावहाणंहुंकारं ।
सहिंदंतीणिव्रासंतरेसिकीसमहद्रुमेसि ॥

यथावा—

अण्णंजंबूमिजइएअंबुणसुअणावम्महरहस्सं ।
साहिपत्तगतहागुप्पंतं जहपुरीहोइ ॥

इतिवृत्ताख्यानं यथा—

आज्जसहिंसोजुआणोअचएठे . . रळमुत्तरंतीए ।
संडेपअडणभ०गछ्ळेणएआहिवाआहि ॥

यथावा—

दृट्ठुंचिरंणळद्धोमामिपिओदिट्ठिगोअरगओवि ।
दंडाहअवळिअहुअंगवक्करच्छेहअग्गामे ॥

सखीशिक्षा यथा—

मावञ्च पकिफलात्रिरळंइंदेवाउअंजळीहितुसंति ।
गोआअरीअपपुत्तअसीलुंमूळाइंकूळाइं ॥

मावजपुष्पलवनशीलरेवाउदकांजलिभिस्तुष्यंति । गोदावर्याःपुत्रक शीलोन्मूलानिकूलानि ॥

यथावा—

पुळ्ळंतनिरंतरतरुणवंजुळावणसिणिद्धकूळाए ।
गोळाणईइवसिरिसइत्तिमापुत्तिपत्तिअसु ॥

ध्वान्तप्रतीक्षा यथा—

अ॰जमएगंत॰वं घणंधआरेवितस्ससुहअस्स ।
अज्जा णिमीलिअच्छी पअपरिवाहिं घरे कुणइ ॥

अद्यमयागन्तव्यं घनांधकारेपितस्यसुभगस्य । आर्यानिमीलिताक्षीपदपरिपाटीं गृहेकरोति ॥

यथावा—

गच्छन्तीनां रमणवसतिं योषितां तत्रनक्तं
रुद्धालोकेनरपतिपथे सूचिभेद्यैस्तमोभिः ।
सौदामिन्या कनकनिकषस्निग्धयादर्शयोर्वी
तोयोत्सर्गस्तनितमुखरो माचभूर्विक्लवास्ताः ॥

ध्वान्तानुशोचनं यथा—

हारीहाउसहावहुळपओसहणिसा ।
म॰झग्रहाउवंधवघणदु॰दिणक॰थदीसिहसि ॥

यथावा—

पे॰दु॰देसेसुपरोहडेसुह॰ठेसुगामच्छासु ।
विरळअराळंधरअअंसारअकेणमुसिओसि ॥

ध्वान्ततस्कारो यथा—

गअणं चम॰तमेहं धाराळुळिआइ भुवणाइ ।
णिरहंकारमिअंकाहरंतिळीळाउअणिवाओ ॥

यथावा—

पातहा सहीणदूईणजणंणेअइअडक्कुडुंगो ।
जहतमणिवहोसहिणि॰धवंधवोवंधइजण॰स ॥

चन्द्रिकाभिसरणं यथा—

ग॰मिहिसित॰सपासं सुंदरिमातूरअसुव॰ढउमिअंको ।
दु॰देदु॰दंमिअचंदिआइकोपे॰छइमुहं ते ॥

गमिष्यसितस्यपार्श्वे सुंदरिमात्वरस्ववर्धतां मृगाङ्कः । दुग्धेदुग्धमिव चांद्रिकायां कःप्रेक्षतेमुखंते ॥

यथावा—

अदिहाविजंतोच्चिअगुरुपुरओपिअअमत्समवलिअइ ।
जोह्नासपह्नपडवहळंगटिओकामिनीसत्थो ॥

चन्द्रिकानिर्वेदो यथा—

बहुअंकळंकहरिअंधोच्चिअणिम्मळेहआसव्स ।
चंदसतहविमाएणअंपिणासामळाजोह्ना ॥

यथावा—

केत्तिअमेत्तं होहि इमाएजोह्नाजळणहसरंमि ।
जंचदवणाळो . . रणिवहपदंतणणिद्दाइ ॥

चन्द्रोदयनिन्दा यथा—

पिअसंगमोअहव्वाएअज्जसंवडइतावमेकंतो ।
जोजिअइगहिअकरणिअरखिचरीचंदचंडाळो ॥

यथावा—

मुहमेत्तेणवराओभूकिंकुणइदव्धचंदस्स ।
जोमीणमअरकंक . . विच्छूअसोहेहिविणखत्तो ॥

चन्द्रतिरस्कारो यथा—

चंदतुमंणगणिज्जसि मइमो बहळपत्तळच्छाओ ।
उप्पूडकण्णपत्तोवाससहस्संवडौजिअइ ॥

यथावा—

गहकल्लोइत्ति तुमं इव्ठोअसरीण जइविदप्पोसि ।
अब्भुपिसाअकणगहिअंमामुहअसुगहपइअं ॥

अभिसारणसाध्वसं यथा—

आअस्सकिण्णुकाहकिंवोच्चं कहणुहोहिमिअहंति ।
पढमुक्खिअसाहसकारिआएहिअअंधरधरेइ ॥

आगतस्यकिंनुकरिष्यामि किंवक्ष्यामिकथंनु भविष्याम्यहमिति ।
प्रथमसमयसाहसकारिकाया हृदयं धरधरायते ॥

यथावा—

बहुआएणइणिउंजेपढमुक्कलिअसीळखंडणविळक्खं ।
उड्डेइविहंगअउळंहाहापेदरुक्खेहिविभणंतं ॥

अभिसरणोत्साहो यथा—

आरूढविस्फुरितचापमनोजराजे
सज्जीकृते . . ममङ्ग च ।
उच्चैर्नितम्बजयहस्तिनिभेमकत्वा
मेणेक्षणे सरभसं निबिडं चकार ॥

यथावा—

कप्रस्थितासि करभोरु घने निशीथे
प्राणेश्वरो वसति यत्र मनः प्रियोमे ।
एकाकिनी वदकथं न बिभेषि वाले
नन्वस्तिपुङ्खितशरो मदनः सहायः ॥

अभिसारिकावृत्तान्तो यथा—

उहसंभमविक्खित्तंरमिअव्वअळेहळाएअसईए ।
णवरंगअंकुडंगेधअव्वदिण्णंअविणअरसा ॥

पदयसंभ्रमविक्षिप्तं रन्तव्यकलम्पटयाअसत्या । नवरङ्गकंकुंजे ध्वजमिवदत्तमविनयस्य ॥

यथावा—

तहकहविड्डुसुरअसहंसंसपणअकअअणाए ।
जाराओ जहणिअडिंभमोण्णुत्तरजम्भोआणिओगेहं ॥

वञ्चितावृत्तान्तो यथा—

अहसातहिंतहिंविअवाणीरवणंमिचुक्कसंकेआ ।
तुहदंसणंविमग्गइपब्भट्ठणिहाणठाणंव ॥

अयसातयतत्रैववानीरवने विस्मृतसंकेता ।  तवदर्शनं विमार्गति प्रभ्रष्टनिधानस्थानमिव ॥

यथावा—

वेदणिखातं किसलंकण्णेकाऊळिणहळिअसोह्लाए ।
. . . संदिअरोअक्काए दिव्ठीए ॥

परिभोगदर्शनं यथा—

अज्झाएणवेणख॰खअणिरी॰खणेगुरुअजोव्वणुत्तुङ्गम् ।
पडिमागअणिअणअणुप्पलंच्चिअंहोइथणवट्ठम् ॥

आर्यायानवनखक्षतनिरीक्षणेगुरुकयौवनोत्तुङ्गम् । प्रतिमागत निजनयनोत्पलार्चितं भवतिस्तनपृष्ठम् ॥

यथावा—

कान्चितहपडमसमाअमसुरअसुहेत्रापिएविपरिंओसो ।
जह . . अदिअहसपिळइ॰खिए॰वअ . . ॰मि ॥

सखीव्याजगर्भा यथा—

उग्पे॰ळिअग्गहकारेल्लिआइउ॰चेसुणसुदइअव॰छळिए ।
कंटअविळिहिअपीणु॰णअथणिउत्तमाए॰ताहे ॥

यथावा—

क॰मन्निणहोइरोमो द॰ठूणपिआए सव्वणं अहरं ।
स॰भमरपड्मो॰धाइरिवारिअवामेसहसुएहिं ॥

कस्यवानभवतिरोषः दृष्ट्वाप्रियायाः सव्रणमधरं । सभ्रमरपद्माघ्राणशीले वारितवामेसहस्वेदानीं ॥

अविनयनिगूहनं यथा—

ओ॰न्निणसुपडिअकुसुमंमाधुणसेहाळिअंहळ्सिोह्ले ।
एसअवसाणत्रिरसोससुरेणसुओवळअस॰दो ॥

यथावा—

अ॰ताधरणेव॰छं ताहि इदिअर॰सपुत्तअअवेहि ।
तुहक॰मवावउ॰तणतणुररएगळंतिवळआइ ॥

चिह्नविह्नषो यथा—

अ॰त॰सपडि . . माउअरि॰थाद्पोरीए ।
बाळअध॰णोसितुमं जेणजिअंती पिआदि॰ठा ॥

यथावा—

ढ॰कंर्ता अहरंआओग्गेण हेमंतपवणपु॰तिअ॰मि ।
अइउ॰ज्जुएकिळि॰जसिविअ॰पिउंदिअरजाआए ॥

एवंसङ्केतदानादिशेषाकूपारपारगा
इत्युद्भेदसमाधानप्रच्छादनविशारदा
देशकालेङ्गिताकारभावोपायाभियोगवित्
नारीनरेषुसर्वेषु नरो नारीषुसिध्यति ॥

आविष्कृतोयमभियोगविधिर्यथाव
दातःपरं पुनरमीरमणास्ति पूर्वाः ।
पूर्वानुरागतरुपल्लवभूतदूत
संप्रेषणप्रभृतयः प्रकटीक्रियन्ते ॥

इति श्रीमहाराजाधिराज श्रीभोजदेव
विरचिते शृङ्गारप्रकाशे
अभियोगविधिप्रकाशको नाम
सप्तविंशः प्रकाशः ॥

॥ श्रीः ॥

# महाराजाधिराज भोजदेवविरचिते

# ॥ शृङ्गारप्रकाशे ॥

## अष्टाविंशः प्रकाशः

स्वयं दर्शनस्यालाभे दूतसम्प्रेषणादयः। नयुदूतसम्प्रेषणनायकयोः कर्म। तदज्ञात-दूतविशेषकर्मणोः सघटनइति दूतविशेषाः दूतकर्माणि च प्रागेवाभिधीयन्ते।—तत्र जात्यादिभ्यो गात् दूतविशेषाश्चतुरशीतिः प्रायशो भवन्ति।—यथोच्यते—

जातिर्गुणः क्रियाद्रव्यं सम्बन्धोऽर्थः प्रयोजनं। प्रयोगोयोग्यतास्त्वेवं दूतभेदेषुहेतवः ॥

१ तेषु जातेः—देवः, मनुष्यः, किन्नरः, वानरः, शुकः, शारिका, पारावतः, हंसः, इति।

२ गुणतः—पितृपैतामहं, अदृष्टवैकृतं, अविसंवादकं, अलाभशील, अपरिहार्य, अमन्त्रविस्राविणं, धार्मिकं, भारसहिष्णु इतिमित्रसंपत्।

३ क्रियातः—सहपांसुक्रीडितं, उपकारसंबद्धं, जन्मान्तरार्जितं, सहाध्यायिनं, समानशीलव्यसनं, यश्चास्यरहस्यानि मर्माणिविद्वान्, यस्यविद्यादि व्यपत्यं च, सहसंवृद्धं इति।

४ द्रव्यतः—मालाकार, तांबूलिक, गान्धिक, सौरिक, पीठमर्द, विट, विदूषक, पाषण्डिनः, भिक्षुणि इति।

५ सम्बन्धतः—गुरुः, सखा, शिष्यः, आत्मा, ज्ञातिः, औरसः, कनीयान्, इति।

६ अर्थतः—अर्थः, अनर्थप्रतिघातः, सहायता, प्राप्तिः, प्रतारणं, आनृण्यं, कीर्तिः, प्रतीतिः, इत्यमीषामाख्येयानि।

७ प्रयोजनतः—दया, स्नेहः, कुतूहलं, अभिप्रायोपलम्भः, पूर्वप्रार्थना, अन्यतरप्रार्थना, शीलं, सद्दर्पः, इति अमीषामाख्येयानि।

८ प्रयोगतः—प्रच्छन्नः, प्रकाशः, हीनः, उत्कृष्टः, उद्धतः, उदात्तः, धृष्टः, शठः, इति।

९ योग्यतायाः—निसृष्टार्थः, परिमितार्थः, पत्रहारकः, मूकदूतः।

१० स्रोतादि—ईक्षणिका, भिक्षुकी, सखी, धात्रेयिका, विधवा, दासी, शिल्पकारिका, शिल्पिनी, इति। तेषु—विधवा, जातिमद्भ्यः; सखी, गुणवद्भ्यः; धात्रेयिका, क्रियावद्भ्यः; भिक्षुकी, द्रव्यनिमित्तेभ्यः; दासी, सम्बन्धकृत्येभ्यः; ईक्षणिका, अर्थहेतुभ्यः; शिल्पकारिका, प्रयोज . . भ्यः; शिल्पिनी प्रायोजनिकेभ्यः; प्रायेण, इति।

(१) १ तत्र देवाः सप्तर्षयः-यथा-कुमारसम्भवे-

ते हिमालयमामन्त्र्य पुनःप्रेक्ष्य च शूलिनं। सिद्धं चास्मैनिवेद्यार्थं तद्विसृष्टाःखमुद्ययुः॥

(१) २ मनुष्याः-भ्रू ! प्रभृतयः-हर्षचरिते यथा-

तस्य च सुताकुमारी रूपवतीसर्वलक्षणोपेता।
तां स भवतः प्रयच्छति . . . . प्रहितेसहारमाभिः॥

(१) ३ किन्नरमिथुनं—चारुमत्यां यथा-

कनककुण्डलमण्डितगण्डया जघनदेशनिवेशितवीणया।
अमरराजपुरीवरकन्यया तवयशो विमलंपरिगीयते॥

(१) ४ वानरः हनूमान्-रामायणे, यथा—

तस्याधिवासे तनूरुत्सुकासौ दृष्टामया रामपतिः प्रमन्युः।
कार्यन्यमारोयमुदीरितोवः प्रोक्तेन शेषेण किमुद्धतेन॥

(१) ५ शुकःजरत्कीरः-शूद्रककथायां-हरिमती वृत्तान्ते यथा—

जंग्रदणरवइविणओपआसइत्तेद वदकीरुरुणितारिभासइ . . . . हारि।
ळक्खजणजुत्तहोदिज्जउसं . . . अत वणिउत्तहो॥

(१) ६ शारिकामेधाविनी-बृहत्कथायां नन्दनप्रबोधने यथा—

किंक्रन्दसि निराक्रान्तानन्दनोराजतस्करः। अमृतेविषमुत्पन्नं यतोराजा ततो भयम्॥

(१) ७ पारावतरसमुद्रघोषः-त्रैलोक्यसुन्दर्यां यथा—

किंत्वंनैत्रयशोदयास्तुतवपुर्मार्गेणगाश्चारयन् किंवानोभवतावराहवपुषापृथ्वीयमभ्युद्धृता।
नोवाकंसचलंकरोषिसमरे विध्वस्तसैन्यंहठात् इत्थंवैबुधवन्दनीयमहिमात्वंदेव लक्ष्मीपतिः॥

(१) ८ हंसौ हेमन्तवसन्तकौ—दमयन्त्या नलोपगमने यथा—

> प्रसार्यहस्तंनिपुणेनतेन धृतस्तदैनं धृतविक्रमेण ।
> क्रमेण हंसो दमयन्तिकायाः सन्देशनं दिव्यगिराचचक्षे ॥

तेषां मध्ये मनुष्यः श्रेयान् । तस्यैववक्ष्यमाणगुणादि सम्पयोगात् । मित्रेहिदूतकर्मकामसूत्रकाराः कीर्तयन्ति ।—यदुभयोः साधारणमुभयत्रोदारं विशेषतो नायिकायां विस्रब्धं अशेषगुणयोगि मित्रं तत्रदूतकर्मेति ।

मैत्री समानसुखदुःखानां यथा—मनुष्याणां नैवं देवतामि . . . . मितिनिश्चयः । मनुष्याः हि प्रायशः . . कयुप्रभृतयः समानशील व्यसनवयसां वयस्यानामर्थे जीवितमपिपरित्यजन्ति । नरकमपि विशन्ति । नपुनर्देवाः तिर्यञ्चोवेति ।

(२) गुणवस्तु—(१) पितृपैतामहोवत्सराजस्य यौगन्धरायणः तापसवत्सराजे । (२) अदृष्टवैकृतः, बन्धुदत्तः शूद्रकस्य विनयवत्युपयमने । (३) अविसंवादकः, नलः देवानां नलोपाख्याने । (४) अलोभशीलः, शन्तनोर्देवव्रतः सत्यवतीवरणे । (५) अनपहार्यो, उदयनस्यवासवदत्ता पद्मावतीविवाहे । (६) अमन्त्रस्रावी, माधवादीनां भूरिवसुःमालतीमाधवे । (७) धार्मिकः, अभिमन्योः बीभत्सुरुत्तरोपयमने । (८) भारसहिष्णुः विश्वामित्रः रामलक्ष्मणयोः सीतोर्मिलाप्रदाने । इति ।

(३) क्रिया, (१) सहपांसुक्रीडा, कुवलयावली, महानुवत्या, लीलावत्यां । (२) उपकारसम्बद्धा, मदनमञ्जरी, विक्रमादित्यस्यकलिङ्गसेनालंभे । (३) जन्मान्तरार्जितः, महेश्वरः उमायाः कुमारसम्भवे । (४) सहाध्यायी, मदिरावतीभ्राता वसुवेगस्य मदिरावतीलम्भे । (५) समानशीलव्यसनः, मलयवतीकृतु . . जीमूतवाहनस्य नागानन्दे । (६) रहस्यमर्मवित्, कनकलेखादीनांशक्तिवेग श्चतुर्दारिकालम्भे । (७) विदितमर्मरहस्या, . . . . . नरवाहनदत्तस्यकर्पूरिकालाभे । (८) सहसंवृद्धा, धात्रेयिका लवङ्गिका मलयवत्या वकुलमालाप्रणये । इति ।

(४) द्रव्यवस्तु, (१) मालाकारः मयूरकः, कुसुमशेखरस्यकुन्दमालायां । (२) ताम्बूलिकः, ताडजयः देवसेनस्य शालिनीसंवादे । (३) गान्धिकः, गोधेरकः स्वयंप्रभायामीर्ष्यालु विप्रलम्भे । (४) सौरिकः, शाकुनिकः शकुन्तिकायां सातकर्णिहरणे । (५) पीठमर्दः, दन्तकः शूद्रवत्सस्य कामसेनाविप्रलम्भे । (६) विटः, मूलदेवः चारुलोचनस्य शाखाविशाखोपाख्याने । (७) विदूषकः वसन्तकः उदयनस्य सागरिकाविप्रलम्भव्यतिकरे । (८) पाषण्डीभैरवानन्दः चण्डपालस्य कर्पूरमञ्जरीसङ्गमने । इति ।

उक्तंच—"मालाकार, ताम्बूलिक, गान्धिक, पीठमर्द, विट, विदूषक, पाषण्डिनो मित्राणि, तद्योषिन्मित्राश्च नागरिकाःस्युः" इति ।

तेषु मालाकारादयस्सुप्रसिद्धाः । अविभवः तमालिका ? मेघ(कि)न ? क(का) पायमा ! अपरिच्छदः पूज्य : शादागतः कलासु विचक्षणः, तदुपदेशेन गोष्ठ्यां वेशेचवासयेदात्मानमिति।

पीठमर्दं भुक्तविभवस्तु तत्रस्यपवगुणवान् सकलत्रः गोष्ठ्यां वेशेचबहुमतः । तदुपजीवनः विटः एकादश विधस्तु क्रीडनकः विश्वास्यश्च । विदूषकःवैहासिकोवा । मुण्डजटिलव्यञ्जनः कुहकमहेन्द्रजालिकोवा पाषण्डी । तेहिप्रायेणनागरिकाणां मित्राणि, मन्त्रिणः, दूताश्च भवन्ति।

(५) स्वयम्भिषु सखा, कपिञ्जलःपुण्डरीकस्यमहाश्वेताभिषङ्गे । गुरुः, उपवर्षः उपकोशायाः कथापीठे । शिष्यः, गालवः कुशिकसूनोः माधवीनिष्क्रयणे । प्रेष्यः, कलहंसकः माधवस्य चित्र फलकानयने । आत्मा, महर्षिवेषो रावणस्य सीताहरणे । ज्ञातिः, महाश्वेता कादम्बर्याश्चन्द्रा-पीडानयने । औरसः, नाचिकेतुः पितुरेव मातुरुपयमने । कनीयान् , गोपालकः पालकस्य कथामुख . . . . ।

(६) अथातोऽर्थप्रयोजन प्रयोग योग्यतानामुदाहरणानि । तत्र अर्थाय यस्मै पुमान् प्रवर्तते सः अर्थ्यमानत्वादर्थः ।

पूर्व-निर्दिष्टस् य . . . . नैनमर्थो कर्मणेप्रवर्तयति तत्प्रवृत्तिनिमित्तत्वात् प्रयोजनं ।
प्रयोजनापेक्षया स्वस्वरूपवैषम्यापादि व्यत्ययः प्रयोगः ।
सम्भावनादिभिर्यथाख्यानमुपयोगो योग्यता ।

(१) तत्रार्थेषु यतः स्वकार्यसिद्धिः सोऽर्थः, यथा—

सोऽहं तृष्णातुरैर्वृष्टि विद्युत्वानिवचातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिंप्रतियाचितः ॥

(२) व्यसनप्रशंसन अर्थप्रतिघातः, यथा—

तस्मात्समुद्रादिवमध्यमाना दुद्वृत्तनकात्सहसोन्ममज्ज ।
लक्ष्म्येवसार्धं सुरराजवृक्षः कन्यां पुरस्कृत्य भुजङ्गराजः ॥

(३) कार्यसिद्धौ साधारण्यमुभयोः सहार्थता, यथा—

कस्यद्रोणोधनुषिनगुरुस्वस्तिदेवव्रताय
च्छन्नाभ्यासं कुरुतातिरयं श्रीसमूहैर्विलासैः ।
भोः कर्णाचार्यश्रुणुततदिमांब्राह्मणस्यास्यवाणीं
राधायन्त्रे रचयतपुनर्विद्धमप्यस्त्वविद्धम् ॥

(६) ४ देशकालात्मप्राप्तौचित्यज्ञानमाप्तिः यथा—

ततो नृपाणां श्रुतवृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक्सन्निकर्षंमगधेश्वरस्य नीत्वाकुमारीमवदत्सुनन्दा ॥

(६) ५ वञ्चनीयेषुकालहरणं प्रतारणम् , यथा—

हेराजानश्चरमवयसामाज्ञयासञ्चरध्वं कर्तव्येषु श्रवणसुभगं भूमिदेवाः पठन्तु ।
चित्रं नानावचननिवहैश्चेष्टतां मङ्गलेभ्यः प्रत्यासन्नस्त्वरयतिहिनोजन्ययाञाप्रवेशः ॥

(६) ६ उपकृतस्य प्रत्युपकारकरणमानृण्यं, यथा—

अद्यप्रभृत्यवनताङ्गितवास्मिदासः क्रीतस्तपोभिरितिवादिनिचन्द्रमौलौ ।
अह्वायमानियमजं क्लमसुत्ससर्ज क्लेशः फलेनहि पुनर्नवतां विधत्ते ॥

(६) ७ कर्मोपादनमात्रं कीर्तिः, यथा—

समाधवेनाभिमतेनसख्या रत्याचसाशङ्कमनुप्रयातः ।
अङ्गव्ययप्रार्थितकार्यसिद्धिः स्थाण्वाश्रमंहैमवतंजगाम ॥

(६) ८ कर्मातिशयादिभिः मनःप्रसादः प्रीतिः, यथा—

श्लाघ्यानां गुणिनां धुरिस्थितवति श्रेष्ठान्ववायेत्वयि
प्रत्यस्तव्यसनेमहीयसिपरं प्रीतो स्मिजामातरि ।
तेनेयंमदयन्तिकापिभवतः प्रीत्यैतवप्रेयसे
मित्रायप्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते ॥

(७) १ प्रयोजनेषु माभूदनयोः परस्परमयोगादत्याहितमिति दया, यथा—

मा वां सपत्नेष्वपिनामतद्भूत् पापंयदस्यां त्वयिवाविशङ्क्यं ।
तत्सर्वथासङ्गमनाययत्नः प्राणव्ययेनापिमयाविधेयः ॥

(७) २ नायकेननायिकायां हृदयबन्धनं स्नेहः, यथा—

विधाता भद्रंनो वितरतु मनोज्ञाय विधये
विधेयासुर्देवाः परमरमणीयां परिणतिं ।
कृतार्थौ भूयास्तां प्रियसुहृदपत्ये परमतः
प्रयत्नःकृत्स्नोयं फलतु शिवतातिश्च भवतु ॥

(७) ३ युक्ताविमौ परस्परस्येति कुतूहलं, यथा—

शारङ्ग्योत्स्नाकान्तं कुमुदमिवतं नन्दयतु सा
सुजातंकल्याणी भवतुकृतकृत्यरसचयुवा ।
वरीयानन्योन्य प्रगुणगुणनिर्माणनिपुणो
विधातुर्व्यापारः फलतुचमनोज्ञश्च भवतु ॥

(७) ४ लज्जादिभिः नायकयोरनिर्वादे वस्तुनोज्ञानमभिप्रायोपालम्भः, यथा—

तस्मिन्समावेशितचित्तवृत्ति मिन्दुप्रभामिन्दुमतीमवेत्य ।
प्रचक्रमेवक्तुमनुक्रमज्ञा सविस्तरं वाक्यमिदंसुनन्दा ॥

(७) ५ नायकयोः पूर्वपुरुषैः तत्रवस्तुनि प्रोत्साहनं पूर्वप्रार्थना, यथा—

यन्मां विधेयविषये स भवान्नियुङ्क्ते स्नेहस्य तत्फलमसौ प्रणयस्य सारः ।
प्राणैस्तपोभिरथवाऽभिमतं मदीयैः कृत्यंघटेत सुहृदोयदितत्कृतंस्यात् ॥

(७) ६ सैवनायके नायिकाया विदितान्यतर प्रार्थना, यथा—

दयावो स्नेहोवाभवति हिनिजेऽस्मिन् शिशुजने
भवत्यासंसाराद्विरतमपिचित्तं द्रवयति ।
अतश्चप्रज्ञ्ये सुलभसमयाचारविमुखः
प्रसक्तस्तेऽयत्नः प्रभवतिपुनर्दैवमपरम् ॥

(७) ७ फलनिरपेक्षा प्रवृत्तिश्शीलम्, यथा—

तांनारदःकामचरःकदाचि त्कन्यांकिलप्रेक्ष्य पितुस्समीपे ।
समादिदेशैकवधूंभवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥

(७) ८ परस्परस्पर्धा सङ्घर्षः, यथा—

अहभणइ अअळसामी कतिसुअसंतरंतमज्झम्मि ।
णाणेसिपाअमूळे जइगणिअत्ताणजीआमि ॥

(८) १ प्रयोगेपुरूपादि .... प्रच्छन्नो, यथा—

अथाजिनापाढधरःप्रगल्भवाक् ज्वलन्निवब्रह्ममयेनतेजसा ।
विवेशकश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमोयथा ॥

(७) २ प्रकाशो यथा—

इतोगमिष्याम्यथवेतिवादिनी चचालसाचस्तनभिन्नवल्कला ।
स्वरूपमास्थायचतां कृतस्मितः समाललम्बे वृषराजकेतनः ॥

(८) ३ हीनो यथा—

अतोत्र किञ्चिद्भवतींबहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने नचेद्रहस्यं प्रतिवक्तुमर्हसि ॥

(८) ४ उत्कृष्टो यथा—

तमातिथेयंबहुमानपूर्वया सपर्यया प्रत्युदियायपार्वती ।
भवन्तिसाम्येपिनिविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥

(८) ५ उद्धतो यथा—

क्रियच्चिरं श्राम्यसि गौरि विद्यते ममापिपूर्वाश्रमसञ्चितं तपः ।
तदर्धभागेन लभस्वकांक्षितं वरं तमिच्छामिचसाधुवेदितुम् ॥

(८) ६ उदास्तो यथा—

विधिप्रयुक्तां प्रतिगृह्यसत्क्रियां परिश्रमं नाम विनीयच क्षणम् ।
उमां सपश्यनृजुनैवचक्षुपा प्रचक्रमेवक्तुमनुज्झितक्रमः ॥

(८) ७ धृष्टो यथा—

निवार्यतामालि किमप्यसौवटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
नकेवलं यो महतोपभाषते शृणोतितस्मादपि यस्स पापभाक् ॥

(८) ८ वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितंवसु ।
वरेपुयद्बालमृगाक्षिमृग्यते तदस्तिकिं व्यस्तमपित्रिलोचने ॥

(९) १ योग्येषु निसृष्टार्थः प्रायो यथा—

(९) २ दूतसम्प्रेषणे-परिमितार्थो, यथा—

(९) ३ सन्देशदान पत्रहारको, यथा—

(९) ४ पत्रप्रणिधाने मूकदूतो यथा—

अग्रतोदूतीकल्प वक्ष्याम । एतेन एतत्प्रभेदा अपिव्याख्याता ।

कापुनरियंयोग्यता ? ननूक्तसम्भावनादिभिर्यथास्थानमुपयोगा योग्यता इति । क पुन स्सम्भावनादय —

सम्भावनार्थविश्वास प्रवृत्तिर्मन्त्रसङ्ग्रह ।
मनोन्निर्वाणमुत्साह आश्वास कार्यसिद्धय ॥ इति ॥

तत्र प्रेक्षापूर्वकारी दूतसम्प्रेषणादिषुवर्तमान ।

जातिमत्सु—दवादिष्वेव दौत्य सम्भावयति ।
गुणवत्सु —पितृनैनामद्रादिष्वेव विश्वसिति ।
क्रियानिमित्तेषु—सहपांसुक्रीडितादिष्वेव प्रवर्तत ।
द्रव्यनिमित्तेषु—मालाकारादिष्वेव मन्त्रसङ्ग्रहकरोति ।
सम्बन्धिषु—गुर्वादिष्वेव सशयच्छेदविधत्ते ।
अशपरेष्वेव—प्रत्याशामु सहते ।
प्रयोजनपरेष्वेव—आश्वसिति ।
प्रायोगिकेष्वेव—कार्यसिद्धि निश्चिनोति, इति ।

सम्भावनादीनामपि कोहेतुरितिचेत् ? यएव निसृष्टार्थादे दूतभेदस्य दूत्यभिप्रायण बुद्धिमत्तोवाग्मित्वश्च व्याप्रियन्त ।–यदाह–"सकुमिवातितउना" "पुनन्तो यत्र धीरामनसावाच कृत । यत्रासहाय " "सख्यानिजानतेभद्रैषा लक्ष्मीनिहिताधिवाचि"–किञ्च–

शास्त्रे प्रतिष्ठा सहजश्चबोध प्रागल्भ्यमभ्यस्तगुणाचवाणी ।
कालानुरोध प्रतिभानवत्व मेत गुणा कामदुघा क्रियासु ॥

तत्र बुद्धि ते शुश्रूषादयोऽष्टौ धीगुणाएव योग्यताया हेतु । शुश्रूषा, ग्रहण, धारण, विज्ञान, ऊहापोहौ, तत्वाभिनिवेश , इति । बुद्धिमान् हि–श्रोतव्य शुश्रूषत । शुश्रूषित शृणोति । श्रुत प्रतिगृह्णाति । गृहीत धारयति । धृत विकल्पयति । विकल्पित तर्कयति । तर्कितम पोहते । निश्चिनोति, इति ।–वाग्मित्वेतु पुण्यपरिपाक जन्मान्तरीया संस्कारा भ्यासयोग –यथोच्यत–

निवृत्तवर्णाभरणा सुखश्रुति प्रसादयन्ती हृदयान्यपि द्विषाम ।
प्रवर्तते नाकृतपुण्यकर्मणा प्रसन्नगम्भीरपदा सरस्वती ॥

षारावतौ, गान्धिक, सैरिकौचमूकदूतौ। पवसहपांसुक्रीडित, सहाध्यायिनौ, पितृपैतामह .........विदित... पीठमर्दरहस्यौ, अमन्त्रविस्राव्यविसंवादकौ च परिमितार्थौ। जन्मान्तरोपार्जितोपकारसम्बद्धौ अपरिहार्यादृष्टैहतौ च पत्रहारकौ। समानशीलव्यसन धात्रेयकौ, धार्मिकालोमशीलौ च मूकदूतौ। एवमात्मा गुरु रुदात्तोत्कृष्टौ च निसृष्टार्थाः। स्वाङ्गातिरुद्धत प्रकाशोच परिमितार्थौ। कनीयानौरसः शठधृष्टौच मूकदूताः प्रायेणैवेति। प्रायोगिकेषुच प्रायशः प्रच्छन्न प्रकाशोहि उत्कृष्टः दूतः स्वयंदूतोवा। उद्धतोदात्तौ धृष्टः शठश्च स्वयं दूत एवेति। प्रायग्रहणात्तु हसपारावतौ औरसकनीयसौ— शारिकाशुकप्रच्छन्न वानरादीनां च क्वचित्। तत्रैवशकशायन शाम्नवह... समुद्रघोषादयः उदाहरणं कथाविशेषयोगात्। यथोक्तम् पुरस्तात्। स्त्रीषु अनिमित्तेषु अपि ईक्षणिका, भिक्षुकी स्वयंदूतीवातदूती च प्रायशः निसृष्टार्थाः। सखीधात्रेयिकामूकदूती भार्यादूतीच परिमितार्थाः। विसहदासीच्छद्मदूती· व्याजदूतीच पत्रहारिणी च मूकदूत्य इति। तत्रनतथा प्रायण परभवनेषु पुरुषाणां प्रवेशः यथास्त्रीणामतोदूतीनांप्रेषणमेव श्रेयः, नदूतसम्प्रेषणमिति—उक्तञ्च—

त्रिपवेक्षणिका दासी भिक्षुकी शिल्पकारिका।
मालाकारादियोषास्युः सखीधात्रेयिकापिवा॥
साप्रवृत्तिनिमित्तेपुसत्सु दूत्ये नियोजिता।
प्रवेशमाशु विरह.. दूताकार्य....॥

. ...ताश्च यथासम्भव यथोपन्यासमथा, निसृष्टार्था, परिमितार्था, पत्रहारिणी, स्वयंदूती, वातदूती, मूकदूती, भार्यादूती, छद्मदूती, व्याजदूती, मन्त्रदूती, तत्रदूती चेति भवन्ति।–तत्र नायकस्य नायिकायावा यथामनोगतमुपलभ्य स्वबुध्या कार्यसम्पादिनी निसृष्टार्था। तस्याः स्वप्रबुद्धिगुणयोगात्।–यथा–

हिअएहि-किन्तिस्य कएणणिक्कि भणामि अळमहवा।
अविआरिअक्ज्जारं भआरिणी मरउणभणिस्सं॥

यथावा—

मच्चं जाणइदट्ठुं सरिमम्मिजणम्मिजुज्जएराओ।
मरउणउमं भणिम्सं मरणंविसिलाहणिज्जं से॥

सत्यं जानासिद्रष्टुं सदृशेजने युज्यतेरागः। क्रियतां नत्वां भणिष्यामि मरणमपिश्लाघनीयमस्याः॥
या दृष्टपरस्परयोः प्रविरलदर्शनयोर्वा सन्देशमात्रं प्रापयति सा बुद्धिगुणसम्पद्योगात् परिमितार्था-
यथा—

अथविश्रात्मने गौरी सन्दिदेशमिथस्सखीं।
दातामेभूभृतांनाथः प्रमाणीक्रियतामिति॥
तथाऽव्याहृतसन्देशा साबभौ निभृताप्रिये।
चूतयष्टिरिवाभ्याशे मधौपरभृतोन्मुखी॥

यातु सन्देशमवधारयितुमक्षमालेखमात्रं प्रापयति सा बुद्धिगुणवादसम्पद्योगात् पत्रहारिणी यथा—

ततस्तरलिकामह्यमर्पयामासपट्टिका।
तस्यां तु लिखितामार्यामिमामहमवाचयम्॥
दूरंमुक्तालतया बिससितया विप्रलभ्यमानोमे।
हंसइवदर्शिताशः मानमजन्मात्वयानीतः॥

एतासांतु तिसृणामपि प्रतिवाक्य प्रतिसन्देश प्रतिलेखैरुत्तराणियोजयेत्। तथाभिधास्यामः—
प्रायशः पुरस्तात्—बालां परिचारिकां अदोषज्ञां अदुष्टेनोपायेन प्रहिणुयात्। तस्याः स्रजिकर्णं
पत्रेवालेख्यं विदध्यात्। नखदशनपदानिपादन्यासस्समस्तबुद्धिगुणाभावान्मूकदूती। तस्यास्त-
यैवोत्तर प्रार्थनं। यथा—

सङ्केतद्रुममञ्जरीकृतशिरोभूषां भुजिष्यात्मजा
मालोक्य प्रहितां विटेनकुलटा प्रत्यागमिष्यत्पतिं।
रक्षन्ती नखदन्तकर्ममहतः प्रेम्णश्चभङ्गव्यथा
मानायास्सिरजस्वलेतिरजसा पौष्पेणपर्यस्यति॥

यथावा—

कान्तायाः परिचारिकामतिशिशुं दृष्ट्वागृहप्राङ्गणे
गूढंकेतकपत्रगर्भेलिखितं लेखं दधानांस्रजि।
आहूयप्रतिलोभनीय निचलैरादायतंमुञ्चते
तां सङ्केतनिकेतवेतसदलैः वलृप्तावतंसां विटः॥

संस्तुयोः प्रगाढसद्भावयोः देशकालसम्पादनार्थं माहृतापि या स्वयमेव नायकमभिगच्छेत्, अजानती . . . . सहोपभोगस्वप्नं कथयेत्। गोत्रस्खलनं विदध्यात्। भार्यावाच्य निन्देत। तद्व्यपदेशेन च स्वयमीर्ष्यां दर्शयेत् नखदशनचिह्नितया किञ्चि . . . . . . पित्रा तेऽहमादौ दातुं सङ्कल्पितेतिवाभिदधीत; ममवा त्वद्भार्यायावाकृती का रमणीयेति विविधालापैः पर्यनुयुञ्जीत। सास्वयंदूती-यथा—

पित्राहं परिकल्पितास्मि भवते दातुं बतैपात्वया
किमांग्म्यतगमवैपि यदियंमामीर्प्ययापश्यति।
स्वप्नेदानमभूत्वयाममयानामप्रभातेध्यने
धिक्त्वां कूरकलत्र . . . . . . . . . ॥

. . . . . . स्वय दूताभियोगे यथा—

नादेयं किमिदंजलं घटगतं नादेयमेवोच्यते
सत्यनामपियामिकल्पतृपः पीतेननाम्ना भवन्।
किवर्णा अपिसन्तिनाम्नि रहितं कितैरलंत्वंकुतो
यस्मादेवभवान्भगिन्यसि ततस्तेनैवमांबाधसे॥

प्रस्तुतार्थलिङ्गसंबद्धमन्यजनाग्रहणीयार्थमलौकिकार्थं ? वातदूती-तत्र प्रस्तुतार्थलिङ्गसंबद्धं यथा—

आसाइअ अणाए जेत्तिअंतेत्तिएणबधदिहि।
ओरमसु वसहएण्हि रक्खिज्जइ गहवईच्छत्तं॥

अन्यजनाग्रहणीयार्थं, यथा—

उज्जागरअकमाइअ गुरुअच्छी मोहमंडण विलक्खा।
लज्जइलज्जालुइणीसासुहअमहोहिविवराकी॥

उज्जागरकषायितगुरुकाक्षी मोघमंडनविलक्षा। लज्जतेलज्जाशीला मासुभगसर्व स्योऽपिवराकी॥

अलौकिकार्थं यथा—

इओच्चेउ।
ओच्चेइअप्पणोच्चिअ माएअउळ्ळुअस .... ॥

अतएव लौकिकार्जव मनार्जवंतु अलौकिकमिति ध्वर्थं।

यथा—

चुंचणवलिअं दिढकं चोबं घणदीहरं सुपरिणाहं ।

होइघरेसाहीणं मुसलं धण्णाणमहिळाणं ॥

तस्यास्तथैवोत्तराणियोजयेत् । ......इत्यंलघु इत्युदासीनतया व्याकरणसूत्रवक्ते....त्युदासीनतयाप्याह "संयोगेगुरुदीर्घंच" इति ।

यथावा—

निरर्थकं जन्मगतं नलिन्या ययानदृष्टं तुहिनांशुबिम्बं ।

उत्पत्तिरिन्दोरपिनिष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥

अनेन स्वयंदूत्युत्तरमपि व्याख्यातं । नायकः भार्यां मुग्धां विश्वास्य निर्यन्त्रणमनुप्रविश्यताम्... चेष्टितं पृच्छति, योगानशिक्षयति, साकारंमण्डयति, स कोपमेनां ग्राहयति, एवंचप्रतिपक्षस्येति श्रावयति, स्वयं च ताभ्यां नखदशनपदानिविधत्ते, तेन च द्वारेण नायकमाकारयति, सामूढदूती ।

यथा –

मुग्धां पृच्छतिवल्लभः स्वदयितामाहूयतच्चेष्टितं

व्याचष्टे च रहः प्रबन्धमधिकं संख्याय सन्नह्यति ।

तांसाकारमलङ्करोति कुलटातस्यास्तनूलङ्ग्योः

दत्ते दन्तनखक्षतानि वचनप्रेम्णानकोमुह्यति ॥

तस्यतथैवोत्तराणियोजयेत् ।

योगान् चतुष्षष्टिजान्

सङ्ख्याभेनसमाख्यदत्रभवती सम्यक्समग्रानिमान् ।

शिक्षस्वेहि तवेहकौतुकरसोजातःपृथुश्रोणिचे

दित्थं मुग्धवधूमुखेन दयितांधूर्तस्समाकर्षति ॥

स्वभार्यांवा मूढां प्रयोज्य तयासह विश्वासेन योजयित्वा तयैवाकारयेद्गात्मनश्च वैचक्षण्यं प्रकाशयेत्—सामार्यादूती—

पुच्छन्तीमहच्चिअस्स? चरिआइं ।

सव्वंगसुरहिणोमरु वअरस्स किंकुसुमरिद्धीए ॥

यथा वा—

जाणिमि कआवराहं जाणमिअळिआइ भणइ सअळाइ ।
अणुणंतेउणजाणे कआवराहांवि अप्पाणं ॥

जानामिकृतापराधं जानामि अळीकानि भणति सकलानि ।
अनुनयतिपुनर्जाने कृतापराधामिवात्मानम् ॥

तस्याः तथैवाकारग्रहणं—यथा—

किं मामलीकसुभगे मुखरीकरोषि भार्याजितस्यकमितुर्गुणकीर्तनेत ।
द्राक्षाफलंनयुवजन्मनियेनभुक्तं मन्येमधूकमपितस्यमहोत्सवाय ॥

दूत्या च्छद्मेन अन्यामतिसन्धाय तस्याः सन्देशकथनद्वारेण नायकं साधयेत् नांवोपहन्यात् साच्छद्मदूती—यथा—

दूत्येन प्रहिताहमस्मिभवतः कामंतयाकान्तया
दृष्ट्वा ? तामतिनिन्दितेपिहिपदंदत्तंमयावर्त्मनि ।
दृष्टोसित्वमभूत्कृतार्थमपिमेचक्षु स्त्रगेषार्प्यता
मित्थं दामविमोचनेनदयितं पीनस्तनीश्लिष्यति ॥

व्याजेनान्यमभिधत्ते सा व्याजदूती—यथा—

महाभागसुश्लिष्टतयारमणीयएवसन्निवेशः, कुतूहलिनी
इव नः भर्तृदारिकावर्तते च, तस्यामभिनवः विचित्रः
कुसुमेषुव्यापारः, तद्भवतु कृतार्थतावैदग्ध्यस्य, फलतु
निर्माणरमणीयता, समासादयतु सरसएव भर्तृदारि
कायाः कण्ठावलंबनमहार्घतामिति ।

अनयोरुत्तरं प्रतिपत्तिरेव, कथंत्विमे निसृष्टार्थे अपि पत्रहारिण्यौ, पत्रशब्देन छद्मच्छद्मव्याजयोः प्रवेशनिमित्तेनेष्टत्वात् । मन्त्राराधनादिभिः नायकयोस्संयोजयन्ती मन्त्रदूती, यथा—

दर्शयामि शशिनंमहीतले पातयामितपनंनभस्थलात् ।
आनयामि सुरसिद्धकन्यकां नास्तिमेनदुकरंजगत्त्रये ॥

तन्त्रादिप्रभेदादुभयोः संयोगसम्पादयित्री तन्त्रदूती, यथा—

गुरुचर्यातपस्तन्त्रमन्त्रयोगाभियोगजाम् ।
इमामाक्षेपिणीं विद्यामातनोमिहितायवः ॥

अनयोरन्तरंनास्तिनायकयोः पराधीनतयानीयमानत्वात् । मूकदूत्यौपुनरिमे तच्चेष्टानुकृतियोगात्। नचसृष्टार्थानामविषय स्सम्भवति । सहितार्थः पत्रहारको मूकदूतोवाभवितुं शक्नुयात् । एवं मितार्थः, पत्रहारकः, मूकदूतोवा, पत्रहारको मूकदूतोवेति, नतुमितार्थो निसृष्टार्थः पत्रहारकः मितार्थः निसृष्टार्थोवा समूकदूतः पत्रहारक मितार्थो निसृष्टार्थोवेति ।—एव भिक्षुकीक्षणिके, सखीधात्रेयिके, दासी विधवे, शिल्पिनी शिल्पकारिके च निसृष्टार्थाः ॥—भिक्षुकीक्षणिकावर्जमेव परिमितार्थाः । दासीविधवे, शिल्पिनी शिल्पकारिके मूकदूत्यो, ननु भिक्षुकी क्षणिके परस्परार्थ परिहारिण्यौ मूकदूत्यौवा । नसखी धात्रेयिके परिहारिण्यौ मूकदूत्यौवा । नदासी विधवे मूकदूत्याविति स्यात् । एवं स्वयदूतीवातदूत्यौ परिमितार्थे पत्रहारिण्यौवा, नमूकदूतीभार्यादूत्यौ पत्रहारिण्यौ मूकदूत्यौवा । नच्छद्मदूतिव्याजदूत्यौ मूकदूत्यौस्याताम् । नानिसृष्टार्थे मन्त्रदूती तन्त्रदूत्याविति । निसृष्टार्थास्तुसर्वाः स्वयदूत्यादयः भवेयुः । द्वेद्वेवर्जयित्वा परिमितार्थापत्रहारिण्यौ मूकदूत्यश्चेति । पमन ........नमस्वसाराजसम्यग्दास्तत्रैकदेशचारिण्यः दाक्षिदम्याधा कार्यम्याधिन्यः चण्डरण्डावृद्धपर्धकयः युक्तिमद्गणिकाः गणाङ्गनाश्चव्याख्याताः । रजकनापित स्वर्णकार मणिकार वैद्यवैरिक नर्तकगायनवादकवाग्जीवनवाणिज्यशीलवागुम्प श्च दूत विशेषाः इति ॥

अथातो दूतकर्माणि चतुर्विंशतिः ॥ तानि—(१) प्रवेशः—(२) विश्वासनं—(३) उपावर्तनं—(४) अनुवर्तनं—(५) कार्योपन्यासशुद्धिः—(६) अवस्थानिवेदनं—(७) इङ्गिताकारज्ञानं—(८) उपाय ज्ञानं—(९) प्रतारणज्ञानं—(१०) समाश्वासनं—(११) अत्ययप्रतीकारः—(१२) प्रयोज्यप्रेषणं—(१३) सन्धिरक्षा—(१४) प्रतापस्यावर्णनं—(१५) प्रयोज्योपजापः—(१६) पराक्रमणं—(१७) बन्धु रत्नापहारः—(१८) मित्रोपग्रहः—(१९) सुहृद्विभेदः—(२०) चारज्ञानं—(२१) गूढदण्डातिचारः—(२२) समाधानं—(२३) समाधिमोक्षः—(२४) दूतस्यकर्मयोगाश्रयः—इति

· · प्रवेशो विश्वासः प्रत्याहारोऽनुवर्तनम् ।
उपन्यासो मनस्स्थानामवस्थानं निवेदनम् ॥
देशकालेङ्गिताकारोपायज्ञानं प्रतारणम् ।
समाश्वासनमापत्सु प्रतीकारः प्रतिक्रिया ॥

प्रेषणं सन्धिपालत्वं प्रतापो मित्रसङ्ग्रहः ।
उपजापस्य चोच्छेदो गूढदण्डातिचारणम् ॥
बन्धुरत्नापहरणं चाग्ज्ञानं पराक्रमः ।
समाधिमोक्षो दूतस्य कर्मयोगस्य चाश्रयः ॥ इति ॥

तत्र दर्शितेङ्गिताकारायां प्रविरलदर्शनायां अपूर्वायां च प्रयोज्यायां दूतप्रयोगः । सर्वेनां शीलतोऽनुप्रविशेदिति प्रवेशः । तत्र च पदात्पदमाकाङ्क्षेदिति सङ्क्षेपः, षट्प्रकारः, अष्टादशप्रकारोवेति विस्तर. ।—यथा—

"विधिप्रयुक्तां प्रतिगृह्यमात्क्रया" इत्यनः आरभ्य
"इतिप्रविश्याभिहिता द्विजन्मना" इति पर्यन्तः कुमारसम्भवे—

उपोद्घातः पदंचैव पदार्थः पदविग्रहः ।
चालनाप्रत्यवस्थात्र व्याख्या तत्रास्यषड्विधा ॥

षण्णामपि पृथक्त्रैविध्यादष्टादशप्रकारत्वं । तदुपस्तावनामात्रमुपोद्घातः । सः अनुबन्धप्रसङ्गानुप्रसङ्गभेदात् त्रिविधः । तत्र अनुबन्धः—यथा—

अपि क्रियार्थंसुलभं समित्कुशं जलान्यपिस्नानविधिक्षमाणिते ।
अपिस्वशक्त्यातपसिप्रवर्तसे शरीरमाद्यखलुधर्मसाधनम् ॥

प्रसङ्गो यथा—

अपित्वदावर्जितवारिसम्भृतं प्रवालमासामनुबन्धिवीरुधाम ।
चिरोज्झितालक्तकपाटलेनते तुल्यांयदारोहतिदन्तवाससा ॥

अनुप्रसङ्गो यथा—

अपिप्रसन्नं हरिणेषुतेमनः करस्थदर्भप्रणयापहारिषु ।
यउत्पलाक्षि प्रचलैर्विलोचनैः तवाक्षिसादृश्यमिवप्रयुञ्जते ॥

प्रस्तुतस्यास्थिरीकरणं पद । तत् उपक्षेप, विक्षेपप्रक्षेपैः .......................

उपक्षेपो यथा—

यदुच्यते पार्वति शीलवृत्तये नरूपमित्यव्यभिचारितद्वचः ।
तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥

विक्षेपो यथा—

विकीर्णसप्तर्षिबलिप्रहासिभिः तथानगाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथात्वदीयैश्चरितैरनाविलैः महीधरः पावितएवसान्वयः ॥

प्रक्षेपो यथा—

अनेन धर्मरसविशेषमद्यमे त्रिवर्गसारः प्रतिभातिभामिनि ।
त्वयामनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥

तत्प्रयोगः पदार्थः सोपित्रेधा—उपक्रमः, प्रक्रमः, अनुक्रमः इतिः तत्रोपक्रमोयथा—

प्रयुक्तसत्कारविशेषमात्मना नमां परं सम्प्रतिपत्तुमर्हसि ।
यतस्सतांसन्नतगात्रिसङ्गतं मनीषिभिस्साप्तपदीनमुच्यते ॥

प्रक्रमो यथा—

अतोत्रकिञ्चित भवतींबहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयंजनः प्रष्टुमनास्तपोधने नचेद्रहस्यं प्रतिवक्तुमर्हसि ॥

अनुक्रमो यथा-

कुलेप्रसूतिः प्रथमस्य वेधसः त्रिलोकसौन्दर्यमिवोदितंवपुः ।
अमृग्यमैश्वर्यसुखं नवंवयः तपः फलंस्यात्किमितःपरंतव ॥

प्र . . . . . . स्येकारप्यनुपप . . . . . : तदपित्रेधावितर्कविस्मय प्रतिषेधभेदात् ।

तेषुवितर्कोयथा—

भवत्सनिग्राद्यपिनामदुस्सहान्मनस्विनांसम्प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेनचेतसा नदृश्यते तच्चकृशोदरित्वयि ॥

विस्मयो यथा—

अलभ्यशोकाभिभवेयमाकृतिः विमानना सुभ्रुकुतः पितुर्गृहे ।
पराभिमर्शो न तवास्ति कःकरंप्रसारयेत्पन्नगरत्नसूचये ॥

विप्रतिषेधो यथा—

किमित्यपास्याभरणानि यौवने धृतं त्वयावार्धकशोभिवल्कलम् ।
वदप्रदोषे त्रिनिकीर्णतारका विभावरीयद्यरुणायकल्पते ॥

प्रस्तुतेष्वसंहतं चालना—सापिज्ञाताज्ञात निश्चितभेदात् त्रेधा—तत्रविज्ञातविषया यथा—

दिवं यदिप्रार्थयसेवृथाश्रमः पितुः प्रदेशास्तवदेवभूमयः ।
अथोपयन्तारमलंसमाधिना नरत्नमन्विष्यति मृग्यतेहितत् ॥

अज्ञातविषया यथा—

निवेदितं निश्वसितेन सोष्मणा मनस्तुमेसंशयमेवगाहते ।
नदृश्यते प्रार्थयितव्यएवते भविष्यति प्रार्थितदुर्लभः कथम् ॥

निश्चितविषया यथा—

अहोस्थिरः कोपि नवेप्सितोयुवा चिरायकर्णोत्पलशून्यतां गते ।
उपेक्षतेयः श्लथलम्बिनीर्जटः कपोलदेशेकलमाग्रपिङ्गलाः ॥

कथंचिन्मर्षणं प्रत्यवस्था—सापित्रेधा—समीपस्था, श्लिष्टा, अन्तर्गताच । तासुसमीपस्था यथा—

मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्ट विभूषणास्पदां ।
शशाङ्कलेखामिवपश्यतो दिवा सचेतसःकस्य मनोनदूयते ॥

श्लिष्टा यथा—

अवैमि सौभाग्यमदेनवञ्चितं तवप्रियंयश्चतुरावलोकिनः ।
करोतिलक्ष्यंचिरमस्यचक्षुषो नवक्त्रमात्मीयमरालपक्ष्मणः ॥

अन्तर्गता यथा—

कियच्चिरं श्राम्यसिगौरिखिद्यसे ममापि पूर्वाश्रमसञ्चितंतपः ।
तदर्धभागेनलभस्वकाङ्क्षितं वरंतमिच्छामिचसाधुवेदितुम् ॥

प्रविश्यच . . . . पैः सुभगङ्करणयोगैः जनवादैः पूर्ववृत्तान्तैः कविकथाभिः पारदारिकाभि अविश्वासयेदिति विश्वासनम् । तेषु मिथ्यामिथःप्रश्नोत्तरादिभिः प्रयोज्ययोरतिसन्धानं कपटः। यथा—मालतीमाधवे द्वितीयाङ्के—

*मालती*—

लवङ्गिका—कुसलं भअवदीए ।

कुशलं भगवत्यै ।

कामन्दकी—(निश्वस्य) कुशलमिव ।

लवङ्गिका—(स्वगतं) पत्थावणाखुएसाकवडणाडअस्स ।

प्रस्तावना खल्वेषः कपटनाटकस्य ।

अवलोकिता—चिराअदं भअवदीए । णं भणामि अरस्स सरीरेमहाभाओ महवोत्ति ।

चिरायित भगवत्या । ननु भणामि अराग्यशरीरो महाभागो माधव इति ।

कामन्दकी—इदंगम्यते, वत्सेऽनुजानीहिमाम् ।

लवङ्गिका—(जनान्तिकं) सहिमालदि स्पदं भअवदीए सआसादो तस्समहाणुहावस्स उग्गमं जाणीमो ।

सखिमालति, सांप्रतं भगवत्याः सकाशात् तस्यमहानुभावस्य उद्गमं जानीमः ।

मालती—(जनान्तिकं) अत्थिमेकोऊहळं ।

अस्तिमेकौतूहलं ।

लवङ्गिका—(प्रकाशं) कोएसो माहवो णाम, जस्सिंभअवदीएवं सिणेहगरुअं अत्ताणअं धारेदि ।

कएषमाधवोनाम । यस्मिन्भगवत्येवं स्नेहगुरुकं आत्मानंधारयति ।

कामन्दकी—अप्रस्ताविकी मदस्येपाकथा ।

लवङ्गिका—महाविआअदसोदु, भअवदीपसादंकरेदु ।

तथाप्याश्चर्याय भगवतीप्रसादंकरोतु ।

कामन्दकी—"श्रूयताम्-अस्ति" इत्यतआरभ्य "सएषमाधवोनाम" इति मालतीं भावयति ।

लवङ्गिका—कुदो महोदहिं उज्झिअ पारिजाअस्स उग्गमो ।

कुतोयामहोदधिवर्जयित्वा पारिजातस्योद्गमः ।

इत्येवमादि तदुक्तम्—

बहिरसर्वाकारप्रवणरमणीयं व्यवहरन् पराभ्यूहस्थानान्यपि तनुतराणिस्थगयति ।
जनं विद्वानेकरसकलमतिसन्धायकपटैः तटस्थस्स्वानर्थान् घटयतिचमौनंचभजते ॥

आभिगामिकयोगस्सुमणङ्करणम् । यथा—तत्रैवतृतीय यष्ठाङ्कयोः—"अज्ज किलणचउद्दसित्तिजणणी पसमंमालदींसङ्करउरंगमिस्सदि । तदोपव्वंकिलसोहग्गंवड्ढउ इत्ति देवदाराहणणिमित्तं सहत्थकुसुमावअमंउद्दिसिअ भअवदी लवङ्गिआदुदीअंमालदिं तंएव्वकुसुमाअरुज्जाणं आणइस्सदि ।

अद्यक्षणचतुर्दशीति जनन्यासमंमालतींशंकरपुरंगमिष्यति । तत एवंकिलसौभाग्यंवर्धतुइति देवताराधननिमित्त स्वहस्तकुसुमापचयमुद्दिश्य लवंगिकाद्वितीयांमालतीं भगवती तदेव कुसुमाकरोद्यानमानेष्यति ।

यथाच–सहिएसोअङ्कराओ, इमाकुडममालाओ, ता इमंसि पाणिग्गहणमङ्गलारम्भे सोहग्गसंपत्ति णिमित्तं देवदाओ अच्चेहिं ।

सखि, एषाङ्करागः इमाः कुसुममालाः अस्मिन्पाणिग्रहणमंगलारम्भे कल्याणसंपत्ति निमित्तं देवतामर्चयेति ।

यथा तत्रैव–अहिपसाणरिंदवअणाणुरोहेण णंदणस्स पडिवण्णा मालदित्तिसअलोजणोअमत्तजुगुच्छइ ।

अस्त्यैतत् । यन्नरेन्द्रवचनानुरोधेन नंदनस्य प्रतिपन्नामालतीति सकलोजनाऽमात्यं जुगुप्सते ।

यथावा–

अनुरागप्रवादस्तुवत्सयोस्सार्वलौकिकः ।
श्रेयानस्माकमेवंहि प्रतार्योराजनन्दनो ॥

पुरा . . . . चकमे दुष्यन्तं शकुन्तला, रुक्मिणीकंसद्विषम् , उषा अनिरुद्धं, इत्येवमादिबुद्धिकल्पितमुदाहरणं । कविकथा–यथा–महाश्वेतापुण्डरीकं, चन्द्रापीडं कादम्बरी गुरुभिरप्रदत्ता प्रतिपत्तिमापेदे । वासवदत्ता च सञ्जयायचण्डा, मालतीराजसुहृदेनन्दनाय पित्रा प्रदत्तमात्मानमुदयनाय, माधवाय च प्रायच्छत् । परदारप्रयोजनमितिहासादि पारदारिकं–यथा–

अस्त्यहल्येति गौतममहर्षेः प्रियकलत्रं, तामिन्द्रश्चकमे । ननश्चं "अहल्यायैजार" इति निर्जानन्ति । अस्तितारेति वाचस्पतेः सुरपुरोधसः धर्मपत्नी साप्यजावर्तीमतिचरनः पत्युरमर्षात् कियन्तं कालं सोमेनसह उषित्वाबुधाभिधानमात्मजं सुषुवे । एवमञ्जना प्रभञ्जनेन, कृत्तिका परिषत् कृशानुना हनूमन्तंकार्तिकेयंचेति । विश्वस्यच कथमेवं विधः पतिरिति पत्यावनुशयं भावयित्वा, नतवसुमर्गो दास्यमपिशुल्कंकर्तुमिति ब्रूयात्" इत्युपावर्तनम् । तत्रोदाहरणच्छाया–

इदमिहमदनस्यजैत्रमस्त्रं महजविलासनिबन्धनं शरीरम् ।
अनुचितवरसम्प्रयोगशोच्यं विफलगुणाविभवंभविष्यतीति ॥

यथावा–

राज्ञ प्रियायसुहृदेमचिवायकार्यात् दत्वात्मजा भवतु निर्वृतिमानमात्यः।
दुर्दर्शनेन घटतामियमप्यनेन धूमग्रहेण विमला शशिन.क लेव ॥

भूयश्च यथापुरस्तादुपायेषु वक्ष्यामः।

यदाह कामन्दकी–

तथा ग्नियमन्म्रापि मयामाल्त्युपायत.।
नाताकतिपयाहेन सखीग्निसम्भसेव्यताम् ॥

"नायकया चरितमनुकूलतयाकामितानिच वर्णयेत्" इत्यनुवर्तन–यथा–

अन्येपुजन्तपु च यस्तमसावृतेपु विश्वस्य धातरिसम. परमेश्वरेपि।
सायप्रसिद्धनिभरः खलुचित्तजन्मा मालत्र्यातरकथचिदपह्नुतिर्भृत् ॥

यथावा–उचितस्तावदस्या भवतोऽभिषङ्ग इति अमात्यभूरिवसावर्धेमानस्येति। अपिच–मालती, मा ऽ रीतिमोऽमे भगवती कामन्दकी मालत्याअपिसदर्शनात् सुश्लिष्टमेतदिति॥—किञ्च—सहि- दिट्ठिआरअणुरूव अहि ळासो। सामर उज्झिअमहाणई कि अण्णदोचरिदव्वमेति! कावाहाणिसहआरमन्तरेण अदिमुत्तलअ णसहेज्ज णद्दमणा! रत्तुमारिसीभोपक्ख- पादगीभादोत्ति। सहिमालदीपत्तिरमणीअअणुराअपक्ख दोत्ति।

यस्ययस्यहियोभावस्तेनततनहि त नरम।
अनुप्रविश्यमेधावी क्षिप्रमात्मवशानयेत् ॥ इति ॥

*नित्तानुवर्तनाय स्वृतमन्त्रायाया नम्याकार्यशरीरमित्यवदत्। शृणुविचित्रमिदसुभगे त्वत्ति सम्यानुप्र! अमावित्यगाश्चुश्रोनायन् त्रमादमनुभवति.* द्वितीयभद्दनिवाचिवप्रे दृष्ट्या च प्रसादमस्या लक्षयित्वा पुनरपिकथा प्रवर्तयेत्। नायकस्य सौभाग्य श्लाघनीयतया प्रद्युम्नसम्प्रयाग भूयमभूतयाकीर्तयत्। शृण्वता वा अहल्याऽविमारक शाकुन्तलादीन्यया नित्त्वसात्कण्ठानिश्वसत्। तदेव भद्दत्या सुकुमार. परिक्षिप्तपूर्वस्तपस्वी, ततोधुना शस्यमनेन मरणमप्यनुभवितुम्। इतिच यगयत्। इङ्गिताकाराश्च लक्षयदिति–कार्योपन्यासशुद्धि।

यथा मालतीमाधवे—कामन्दकी—(मालत्याश्चिबुकमुन्नमय्य) "शृणु विचित्रमिद सुभगे अस्ति तावत् एकदाप्रभृतः कथितप्रथमया माधवाभिधानः कुमार, य त्वामियमामकीनस्य मनसः द्वितीय बन्धन॥

लवङ्गिका—सुमरामो । (स्मरामः)

कामन्दकी—अस्ति विदर्भाधिपस्य नरपतेरमात्यः सममपुरुषप्रकाण्डचक्रचूडामणिर्देवरातोनाम । यमशेषभुवनमहनीयपुण्यमहिमान मात्मनः सातीर्थ्यात् पितैवतेजानाति । योसौ यश्चयादृशश्चेति ।

अपिच—

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः
सुकृतविलसितानां स्थानमूर्जस्वलानाम् ।
अकलितमहिमानः केतनंमङ्गलानाम्
कथमपिभुवनेस्मिन् तादृशास्सम्भवन्ति ॥

तन उदयगिरिवैकएव स्फुरितगुणद्युतिसुन्दरःकलावान् ।
इहजगतिमहोत्सवस्यहेतुः नयनवतामुदियायबालचन्द्रः ॥

असौविद्याशालीशिशुरपिविनिर्गत्यभवनात्
इहायातस्सम्प्रत्यविकलशरच्चन्द्रवदनः ।
यदालोकस्थाने भवतिपुरमुन्मादतरलैः
कटाक्षैर्नारीणांकुवलयितवातायनमिव ॥

अत्र बालसुहृदामकरन्देन सहविद्यामान्वीक्षिकीमधीते । सएवमाधवोनामेति ।

सखलुमन्मथोद्यानयात्रादिवसात्प्रभृतिदुर्मनायमानः परवानिव शरीरोपतापेन—

यदिन्दावानन्दंप्रणयिनिजनेवा नभजते
व्यनक्त्यन्तस्तापंकथयतिनधीरोपिविषयम् ।
प्रियङ्गुश्यामाङ्गप्रकृतिरपित्वापाण्डुमधुरं
वपुःक्षामंक्षामंवहतिरमणीयश्चभवति ॥

लवङ्गिका—पदंवितरिंस अवसरे भअवदिं तवराअंतीए उदीरिअंआसि ।

कामन्दकी—यावदशृणवं मालत्येवास्य मन्मथोन्मादहेतुरिति । ममापिहि सएवनिश्चयः ।

अनुभवं वदनेन्दुरुपागम त्रियतमेव यदस्यमहात्मनः ।
क्षुभितमुत्कलिकातरलंमनः पयद्वस्तिमितम्यमहोदधेः ॥

नायकयोः विलोकनश्रवणदिवसादारभ्य मिथोभिलाषात् चिन्तादिजन्मनः मनोवाग्बुद्धिशरीरस्था-
कल्यम्यस्थानात् स्थानान्तरोपवर्णनमवस्थानिवेदनम्—

तच्च कार्योपन्यासशेष । यदाहकामन्दकी—"तदेव प्रह्स्यासुकुमारः कुमार' । तदत्र परिक्लिष्टपूर्वैस्तपस्वी । यतोधुना शक्यमनेन मरणमप्यनुभवितुम् । असौहि—

धत्तेचक्षुर्मुकुलिनि रणत्कोकिलेबालचूते
मार्गेगात्रं क्षिपतिबकुलामोदगर्भस्यवायोः ।
दावप्रेम्णासरसबिसिनीपत्रमात्रोत्तरीयः
ताम्यन्मूर्तिःश्रयतिबहुशोमृत्यवेचन्द्रपादान् ॥

यथैतन्मरणता दशमींकामसूत्रकारा कामयमानानां अवस्थामामनन्ति । यदाहु —तस्यदशस्थानानि । चक्षुःप्रीति —मनस्सङ्ग —सङ्कल्पोत्पत्ति —प्रलाप —निद्राच्छेद.—विषयेभ्योव्यावृत्ति'—लज्जानाशः —उन्माद —मूर्च्छा—मरण—इति ।

इहनुभावेषुमरणानभ्युपगमात् मृत्युयोग्यतैवमरणमुच्यते । चक्षुःप्रीति' पुनः मिथोऽभिलाषएव । कानितर्हि चित्तजन्मन दशस्थानानि । श्रूयताम्—षडिन्द्रियाणि, यथा, वाक्, बुद्धि', चेष्टा, इति । तत्र मनसिचिन्ता, अनुस्मरणं च । बुद्धीन्द्रियेषु विषयव्यावृत्तिर्निद्राच्छेदश्च । चक्षे लज्जाप्रणाश उन्मादश्च । वाचि गुणकीर्तनं विलापश्च । वपुषि व्याधिस्तनुता च । चेष्टायांजाड्यमूर्च्छा च । एवमेतमनोविकाराणीत्युच्यन्ते ।

तासु चिन्ता यथा—

सअणेचिंतामइअं काऊणतुमं णिमीलिअच्छीए ।
अप्पाणोउवऊढो पसिढिलवलआहिँबाहाहिँ ॥

अनुसरण यथा—

जेहिँ चिअजीविअइ तुहसंकप्प सगमसुहेहिँ ।
खणविघडिए ठाइ तेहिँणअणज्झइवराई ॥

विषयव्यावृत्तिः यथा—

सौधादुद्विजते त्यजत्युपवनं द्वेष्टिप्रभामैन्दवीं
द्वारात्त्रस्यति चित्रकेलिमदसोवेषं विषंमन्यते ।
आस्तेकेवलमब्जिनीकिसलयप्रस्तारशय्यातले
सङ्कल्पोपनतत्वदाकृतिरसायत्तेनचित्तेनसा ॥

निद्राच्छेदो यथा—

तुहविरहुज्जुग्गिरओ मिविणेविणदेइ दंसणसुहाइं ।
वाहेणजहालोअण विणोअणं पिसेविहअम ॥

त्वद्विरहोज्जागरकः स्वप्नेपिनददातिदर्शनसुखानि । वाष्पेण यथालोकन विनोदनमप्यस्या विहतम् ॥

लज्जाप्रणाशः यथा—

. . . . सेमज्जआणो बाळअग्गोळोणळोअमाजाआ ।
अहएभरि . . . . . . विसारिअच्छीतुहकएण ॥

उन्मादो यथा—

चन्द्रं चन्दनकर्दमेनलिखितं यन्मार्ष्टिदष्टाधरा
कामः पुष्पशरः किलेतिसुमनोवर्गंलुनीतिचयत् ।
वन्द्यं निन्दति यच्चमन्मथमसौ भङ्क्त्वाग्रहस्ताङ्गुलीं
स्तत्कामं सुभग त्वयावरतनुर्वातूलतालम्भिता ॥

गुणकीर्तनं यथा—

विलिम्पत्येतस्मिन् मलयजग्मार्द्रेणमहसा
दिशांचक्रंचन्द्रेसुकृतमथतस्यामृगदृशः ।
दृशोर्बाष्पः पाणौवदन ममवःकण्ठकुहरे
हृदित्वं होःपृष्ठे वचसि च गुणाएवभवतः ॥

विलापो यथा—

यथागुणैस्सर्वगतस्त्वमुच्यसे नवेत्सिभावस्थमिमंकथंजनम् ।
इति स्वहस्तालिखितश्चमुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥

व्याधिर्यथा—

तस्यास्तापमहर्निशं सकथयाम्मेणीदृशस्तेकथं
पद्मिन्यास्सरसंदलं विनिहितं यस्याश्शमायोरसि ।
आदौशुष्यति सङ्कुचत्यनुततः चूर्णत्वमापद्यते
पश्चान्मुर्मुरतां दधद्दहतिच श्वासावधूतं सखीः ॥

तनुता यथा—

. . . . . . . . . . . .
बाष्पाम्भोभिर्झडिति पतितैः सूच्यतेचस्तनान्तः ।
तस्याः किञ्चित्सुभगतदभूत्तानवस्त्वद्वियोगे
येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयाति ॥

जाड्यं यथा—

अच्छिन्नं नयनाम्बुबन्धुषुकृतं चिन्तागुरुभ्योर्पिता
दत्तं दैन्यमशेषतःपरिजने तापस्सखीष्वाहितः ।
अद्यश्वः किलनिर्वृतिं व्रजतिसाश्वासैःपरंखिद्यते
विस्रब्धोभव विप्रयोगजनितं दुःखंविभक्तंतया ॥

मूर्च्छा यथा—

कथमिवमनोमोहंतस्यास्सखेकथयामिते
दहनपतितादृष्टामूर्तिर्मयानहिवैधवी ।
इतिनुविदितं नारीरूपस्सलोकदृशां सुधा
तवशठनया शिल्पोत्कर्षो विधेर्विघटिष्यते ॥

इङ्गिताकारज्ञानमपि . . . . . . . . विशेषतस्तत्र प्रसिद्धायां द्वितीयेहनि वाचि, वक्त्रे, दृष्ट्यां च प्रसादमस्या लक्षयित्वापुनरपि कथां प्रवर्तयेदिङ्गिताकारांश्च लक्षयेदित्यमिहितात्! तेतु दर्शने प्रसीदति, विरहे उद्विजते, विहसितंकृत्वासम्भाषते, आदरेणोपमन्त्रयते। आसन्नमासनंददाति। दृष्टेपूरसवेषु स्मरति। मध्येषु . . . . . . द्वारगच्छति। कासि . . . . . . . . त्वरयितं! . . . . . . किंवाकृतमितिपृच्छति। विविक्तेदर्शयते। गुह्ममाचष्टे। शङ्कास्थानेषुनामिशङ्कते। कथायांरमते। परविज्ञापनायां . . . . पेक्षते। वाक्यंप्रतिगृण्हाति। पथ्यमुक्तं सहते। हस्तेनस्पृशति। श्लाघ्येनोपहसति। परोक्षेगुणान् ब्रवीति। . . . . . . . . तद्गकान् पूजयति। मानंवर्धयति। अर्थंकरोति। अनर्थंप्रतिहन्ति। कृत्येष्वात्मानं नियोजयति। आत्ययिकमनु बुङ्क्ते। श्रुत्वाचिन्तयति। जृम्भते। निश्वसिति। प्रीतिदायंच ददाति। पुनर्दर्शनानुबन्धं विसृजति। साधुवादिनीसती किमिदमशोभनममिधत्स इति कथामनुबध्नाति। नायकस्य चास्य . . . . . . . . . पूर्वसिवं च तत्सम्बन्धं दर्शनं कथां नियोगं चात्वपमकथन्ती तयाकथ्यमानं काङ्क्षति। नायकमनोरथेषुच सपरिमर्षंनामसहते। न च निर्वदति। तन्मित्रेषु विश्वसिति। तयासहक्रीडाममिनन्दति। स्वकर्मसुचैनां प्रभविष्णुरिव नियुङ्क्ते, इति। तदाहरणं यथा—

व्रजतिविरहेवैचित्र्यंनः प्रसीदतिसन्निधौ
रहसिरमते प्रीत्या दायंददात्यनुवर्तते।
गमनसमयेकण्ठेलग्ना निरुध्यनिरुध्यमां
सपदिशपथैः प्रत्यावृत्तिं प्रणम्यचयाचते॥

शाकुन्तलादीनितिहासवादान् प्रस्तवितानन्यपरैर्वचोभिः।
श्रुत्वामदुत्सङ्गनिवेशिताङ्गी चिरायचिन्तास्तिमितत्वमेति॥

. . हार्य! यथाचोदाहृतमिङ्गिताकारेषु स्थानस्थानेषु पुरस्तात् दर्शितेङ्गिताकारां नायकाभिप्रायैरुप- बृंहयेत्। साचेत् संस्तुतास्यात्। असंस्तुतांतुगुणकथनैरनुरागकथाभिश्च आवर्जयेत्। मनो- हराणि उपायनानि ताम्बूलमालेपनं स्रजमङ्गुलीयकं। . . . . . . तेषुनायकस्य नखदशनपदानि तानितानिच चिह्नानिग्यु·। पत्रच्छेद्यानिचनाभिप्रायाकृतीनि दर्शयेत्। लेखगर्भाणिच कर्ण पत्रादीनिच। तेषुतन्मनोरथाख्यानं प्रतिप्राभृतदानेचैनां नियोजयेदिति—उपायज्ञानम्—

तेषुच प्रादर्शितेङ्गिताकारां नायकाभिज्ञानैरुपबृंहयेत्। साचेत्संस्तुतास्यादितिसाम—

असंस्तुतस्तु! गुणकथनैरनुरागसङ्कथाभिश्चैनां नियोजयेदितिभेदः—

मनोहराण्युपायनानि ताम्बूलमनुलेपनं स्रजमङ्गुलीयकं वा सोपादेन प्रदि . . . नि। तानिच विदानि स्युरिति दण्डः—

पत्रच्छेद्यानि नानाभिप्रायाकृतीनिप्रेषयेत् भेददण्डौ। लेख्यगर्भाणि कर्णपत्रादीनीतिदानभेदौ।

तेषुच तन्मनोरथाख्यानमिति सामभेदौ—

प्रतिग्राभूतेचैनां नियोजयेदिति दानदण्डौ—

तेषप्रत्येकं प्रकारः पञ्चधाभवन्ति।—

गुणकीर्तनम्—सम्बन्धोपाख्यानम्—परस्परोपकारसन्दर्शनम् — आयतिप्रदर्शनम् — आत्मोपधानं चेतिसाम—

तेषामभिजात्यादिप्रशंसा गुणकीर्तनम्—यथा—

कुलममलिनं भद्रामूर्तिः मतिश्श्रुतिशालिनी
भुजबलमलं स्फीतालक्ष्मीः प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावामदस्यचहेतवो
व्रजतिपुरुषो यैरुन्मादं त एव तवाङ्कुशाः॥

मैत्र्यादि संकीर्तनं सम्बन्धोपाख्यानम्—यथा—

प्रयुक्तसत्कारविशेषमात्मना नमां परं सम्प्रतिपत्तुमर्हसि।
यतस्सता सन्नतगात्रिसङ्गतं मनीषिभिस्साप्तपदीनमुच्यते॥

स्वपक्षपरपक्षयोः अन्योन्यप्रहाख्यानं परस्परोपकार सन्दर्शनम्। यथा—

णावेक्खिओगुरुअणो इमीएणतुमेमिपुच्छिआवंधू।
एक्केक्कमेव्वचरिदे कि भणामि किं एक्कक्कस्स॥

अस्मिन्नेवं गते इदमेवं भविष्यतीत्याशाजननं, आयतिदर्शनम्। यथा—

सोयंस्वयंग्रहणदुर्ललितोदशास्यः त्वां याचतेदुहितरं पणपूर्वमेव।
सम्बन्धसन्धिममुनाच सहानुभूय वंशोनिमेर्जयतु यावदियंधरित्री॥

योऽहंसमधान यन्ममद्रव्यंतद्भवतः, स्वकृत्येपूपनियुज्यतामित्यात्मना उपधानं—यथा—

कियच्चिरं श्राम्यसिगौरि विद्यते ममापि पूर्वाश्रम सञ्चितं तपः।
तदर्धभागेन लभस्वकाङ्क्षितं वरंतमिच्छामिचसाधुवेदितुम्॥

मन्यविद्वेषण मन्यव्यावर्तन मन्योपभोगदर्शन मन्यानुरागकथन मन्यसौभाग्यप्रकाशनं चेतिभेदः—
तदुक्तम्—

विद्वेषंग्राहयेत्पत्यौ रमणीयानिवर्णयेत् ।
चित्रान् सुरतसम्भोगानन्यासामपिदर्शयेत् ॥
नायकस्यानुरागंच पुरश्चरतिकौशलम् ।
प्रार्थनंचपरस्त्रीभि रवष्टम्भंच वर्णयेत् ॥

तत्र विद्वेषंग्राहयेत्पत्याविति विद्वेषण—यथा—

दुद्दंसणेण ईसा लुएण घेरेण दुव्विअडढेण ।
ऊपोढापिअसहीसा हसं पअं कहणुजोएसि ॥

मन्यव्यावर्तनं—यथा—

कूररसकारणद्धे दिज्जेइअप्पापइस्स णिअअस्स ।
सुरअ सुहंपुणमुद्धौ हो . इ अक्खणिडएमाळे ॥

चित्रान् सुरतसम्भोगान् अन्यासामपिदर्शयेदित्यन्योपभोगदर्शनम्—यथा—

अपेतव्याहारं धुतविविधशीलव्यतिकरं
करस्पर्शारम्भप्रगलितदुकुलान्तशयनम ।
मुहुर्बद्धोत्कम्पं दिशिदिशिमुहुःप्रेरितदृशो
रहल्यासुत्राम्णोः क्षणिकमिहतत्सङ्गतमभूत् ॥

नायकस्यानुरागं च पुरश्चरतिकौशलं इत्यन्यानुरागकथनम्—यथा—

ससिमुहिमुहरमळच्छी धणमाळिणधण . . . . . ।
तणुओअरितणुआअइ हलिअसुओकुणसुजुत्तं ॥

प्रार्थनंचापरस्त्रीभिरवष्टम्भं च वर्णयेदित्यन्यसौभाग्यकथनं यथा—

असौ विद्याधारश्शिशुरपि विनिर्गत्यसदना दिहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः ।
यदालोकस्थाने भवति पुरमुन्मादतरलैः कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥

. . . . . . गृहीतानुवर्तनमावर्तनप्रतिपादनं स्वद्रव्यदानं ।

आत्मपरस्वेषुस्वयंग्राहरा . . . भेतिदानम् । तेषुजितन्यस्तप्रयुक्त प्रतिश्रुतादीनां समर्पणं देयविसर्गः—यथा—

दीपोत्सवेद्यभवता शतमेकविंश द्यूतेजिता कितव सा स्वयमाहृतानि ।
गोदावरीतटवनेषु गताविचेतुं मुक्ताकदम्बकुसुमानि सकेसराणि ॥

अदत्तस्वीकृतस्यार्पणं गृहीतानुवर्तनं—यथा—

सङ्गमुपासुभगभीमरथीनिकुञ्जे सख्यास्तनांशुकमगृह्यत यत्त्वयानः ।
स्वप्नेददासि . . . . यन्नशठत्वमेव तुप्यामुनाकिमिति दुर्लभदर्शनोसि ॥

स्वयंगृहीतस्य प्रत्यर्पणमार्तप्रतिपादनम् । यथा—

इत्यूचिवानुपहिताभरणःक्षितीशं श्लाघ्यो भवान् सुजन इत्यनुभाषितारम् ।
संयोजयांविधिवदाससमेतबन्धुः कन्यामयेनकुमुदःकुलभूषणेन ॥

आत्मीयस्यहारकेयूरादेः प्रयत्नतोवितरणं स्वद्रव्यदानम् । यथा—

आमुच्यतामिहसुधारसधाम्निकण्ठे कादम्बरीप्रहितएष सशेषहारः ।
अस्याःकुमार तवनिर्जितमन्मथायाः मूर्तेर्गुणानुगुणमाभरणं किलेति ॥

ममान्यस्ययायदस्ति तद्दृश्यतामिति आत्मपरस्वेषु स्वयंग्राहदानं यथा—

यद्गन्धप्रमितसुहृत्प्रमोहदग्धं सौजन्याद्विहितवती गतन्यथंमाम् ।
तत्कामं प्रभवतुपूर्णपात्रवृत्त्या स्वीकर्तुं ममहृदयंचजीवितंच ॥

शङ्काजननं, अभिभर्त्सनं, अर्थापहरणं, परिक्लेशनं, उपघातश्च दण्डः । तेषुवचन विभीषिक शङ्काजननम्—यथा—

पौलस्त्यः प्रणयेनयाचत इति श्लाघ्येनयेनादरः
सम्बन्धे सतियत्त्रिलोकपतिना सौख्येनतत्रस्पृहा ।
गन्तव्यापुनरन्यथापि नियतं लङ्कातयासीतया
तन्माभूदिहनः पुरन्दरपुरीबन्दीप्रयुक्तोविधिः ॥

प्रणयकोपादिभिराक्रोशनमभिमर्सनम्–यथा–

णिक्किवजाआभीरुअ दुद्दंसणणिंबईडसारिच्छ ।
गामोगामिणिणंदण तुज्झकएतहवितणुआइ ॥

निष्कृप जायाभीरुक दुर्दर्शन निंबकीटसदृक्ष । ग्रामो ग्रामणीनन्दन तवकृते तथापितनुकायते ॥

वस्त्रविभूषणादेर्येलच्छलादिभिःआदान मर्यापहरणम्–यथा–

भोगंगारोळपअच्छसु नो पत्थानिजानिभज्जंदि ।
णंतएवपहितानि अंहेहिसग्गेगंतव्वं ।
कथसिनानसगकेसुं परिहितेसुथत्तवचामो ।
अवचमानीओउनभआ मासतकंतुनो सापातो ।
पभत अंचसंवरिकाअं सिळ भूद्दाइहन्वेअवचिट्ठिरसामो ॥

इत्यप्सरोभिरुक्ते–टिण्ठाकरालः कलिङ्गसेनालंमेप्राह–

पअच्छामिओ पत्थानिजमेदिमेएक्कं । अच्छरभरिअस्सं तअच्छथेति ॥

कामचारादेः विघातः परिक्लेशनम्–यथा–शाकुन्तले–

प्रियंवदा–शकुन्तलामुपसृत्य–हळाचंडि
तुमं . . ळहसिगंतु रुक्खसेअणेमेद्धे ।
धारेसि मोम्मितापमोएहिअत्ताणअं
अ . तोगमिस्सहिति वलादेनांनिवर्तयति ॥

वधोद्योगः उपघातः–यथा–

इतिपरुषमुदीर्यराजपुत्रीं मरणवितीर्णमनाः परेतभूमौ ।
त्रिभुवनपतिरुज्जगाम पीठात् झटितिविमोचित चन्द्रहासकोशः ॥

एतेषांच व्यस्तानांच क्रमेणक्रमेणच प्रयोगो यथा–

कन्यारत्नमयोनिजन्म भवतामास्तेवयंचार्थिनः
रत्नंयत्कचिदस्तितत्परिणमत्यस्मासु शक्रादपि ।
कन्यायाश्च परार्थतैव हि मता तस्याःप्रदानादहं .
बन्धुर्वोभविता पुलस्त्यपुलहप्रष्ठाश्च सम्बन्धिनः ॥ इत्यादि

उपायाश्चप्रयुज्यमानाः अवश्यंदेशकालयोः विशेषमपेक्षन्ते । परस्परपक्षयो (!) भिदूति (!) प्रत्ययः समागमः . . . . . . . . . . तास्वप्रतीकारे गृहोद्यानगुल्मलतानिकुञ्ज निष्कुटादिषु सखी भिक्षुकी क्षणिकातापसीभवनेषु देवतायतने, देवयात्रायामुद्यानक्रीडायांजलावतरणे विवाहयज्ञोत्सव व्यसनेषु अग्न्युत्पाते चोरविभ्रमे जनपदस्यचक्रारोपणे प्रेक्षव्यापारे . . . . . . . . . .

प्रेयान्मनोरथ सहस्रवृतरसएष सुप्तप्रमत्तजनमेतदमात्यवेश्म ।
प्रौढंतमः कृतज्ञतयैवभद्र मुत्क्षिप्तमूकमणिनूपुरमेहियामः ॥

तत्र देशस्सन्निकृष्टः विप्रकृष्टः, सुगमः दुर्गमः, सापायः निरपायः, सेव्यः असेव्यः इति । कालः चरः क्षिप्रः, साधारणः, सावधिः, निरवधिः, अतीतः, भावी, वर्तमानः, इति । तेषु ।

सन्निकृष्टे यथा—

मदलेखागृहीत्वातं हारं गत्वातदन्तिकम् ।
तथोवाच यथानेन प्रत्युक्तासा नकिञ्चन ॥

विप्रकृष्टे यथा—

उत्तिष्ठयदिजीवन्तीं मामिच्छसि तमानय ।
अहंनेतुमशक्ताहिसुदूरमिदमन्तरम् ॥

सुगमो यथा—

दिनेष्वथव्यतीतेषुपत्रलेखातदन्तिकम् ।
आयात्केयूरकोप्याशुदीर्घाध्वश्चानवाहनः ॥

सेव्यो यथा—

इतो नदूरे गन्धर्वराजधानी तदद्यताम् ।
दृष्ट्वास्मदनुरोधेन श्वोगन्तासिस्ववाहिनीम् ॥

असेव्यो यथा—

तवश्रुत्वाजनसम्मर्दभीरु . . . . ।

कालक्षरो यथा—

स्थितायां त्वयिजीवामित्वत्स्पर्शेन यथातथा ।
विगतायां चिरंकालं नक्षमन्तेममासवः ॥

क्षिप्रो यथा—

ततोह मिदमेवात्र प्राप्तकालमितिद्रुतम् ।
राजपुत्रि सुहृत्प्राणरक्षणार्थमिहागतः ॥

साधारणो यथा—

त्वं दूरमपिगच्छन्ती हृदयं नजहासिमे ।
दिनावसानेछायेव पुरोमूलंवनस्पतेः ॥

सावधिर्यथा—

एकैकमत्रदिवसेदिवसेमदीयं नामाक्षरंगणयगच्छतियावदन्तम् ।
तावत्प्रियेमदवरोधगृहप्रवेशनेताजनस्तवसमीपमुपैप्यतीति ॥

निरवधिर्यथा—

नवेद्मिसप्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यसेसखीं वृषेवसीतां तदवग्रहक्षताम् ॥

मतीतो यथा—

वद तेन क्रिमुक्तासि सकिमुक्तस्त्वयापिवा ।
तदन्तिकेच्च विस्रब्धमुषितासि कियच्चिरम् ॥

भावी यथा—

परिणेष्यति पार्वतींयदा तपसातत्प्रवणीकृतोहरः ।
उपलब्धसुखस्तदास्मरं वपुषास्वेनसमग्रयिष्यति ॥

वर्तमानो यथा—

> गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुंतपस्यन्तमधित्यकायाम्।
> अन्वास्त इत्यप्सरसांमुखेभ्यः श्रुतं मयामत्प्रणिधिस्सवर्गः ॥

देशकालस्थो पलब्धये मिथ्यासाध्यस्यमुग्धत्वानपेक्षतया आर्जवत्वादिप्रशमनैः प्रयोज्यादीनामति-सन्धानं प्रतारणं—यथा—उच्यते—

विधवेक्षणिकादासी भिक्षुकी शिल्पकारिका प्रवेशमात्रं विश्वासं दूतकार्यं दूती न विन्दति सा प्रयोज्यायां प्रागेवसम्भाष्य द्रष्टव्यदर्शन फलानिलोचनानीरयुदारारामणीयकदर्शने नियोजयेत्। सभवनस्यामेवच ब्रूयात्, अहममुष्यां क्रीडायां ते राजभवनोपवन दीर्घिकासरित्परिसरस्थानानि रमणीयानि दर्शयिष्यामि। ततश्च प्रवालकुट्टिमं मणिभूमिकं वृक्षवाटिकां मृद्वीकामण्डपं समुद्रगृहकं प्रासादान् गूढभित्तिसञ्चारान् चित्रगृहाणि क्रीडामृगान् यन्त्राणि शाकुनिकानि व्याघ्रसिंहपञ्जरादीनियानियानि पुरस्तादुपवर्णितानिस्युः तान्यस्याः सानुप्रशंसमादरेण दर्शयेत्। एकान्ते च तद्गतानुरागशंसि चित्रफलकादिकं सम्यक्प्रकाशयेत्। अमङ्गलावं च प्रतिपक्षं याजयेत्। सम्प्रयोगे च आयतिं वर्णयेदिति प्रतारणप्रकारः। उदाहरणच्छाया—मालतीमाधवद्वितीये अङ्के—

लवङ्गिकाबुद्धरक्षितादीनां वाक्यानि . तत्र—

"सहि सलाहणिज्ज दळहमणोरहफलं जीअलोअस्ससरस महाभाअ वल्लह समागमा", इति। रामणीयकदर्शने नियोगः—"एसोक्खु महुरमहुरवोक्कार मंजरीकवळणकेळिकळकळकोलाहला उम्भिदसहआरतिहरङ्गीणचडुलचंचरीअणिअरवहरुद्धलिददलकरालचंपआहिवासमणहरो मराळमसलअहणपरिणाहुव्वहणमंथरोदमर विसतुलक्कघळिदचळणसचारविब्भमिदपरिस्समोवण्णीदसेवसीअरगुदाविंदुरु क्कंत! मुद्धमुद्धअरचंदणाअमाणसी मळउरहिसहफंसो तुमं परिस्सअदिकुसुमाअरुज्जाणमारुदो। कुळनावपविसदह . . . . . . . . . . . मालती—सहि इमे सिसकुंजणिउंजकुसुमाइं अवचिणुह्म। इदोविमवरासिसवचिणुम्ह। एदं देवदामंदिरदुवारं। . . . . . . अगदाम्हो इमाओकुसुममालाओ" इति। पुरस्तादुपवर्णितानां उपवनादीनां सानुप्रवेशंसमादरेणदर्शनम्।

अण्णं अजाणिदंह्योदु—मअवदीए एदंच माधवपढिच्चंदअसणाहं चित्तवळअं . . . . . . . . ." पसाधितरस—पवसहृत्थाविरहवत्ति . . . कंठाघळं सिदाघळमालाजीवि . . पिअसहिएत्ति।" इत्येकान्ते अनुरागशंसिनः चित्रफलकादेः प्रकाशनम्—।

कामन्दकी, वत्से इतइतः—महाविरमविरम निरपदासिजाता।

स्खलयतिवचनं ते संश्रयत्यङ्गमङ्गं जनयतिमुखचन्द्रोद्भासिनः स्वेदबिन्दून् ।
मुकुलयतिचनेत्रे सर्वथासुभ्रुखेद स्त्वयिविलसतितुल्यं वल्लभालोकनेन ॥

कदाचित्तां किञ्चिदाश्चर्यमाख्यातुकामास्मि । अस्तितावदेकदाप्रसङ्गतः कथितएवमाधवाभिधानः कुमारः सखलुमन्मथोद्यान यात्रादिवसात्प्रभृति दुर्मनायमानः परवानिवशरीरोपतापेन । यावद् श्रुणवं मालत्येवास्यमन्मथोन्मादहेतुरिति ।—नायिकानुरागश्रवणम् ।

यदितद्विषयोनुरागबन्धः स्फुटमेतद्विफलं गुणज्ञतायाः ।
इति नन्दितमप्यवस्थयास्याः हृदयंदारुणया विदीर्यतेमे ॥ इति

नायकानुराग श्रावणम्—

मालती—अहहे एमोविएञ्चएव ।

माधवः—हन्तपुण्यवानस्मि । यदहमवितर्कितोपनतदर्शनोल्लसितया अनया—

अविरलमिवदाम्ना पौण्डरीकेणनद्धः स्नपितइवच दुग्धस्रोतसा निर्भरेण ।
कवलित इवकृत्स्नं चक्षुपास्फारितेन प्रसभममृतसेकेनेह सान्द्रेणसिक्तः ॥

किंना . . . . क . विभावः भगतिलवङ्गिकेवस्सयासहप्रविशाभ्यन्तरमितः । स्तम्भापवारितौ तिष्ठावः । वयस्य गत्वालवङ्गिकाश्शानेतिष्ठ । पहिमाणं पाडिवोधरस्ससि । दाणिं पधदुम्मणा· अमाणा ईसिमण्णेपसुवेति । सणिअ पघसमण . . . . उवविस ।

जितमिहभुवने त्वयायदस्याः सखिवकुलावलिवल्लभासिजाता ।
परिणतबिसदण्डपाण्डुमुग्ध स्तनपरिणाहविलासवैजयन्ती ॥ इति

तांवातस्यप्रदर्शयेदिति प्रतिच्छन्दः—

महसोतुमंकंदप्पाणिरुघिणिपुरुसुत्तमो सअगाहसाहसेण सद्धम्मआरिणिंकरेदि । कातदो· पडिउसी । सहिकीसमं पच्छिअआयासेध । जाअमळमस तेणपधमत्ताणं पणीकदुअमंमिघक· ळणादो कडिउमरसतरस पघकेरअस्स ? अत्तणोसरीरस्स । सहिसच्चंकरेदि । कहिदंपधहिअ· आवेदसुमपहिं दीहणीसासेहिं । सरिसंमहाणुभावदाए । सुमरेसिपदं । " इत्यमन्त्रभावप्रतिपत्तिः ।

मालती—सहिमण्णारिसो पवमअसेणिघवेदिमंसरीरफंसो । महस्सचियेदनामात्रंवेदिनिपरव्य· धानमिशे इयमुपालम्पते—

उद्दामदेहपरिदाहमहाज्वराणि सङ्कल्पसन्निधिविनोदितवेदनानि।
त्वत्स्नेहसंविदवलम्बितजीवितानि किन्नामयापिनदिनान्यतिवाहितानि॥

सहि वणपालंवणिज्जं उवालहासि—महाभागे एवमेतत्।

त्वंवत्सलेतिकथमप्यवलंबितात्मा सत्संजनोयमियतोदिवसाननैषीत्।
आनद्धकङ्कणकरप्रणयप्रसाद मासाद्य नन्दतु चिराय फलन्तुकामाः॥

कहं दुल्लिअसमागमविच्छेदपडहीताडिअदि। ता जाव णं दणं णिब्भच्छिअ मालदीपडमरी अणुऊलइस्सं। मदयन्तिका– उत्थातुमिच्छति। मुखमुत्पाट्य सांदस्तेणएण दाति। मदयन्तिका—सहि मालदि पडिघुडासि। विलोक्य सहर्षसाध्वस—अहो मणुणं वत्त किंपि एदं वट्टदि।

रम्भोरु संहरभयं क्षमते विकार मुत्कम्पिनस्स्तनतटस्यनमध्यभागः।
इत्थंत्वयैवकथितप्रणयप्रसाद सङ्कल्पनिर्वृतिषुसंस्तुतएषदासः॥

इति संयोगम्—

कामन्दकी—वत्समाधव इयमशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेरमात्यभूरिवसोरेकापत्यं मालतीभगवतासहजसंयोगरसिकेनवेधसामन्मथेनचतुभ्यंदीयते।

परिणतिरमणीयाः प्रीतयस्त्वद्विधानां अहमपि तवमान्या हेतुभिस्तैश्चतैश्च।
तदिहसुवदनायां तातमत्तः परस्तात् परिचयकरुणायांसर्वथा माविरंसीः॥

सम्प्रयोगात्प्रतिवर्णनम्—प्रथमयमनतः प्रतारणेप्रकारविस्तार . . इतिसूत्रेतुवेदितव्यः। नायकयोः समीहितवस्तुमंशयेच अवष्टम्भप्रधानमाश्वासनं—यथा—मालतीमाधवे—

कामन्दकी—वत्समाधव अपिमन्त्रमंस्त यद्भूरिवसुरेव मालतीमलंराज्ञे दास्यतीति। माधवः—(सविलक्षं) नहि, नहि, कामन्दकी—नतर्हि प्रागवस्थायाः परिहीय।—तदिदमायुष्मन्तं बोधयामि। यदैवनौ विद्याग्रहणाय नानादिगन्तसान्निध्यमासीत् तदैव अस्मत्सौदामिनीसमक्षं भूरिवसुदेवरातयोः वृत्तेयं प्रतिज्ञा, अवश्यमावाभ्यां अपत्यसम्बन्धः कर्तव्य इति।

इहतुवाक्प्रतिज्ञानिवेदिनोव्यवहारतन्त्राणि। याचिपुण्यापुण्यहेतुव्यवस्थाः सर्वजनानां आपतन्ति। इदंतावत्प्रसिद्धमेव। यत्तु नन्दनायमालतीं प्रार्थयमानं भूरिवसुर्नृपतिमुक्तवान्। प्रभवति निजस्यकन्यकाजनस्यमहाराजइति। सम्प्रत्येवचागत्यपुरुषेणावेदितं यत्किलराज्ञा पद्मावतीश्वरेण अमात्यभूरिवसोरुपरि विश्वासं अस्यानुचप्रसादं सबहुमानमातन्वताभवनमागत्य नन्दनाय मालतीं

प्रतिपादिता। तत्रभूरिवसोः........अत्मनइव नखलुमहाराजस्य निजाकन्यका। कन्यादानेषुचनृपतयः प्रमाणमितिनैवंविधः धर्माचार्यसमयः। तस्मादचिकित्सितव्यमेतत्। अपिच-वत्सकिमितिमामनधानांमन्ये। पश्यतुत्रिभवान्–

मावांसपलेष्वपिनामतद्भूत् पापंयदस्यां त्वयिवाविशङ्क्यम्।

तत्सर्वथासङ्गमनाययत्नः प्राणव्ययेनापिमयाविधेयः॥

यथावा—दुर्लभा नयुद्धरक्षिता प्रियसखीभवतः–

अपिच–

प्रमथ्यक्रव्यादं मरणसमयेरक्षितवतः

परिष्वङ्गंलब्ध्वातवकथमिवान्यत्ररमताम्।

तथाचव्यापारः कमलनयनाया नयनयोः

त्वयिव्यक्तः स्नेहस्तिमितरमणीयश्चिरमभूत्॥

यथाच—वयस्यमाधवसर्वथासमाश्वसिहि।

याकौमुदीनयनयोर्भवतस्सुजन्मा तस्या भवानपि मनोरथवद्धबन्धुः।

तत्सङ्गमंप्रतिसखे नहिसंशयोस्ति यस्मिन्विधिश्चमदनश्चकृताभियोगः॥

यदाह—मालत्या अपि स्नेहदर्शनात् सुश्लिष्टमेतत्। योपिहिकपोलपाण्डुतादिचिह्नसूचितः प्राक्प्रबन्धस्तस्याः कामाभिष्वङ्गः सोपित्वन्निबन्धन एवेतिव्यक्तं। एततुनशक्यते कदपूर्वस्तथावयस्य इति। नखलुनादृश्यः महाभागधेयाः कुमार्यः अन्यत्र अवसक्तचेतसः भूत्वा परत्रचक्षूरागिण्योभवन्ति। अपिच—

अन्योन्यसम्भिन्नदृशांसखीनां तस्यास्त्वयिप्रागनुरागचिह्नम्।

कस्यापिकोपीतिनिवेदितंच धात्रेयिकायाश्चतुरंवचश्च॥

कलहंसः—(चित्रफलकंदर्शयति)

यथाच—वयस्यकर्थभगवत्याः सा मेधाशक्तिर्विपर्येष्यति। यथाच—मकरंदअपिनामबुद्धरक्षितासद्कान्ता भवतीनीतिर्विजेष्यते। लवङ्गिका—को सन्देहो महामाअस्स। किंबहुणा-जहएसो मंजीरसद्दो तहजाणामिदेणववदेसेणआणीदाबुद्धरक्खिदापमदंतिपत्ति। ताउत्तरीआअववादिदो सुत्तलक्खणोचिट्ठा। यथाच—साहिपअंपिणद्धि आसासो। अरसकारणादोतुमं उवखंडिअबंधणं-

कंकेलिपल्लवं विअट्ठिअअ धोरंदीविळंत णोमाळिआकुसुमणीसहापारिट्ठिअसि । सोविजाणाविदो भअवदावम्महेण सदावरसदूसत्तणं । . . . . . . . . . . . नेदीयसां . . . प्रकृतिरभ्युदयानां । यथाच—माधवः—भगवतिसुलभमपि बहुनर्थमतिसङ्कटंहि पतद्वयस्यस्य । कामन्दकी-आः कस्यं अस्यां चिन्तायां-यथाच-मकरन्दः-वयस्य अतिकातरोसि । किमेतत् । ननुस्वस्थएवासि । यथाच-मालती-(माधवस्य ललाटेहस्तंदत्वा) दिट्ठिआवड्ढइ—......

महाभागे नभेतव्य नभेतव्यं—

मरणसमयेत्यक्ताशङ्कप्रलापनिरर्गल
प्रकटितनिजस्नेहः सोयं सखापुरएवते ।
सुतनुविमृजोत्कम्पं सम्प्रत्यसावपिपाप्मनः
फलमनुभवत्युग्रंपापं प्रतीपविपाकिनः ॥

अपिच—

धैर्यनिधेर्हिहृदयेहतएवपापः किंत्राकदाचिदपिकेनचिदन्वभावि ।
सारङ्गसहतिविधात्रिभकुम्भकूट कुट्टाकपाणिकुलिशस्यहरेः प्रमादः ॥

दैवयगात् पुरुषापराधात् प्रमादिनोवाकार्यस्यव्यापत्तिः प्रत्यूहप्रशमनमस्यप्रतीकारः ॥—यथा शाकुन्तले—शा: अतिथिपरिभाविनि—

विचिन्तयन्तायमनन्यमानसा तपोनिधिंवेत्सिनमामुपस्थितम् ।
स्मरिष्यतित्वांनसबोधितोपिमन् कथांप्रमत्तः प्रथमकृतामिव ॥

प्रियंवदा-हद्धि तं पइसउत्तं । पस्सिविपूआवरुद्धेअवरद्धासुण्णंहिअआसउंदला । (पुनर्विलोक्य) णक्खुजस्सिकस्सिवि । एसोदुव्वासोसुलहकोवोमहेसी । अनसूए । गच्छपादेसुपणमिअ णिवट्टेहिणं । प्रियंवदा-सहिसुद्दावक्कोधोकस्यअणुणअगण्हइ । किंउणसाणुकंपोकिदो । अनसूआ-कहेहिएदं । प्रियंवदा-जदाअणुणीदोविणिवत्तिदुंणइच्छदि ; तदाविण्णविदोमएदुव्वासाअअवं पुढमत्तिअवेक्खिअ एप्पहादु ! अविण्णादद्दुहिदुजणस्सभअवदा एक्कोअवराहोमरिसिदव्वोत्ति । सोतदोणमेधुमणं मण्ण- हादोदुंअरुहदि । किंदुअहिण्णाणाहरणदंसणेण सावोणिवत्तिस्सदित्ति मंतअंतो एव्वअंतरिहिदो । अनसूआ—सक्कंदाणिं आससिदुं । अत्थितेणराएसिणासंपट्ठिदेण सणामहेअकिदं अंगुळीअअं सुमरणीअत्तिसअंदळाएसअपिणद्धं । तेणसाहीणोवाआसउंदळाहविस्सदि ।

यथाच मालतीमाधवे—

नादस्तावद्विकलकुररीकूजितस्निग्धतारः
चित्ताकर्षीपरिचितइव श्रोत्रसंवादमेति ।
अन्तर्भिन्नं भ्रमतिहृदयं विह्वलत्यङ्गमङ्गं
गात्रस्तम्भः स्खलयतिगतिकः प्रकारः किमेतत् ॥

इत्यादि—

करालायतनाच्चायमुच्चरन्करुणध्वनिः ।
विभाव्यतेनतुस्थानमनिष्टानां तदीदृशां ॥

हन्त सम्प्रतिनिरस्तएवमे सन्देहः । तदपिनामजीवन्तीमेनां सम्भावयेयमिति (परितः परिक्रामति) सहसोपसृत्य (खड्गं प्रकोष्ठेनिक्षिप्य) दुरात्मन्नपेहि । प्रतिहतोऽसिकापालिकापसद (स्वगतं) अहोनुखलु भोस्तदेतत् काकतालीयंनाम ।—सम्प्रतिहिमम—(राहोश्चन्द्रकलां) इत्यादि । आः पापकर्मन् पाषण्डचण्डाल—

असारंसंसारं परिमुषितरत्नं त्रिभुवनं
निरालोकंलोकं मरणशरणं बान्धवजनम् ।
अदर्पंकन्दर्पंजननयननिर्माणमफलं
जगज्जीर्णारण्यंकथमसिविधातुंव्यवसितः ॥

अपिच रेरेपाप—

प्रणयसखी सलीलपरिहासरसाधिगतैः
ललितशिरीषपुष्पहननैरपितास्यतियत् ।
वपुषिवधायतत्रतव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्डइवैषभुजः ॥

सन्दर्शनसमागमादिहेतोः सङ्केतकादौ नायकयोर्नियोगः प्रयोज्यप्रेषणम्—यथामालतीमाधवे—

बुद्धरक्षिता—हुं तुमंउण कहिं पत्थिदासि ।

अवलोकिता—अहंखुभअवदीएमाधवसआसंअणुप्पेसिदा । संदिट्ठंमतस्स सङ्करउरसम्यग्धिकुसुमाकरुज्जाणं गदुअकुंजणिउंजपरंतस्तासोअपाहणेचिट्ठेत्ति । गदोअतत्थमाहवो । अवलोकिता—अज्ज-

किसलअउद्दसिदिजणणीएसमंमाळदी सङ्करउरंगमिस्सदि । तदोपद्मं किलसोहवट्टइत्ति देवदाप इणणिमित्तं सहत्थकुसुमावचअंउद्दिसिअ लवङ्गिआदुदीअंमाळदीतंपदे कुसुमाअरुज्जाणंआणइस्सदि। तदोअण्णोण्णदंसणंदाविस्सदित्ति ।

यथाच—कामन्दकी—वत्सौमालतीमाधवौ इतोनिर्गत्यवृक्षगहनेगम्यताम् । उद्वाहमङ्गलार्थ मङ्गलगृहद्वारिकायाःपश्चादुद्यानवाटः सुविहितं तत्रवैवाहिकद्रव्यजातं, अवलोकितया ॥ भूयश्च—

> गाढोत्कण्ठकठोरकेरलवधूगण्डाभपाण्डुच्छदैः
> ताम्बूलीपटलैःपिनद्ध फलितव्यानम्रपूगद्रुमाः ।
> तक्कोलीफलजग्धमुग्ध विकिरव्याहारिणस्तद्भुवो
> भागाःप्रेङ्खितमातुलुङ्गवृतयःप्रेयो विधास्यन्तिवाम् ॥

यतस्तत्रैव मदयन्तिकामकरन्दयोः यावदागमनंस्थातव्यं । .......... परस्पराभियोगादिषु अनागतप्रतीकारादिभिः छिद्रापिधानं सन्धिरक्षा ।—यथामालतीमाधवे-" बुद्धरक्षिता "-अम्हे सुसिलिट्ठमाळदीणेवच्छळच्छीविप्पलद्धणंदणकरगाहो अमच्चभूरिवसुमंदिरे भअवदीवसंविहाणेण सेमेणगोवाविदोअज्जमअरन्दो । .... कामन्दकी-साधुसखेभूरिवसो साधु । "प्रभवतिनिजस्य कन्यकाजनस्य महाराजः" इत्युभयलोकाविरुद्धमुपन्यस्तं । .... यथावा-अवलोकिता-भअवदि, णहुअमच्चो माहवस्स णामंविजाणदित्ति णिरवेक्खदा . ळक्खीअदि ।

कामन्दकी—संवरणंहिनत्—यथा—

> बहिरसर्वाकारप्रवणरमणीयंव्यवहरन्
> पराभ्यूहस्थानान्यपितनुतराणिस्थगयति ।
> जनंविद्वानेकस्सकलमतिसन्धायकपटैः
> तटस्थः स्वानर्थान्घटयतिचमौनंचभजते ॥

प्रतापव्यावर्णनं यथा—

> व्यतिकरितदिगन्ताश्श्वेतमानैर्यशोभि
> स्सुकृतविलसितानां स्थानमूर्जस्वलानाम् ।
> अकलितमहिमानःकेतनंमङ्गलानां
> कथमपि भुवनेस्मिन् तादृशास्सम्भवन्ति ॥

प्रयोज्योपजापः— . . . . . . . . . . . . अवलोकिता—तुमंखुभअवदीएउजरिंस पओअणे णिउत्ता-
तत्तको उत्तंतो। बुद्धरक्षिता—भअवुभअवदीए समादेसेण तासुनासुवी समदहासु ईरिसो
तारिसोत्तिकदुमअरंदस्स उवरिपिअसहीए दूरमारोविदोपरोवआणुराओ। पल्लोअरं मणोरहो
अविणाम तंपेक्खेअति।

पराक्रमणं—यथा—मोभोमालत्यन्वेषिणः इयममात्यभूरिवसुमाश्वासयन्ती अप्रहतप्रज्ञाचक्षुर्भगवती
कामन्दकीसमादिशति-पर्यन्वष्यतामदः करालायतनम्—

नाघोरघण्टादन्यस्मात् कर्मैतद्दारुणादभूत्।
नकारलोपहाराच्चफलमन्यद्विभाव्यते॥

बन्धुरक्षापहारोयथा—तत्रैव—मकरन्दमदयन्तिकागमनंयावत्स्यातव्य।

माधवः—(सहर्षं) कल्याणोत्तरावतंसा कल्याणसम्पत्।

दिट्ठिआएव्वंणोहविस्सदि—

मित्रोपग्रहो यथा—अवलोकिता—भअवदीसोवि पासअरो माहवस्सबालमित्तंमअरंदो णंदणस्सभइणि-
मद्-अन्तिअ जइसमुव्वहइतं पिमाहवस्सदुइअ पिअकहहोदि—कामन्दकी—नियुक्तैवहि मयातत्र
तत्प्रियसखीबुद्धरक्षिता।—सुहृद्भेदो यथा—

गुणापेक्षाशून्यंकथमिदमुपक्रान्तमथवा
कुतोऽप्यस्नेहकुटिलनयनिष्णातमनसाम्।
इदन्त्वैदग्ध्यं यदुतनृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु सहितोनन्दनइति॥

लवङ्गिका—जधा आणत्तंभअवदीएतंतहएव्व। अण्णहातस्सि वरेदुद्दंसणे अहिअंतजोव्वणे किति-
णाविआरिअंभअघेण। चारज्ञानं यथा—अवलोकिता—भअवदी आदाणिसोदामिणी समासादिअ
मन्तरिअमंतसिद्धिप्पहावा सिरिपव्वदे कावालिअवदं धारेदि—कामन्दकी—कुतःपुनरियं प्रवृत्तिः।
अवलोकिता—अत्थिएद्द णअरीए महामसाणप्पएसे करालाणामचामुण्डा। कामन्दकी—अस्ति
याकिल विविधजीवोपहारप्रियेति साहसिकानांप्रवादः।

अवलोकिता—तसिसंखुसिरिपव्वदादआअदस्स इदोणादिदूरासण्णमसाणवासिणोसाधअस्समुंड-
धारिणोअघोरघंटणामहेअस्स अंतेवासिणी. महाप्पहावा कवालकुंडलाणाम अणुमंत्तं आअच्छइ।

सदोऽपउत्ती । गूढदण्डातिचारो यथा—कामन्दकी—वत्समकरन्द अनेनैववैवाहिकेन मालती-नैपथ्येन अवचारित. प्रवर्तस्व परिणयायात्मानं (इतिपटलकमर्पयति)

मकरन्दः—यथाज्ञापयसि । यावदितः चित्रयवनिकामन्तर्धाय नैपथ्यं धारयामि । तथाकरोमि। चारसमाधानं यथा—

बुद्धरक्षिता—सव्वं अणुचरतकामेकामेदुं सपादपवणं अम्मरियअणुणो चलामेडिअ अमिददवंदे। मअरदणनिद्दुर पडिहदेजामादा । सोअवेळक्करोसावेसप्पलतअवखरो ओट्ठदणमणप्फुरतव अणे । साणुब्भरदुमिसदो णमेसपद पदाव कोमारबंधवीय पओअणंति समपईपइण्णकाऊण वासभवणादोणिग्गादो । तावदिणा पसगेण मद्धतिअंआणीअमभरदेण संजोअइस्सं ।

समाधिमोक्षो यथा—आइदेतुसिमिद्दनाळदीणेवच्छलच्छीविप्पलसणंइणकरग्गह अमचभूरिवसुसे दिरे भअवदीचलणमविहाणवहिंसमणमेचाचिदोमअरदो । अइहे—पांदणावासमुपगदा । तदो भअवदीणदण आपुच्छिअणिआवसअगउया । अद्य पावखदुघरप्पवेस विरहदाकालकोमुदी महूसवप्पमत्तपज्ञाउलासेस परिअणे । पओसो अणुऊळइस्सदि । अज्ञाणोवघसिदं ॥—

सैषादूतविशेषाणामशीतिश्चतुरुत्तरा ।
चतुर्विंशतिरेतेषां मयोक्ता कर्मणामपि ॥
जातिक्रियादियोगेनयस्यदूतस्ययोविधिः ।
युज्यते तत्रमेधावी तमेवविनियोजयेत् ॥

बुध्वाबुधश्चतुरशीतिमपीहदूतान्
कर्माणिविंशतिमपीतियुतांचतुर्भिः ।
योयत्रसिध्यतितमेवहितत्रदूत
सम्प्रेषणादिषु समीक्ष्यसमादधीत ॥

इति श्रीमहाराजाधिराज श्रीभोजदेव विरचिते
शृङ्गारप्रकाशे दूतविशेष दूतकर्मोपवर्णनं नाम अष्टाविंशः प्रकाशः ॥



॥ श्रीः ॥

# महाराजाधिराज श्रीभोजदेवविरचिते

# ॥ शृङ्गारप्रकाशे ॥

## एकोनत्रिंशः प्रकाशः

के पुनर्दूतसम्प्रेषणादयः—दूतसम्प्रेषणं, सन्देशदानं, दूतानुगमः, सखीविगर्हणं, मार्गोदीक्षणं, गमागमचिन्ता, चिरयद्विमर्शः, दूतागमनं, आकारपरीक्षा, दूतप्रतिभेदः, दूतपरिप्रश्नः, दूतव्याहारः, दूतवाक्याकर्णनं, गमनवृत्तान्तः, प्रवृत्त्युपलंभः, प्रियसन्देशः, सुहृत्संमन्त्रणं, अवस्थानुभवः, सहायोत्साहनं, प्रियदूतागमनं, दूतप्रतिपत्तिः, वार्ताभिधानं, कार्यपर्यनुयोगः, दूतवाक्यं, उत्तराभ्युपपत्तिः, दूतप्रतिवाक्यं, दूतवाक्याक्षेपः, दूताभिभर्त्सनं, परिजनादिक्षोभः, गुरुजनाशङ्काक्षोभः, गुरुजनाशङ्का, सहायावेशः, व्यतिकर्तव्यता, स्वपरप्रतिपत्तिः, नायकानयनं, प्रियाभिगमः, उपस्थापनं, सम्भ्रमविकल्पः, नायिकाप्रतिबोधनं, सुहृत्परिहासः, दूतपुरस्कारः, इतिवृत्ताख्यानं, अवस्थाख्यानं, अवधानं, संविधानं, शक्तिविवेचनं, समागमोपायः, समीहितसिद्धिरिति अष्टचत्वारिंशत्—

तेषामन्वर्थसंज्ञाभिर्लक्षणान्युपलक्षयेत् ।
नानाविधेषु लक्ष्येषु वक्ष्यमाणेनवर्त्मना ॥

तत्र दूतसम्प्रेषणं यथा—

जातंवंशे भुवनविदिते पुष्कलावर्तकानां
जानामित्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याच्ञामोघावरमधिगुणे नाधमे लब्धकामा ॥

सन्तप्तानां त्वमसि शरणं तत्पयोदप्रियायाः
सन्देशं मेहर्धनपतिक्रोधविश्लेषितस्य ।
गन्तव्याते वसतिरलकानाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥

सन्देशदानं यथा—

अहअविओअनणईदुमहोविरहाणळोचलंजीअं
अव्वाहिजाउसहिजाणसितंतेअजंजुत्तं ।

अहंवियोगतन्वीदुस्सहोविरहानलश्चलंजीवं । अभिधीयतांकिसखि जानासित्वमेवयद्युक्तं ।

धूइतुमंचिअणिउणकावधडमआइजाणासे वोत्तुं
तंडइअपन्दुंजहणहोइतहतंकु . . . सु ॥

तत्प्रणिधानं यथा—

सव्धिमळआभळाओसु दाहदुजोळेहह । सब्भावमेत्तप्पणअमावेदजसु किंधयत्तुप्पलादेविरसिण्ण करंगुळिपरिवणद्दव्वाळिभऊदणीमव्वोसद्धिदच्चिअणममव्वइपिअसहिन्ने दहणि किंव्वळिहिम्मो ।

दूतानुगमो यथा—

तव्भणददूइए अव्वणइमपमदति अणुपअव्वाहिं पुणरुत्त । सीसंतळदवि समदंतिसंदेशोसे इव्वळिमस तस्स । सुहअस्स दूरं अव्वाहिंतीतस्सेअतुरगणिपवत्ता ॥

सखीविगर्हणं यथा—

सुव्वतताइओविगओजामुत्ति सहिओ कीसमं भणहा ।
सेहालिअणगंधोणदेइसोव्तुव्सुअहतुंहे ॥

सुप्यतांतृतीयोपिगतोयाम इतिसख्यःकिमितिमांभणथ ।
शेफालिकानांनन्धोनददातिस्वप्तुंस्वपतयूयं ॥

किंभणहसहिओमामरन्दीसिहइसोजिअंतीए ।
कज्जाळाओगसोसिणेहमव्गेउण्णहोइ ॥

किंभणथ मां सख्यो माप्रियस्य द्रक्ष्यते स.जीवन्त्यां । कार्यालापप्रश्नोद्गमार्गः पुनर्न भवति ।

मार्गोदीक्षणं यथा–

सुहळाळसाहिं अवअअपव्थंतरेसुपुणरुत्तं ।
पेसिज्जंतिसरहसं समाअं दूईहिदिव्ठीओ ॥
कंतुग्गधणुक्खित्तेणपुत्ति दारठ्ठिआपळोएसि ।
उण्णामिअंकळसणिवेसिअग्घकमळेण वमुहेण ॥

कंतुंगस्तनोत्क्षिप्तेन पुत्रिद्वारस्थितावलोकयसि । उन्नमितकलशनिवेशितार्धं कमलेनेवमुखेन ।

गमागमचिन्ता यथा—

घवविहिहसोघरसेदहिहिओतासमेहिहओवासमे . . . उभणिअव्वज्जु-तमुत्तर कितुपाविहिह ।
आअव्वतिव्णुकाहंकिं म एव्वहणहुइहमव्ति पव्हमुव्ळिमसाहसआहिमव्वअन्धरघरेह ।

चिरयद्विमर्शो यथा–

दूतीगआविराअरकिसो महवासमेहिहणवेव्ति । जीविअमरणतरसाधिआए अन्दोळएहिअअ ।

दूइणएइचंदोपिपुग्गवो जामिणीविवोळेइ ।
सव्वं सव्वकोव्विअ विसव्दुलिक्कम्मकिंभणिमो ॥

दूतागमनं यथा–

सहिअणहव्थाहिमुहं धारइअ विमेसअव्विअक्खिविऊणं ।
जुअईहिपडिणिउत्तोअवयोइज्जइसमंभमं दूइजणो ॥
अभिसारणंणगेह्लइणमव्ळवेइळअण्णपुव्छइदुइं ।
चंदाळोअपडिहदीठिवइमूढहिअओविळासिणिसव्थो ॥

आकारपरीक्षा यथा–

उवपव्ळळोवणणंकपोळपोसव्गमाणमेएण ।
अभणंतेणविभणिआमुहेणसेकज्जुणिपव्तेसु ॥
णाआओव्तिपव्खेभवग्गिहासुव्ळेविरिए ।
दुरीएरउपव्तिएपहरिसोसव्गइगंडवासेसु ॥

दूतप्रतिभेदो यथा- पयोदप्रिया

एहिगमागमखेओसरंतप०मु०तकुं[ ]तस्य
सहिवीसमताहणे०जअंवाजंतेणसंदि०ट्ठा
जंनुहक०जंत०चेअम०झमांदाणिमंसआहर्या ॥
दूईस०च्चअणेअंजसिपारंगआत०स ॥

दूतपरिवर्शो यथा-

कहणुगआकहदि०ट्ठा किंभणिअं किंवतेणपडिव०णं
एअ०चिअणसम०पइपुणरु०तंजंपमाणंए ॥
पिअपासाहिणिअ०तोस०चंअळिअंबजंभदूईजणो ।
त०च्चिअकामिणिस०दोदूमे०तिपिबहुसोनिअंतेइक्कहं ॥

दूतव्याहारो यथा—

जइआइरि०तवेसविअविअ०सदूळसीसंत
संगमनूसम०भहिअमणहरहोतिसंदेसो ।
अचळ०त्रि०जउधीरंसासोणदणहिइह०गएनिपओसे
इअदूईहिं तुळि०जइपडमाणअपिअअमोविळासिणीस०घो ॥

दूतवाक्याकर्णन यथा-

दूईमुहअ०दपुळोइरिएकि भणिहिंतिअ०झाए ।
पिअसगमगळिअमणोरहाएहिअंधरघरेइ ॥
किएविमहुरस०देसग्गसपरि०पुडवि्इ०णमुहसोहं ।
सुइअ०धदूइनअणिकोरइक०णेकुवळअं च ॥

गमनवृत्तान्तो यथा—

वहिणि०गअमहिपअणेणतु०झप०ताअप०तळणिउ०जं ।
उ०दाणंज०धमिवेइसोजणोविरहदु०ग्वाइं ॥
अप्पाइआहितुहदेणजाइताळमएणमुळआइ ।
अंहु०भतसासपडि०खवळ०तत्रिसम०सरपआइं ॥

प्रवृत्तस्तुपलम्भो यथा—

श्रुतैः क्वापि प्रीतः क्वचिपपि निमित्तैः पुलकितः
क्वचिच्चोपश्रुत्या शमितपरितापो विकसितः ।
प्रसादार्थं मुग्धे तवविगतलज्जो . . . .
प्यभिज्ञोदैवं जनमपिचते पृच्छतुपतिः ॥

असौ विद्याधारः शिशुरपि विनिर्गत्य भवनात
इहायातसंप्रत्यविकल शरच्चद्रमधुरः ।
यदालोकस्थानेभवति पुरमुन्माद्तरलैः
कटाक्षैर्नारीणां कुवलयित वातायनमिव ॥

चंदोविचंदवअणे

इत्यादि ।

चंदुमुहिचंदधवळादहादिह॰चितुहविओअंमि ।
जउजामासअजाम॰जजामिणीकहविवोळीणा ॥

सुहृत्संमन्त्रणं यथा—

अहंयथातथावापि भवेयंसतुमत्कृते ।
कथंभविप्यनीत्येपा चिन्तादलयतीवमाम् ॥
वदकिंकरवाण्यत्र मुह्यतीव मनोमम ।
माभून्मे दुस्तरो विप्रवधेन . . . ॥

अवस्थानुभवो यथा—

इत्यादिविलपन्त्यामे तत्कालसुलभोदया ।
जहारचेतनांमूर्च्छा निद्रेवनयनद्युतिम् ॥
सातुतैमिरकस्यैवबभूव बहुलक्षपा ।
मोहायाद्याप्यनाय्यैव सुतरां मनसोमम ॥

सहायात्सादेन यथा–

उत्तिष्ठयदिजीवन्तीं मामिच्छसि तमानय ।
अहंनेतुमशक्याहि सुदूरमिदमन्तरम् ॥
मनोगेगस्तीव्रोविषमिवविसर्पन्नविरत
प्रमाथी निर्धूमो ज्वलति विधुतः पावक इव ।
हिनस्तिप्रत्यङ्गं ज्वरइव गरीयानितइतो
नमां त्रातुं तातः प्रभवति न चाम्बा नभवति ॥

प्रियदूतागमनं यथा–

निशि तस्यां व्यतीतायां मन्येद्युरुदिते रवौ ।
केयूरकस्तमागत्य हेमकूटादथाब्रवीत् ॥
दिनेष्वथ व्यतीतेषु पत्रलेखातदन्तिकम् ।
प्रापद्बलाहका . . निर्वृत्तपथिसौष्ठवा ॥

दूतप्रतिपत्तिर्यथा–

तानर्घ्यानर्घ्यमादाय दूरात्प्रत्युद्ययौगिरिः ।
नामयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥
विधिप्रयुक्तसत्कारैः स्वयंमार्गस्यदेशिकः ।
सतैराक्रामयामास शुद्धान्तं शुद्धकर्मभिः ॥

वार्ताभिधानं यथा—

मूढंबुद्धमिवात्मानं हैमंभूतमिवायसम् ।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥
अद्यप्रभृतिमात्मानं दृष्ट्वैव द्विजोत्तमाः ।
मूर्ध्निगङ्गाप्रपातेन धौतपादाम्भसाच वः ॥

कार्यपर्यनुयोगो यथा–

कर्तव्यंवोनपश्यामि स्याच्चेत्किनोपदिश्यते ।
मन्येमत्पावनायैव प्रस्थानं भवतामिह ॥
तथापि कार्येकस्मिंश्चिदाज्ञां मेदातुमर्हथ ।
विनियोगप्रसङ्गाहि किङ्कराः प्रभविष्णुषु ॥

दूतवाक्यं यथा–

ततोऽहमिदमेवात्र प्राप्तकालमिति द्रुतम् ।
राजपुत्रिसुहृत्प्राणरक्षणार्थमिहागतः ॥
अतःपरंतु सामर्थ्यगनार्थाया यथागिरः ।
कण्ठेऽपि परिवर्तन्ते काश्चित्त्वमपिवेत्थतत ॥

उत्तराभ्युपपत्तिर्यथा–

अथाग्रहस्ते मुकुलीकृताङ्गुलौ निवेशयन्ती स्फटिकाक्षमण्डलम् ॥
कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥
यथाश्रुतं वेदविदां वरत्वया जनोऽयमुच्चैः पदलङ्घनोत्सुकः ।
तपःकिलेदं तदवाप्तिसाधनं मनोरथानामगतिर्नविद्यते ॥

दूतप्रतिवाक्यं यथा–

यथाहवर्णीविदितो महेश्वरः तदर्थिनीत्वं पुरएव वर्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्यतं तवानुवृत्तिंनतु कर्तुमुत्सहे ॥
वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितंवसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्तिकिं व्यस्तमपित्रिलोचने ॥

दूतवाक्याक्षेपो यथा–

विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषस्सतः किमेभिराशोपहतात्मवृत्तिभिः ॥
अलं विवादेन यथाश्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनःस्थितं न कामवृत्तिर्वचनीयमीक्षते ॥

दूताभिमर्शनं यथा—

इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विवर्तितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥
उवाच चैनं परमार्थतो हरं नवेत्सि नूनं यत एवमात्थमाम् ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दा श्चरितं महात्मनाम् ॥

परिजनक्षोभो यथा—

किं शास्त्रं गुरवः केवा कालज्ञा का कुलस्थितिः ।
रक्ष्यन्तामात्मनः प्राणा यूनस्तस्यच सर्वथा ॥
गन्धर्वाणां विवाहोऽयमिच्छयान्योन्यसङ्गमः ।
शास्त्रेषु पठितस्तस्य तूर्णमुत्तिष्ठगम्यताम् ॥

गुरुजनाशङ्का यथा—

दु॰ल्लहजणाणुराओ ल॰जागुरुईपरवसो अ॰पा ।
पिअसहिविसमं पे॰मं मरणं सरणं णरिंए॰कं ॥

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा । प्रियसखि विषमं प्रेम मरणं शरणमनन्तरमेकं ॥

स्खलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किंवा मृत्योःपरेण विधास्यति ।
ममतु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं नत्वेवायं जनोनच जीवितुम् ॥

सद्भावावेगो यथा—

नवेझिसप्रार्थितदुर्लभःकदा सखीभिरास्रान्तरवीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं मृषेव सीतां तदवग्रहक्षताम् ।
द्रुमेषु सख्याकृतजन्मसु स्वयं फलं तपस्साक्षिषु दृष्टमेष्वपि ।
न चप्ररोहाभिमुखेषु दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ॥

इतिकर्तव्यता यथा—

तदर्थमथसंमन्त्रय सहमन्त्रिसुतेन च ।
एवमेतदिति ध्यात्वा प्रस्थाने स्थैर्यमग्रहीत ॥

सत्यं वेद्मितवप्रसादमधिकं चेतोममेदं पदं
दातुंनेच्छसि किन्तु शासनमिदं नोल्लङ्घनीयंगुरोः ।
मन्युःसम्प्रति संहितां पुनरिहागन्तास्मि कादम्बरीं
सन्दिश्येति सबाष्पगद्गदमसौ केयूरकं प्राहिणोत् ॥

स्वयम्प्रतिपत्तिर्यथा—

अरूढविस्फुरितचापमनोजराजे सज्जीकृते दयितसङ्गमसङ्गराय ।
उच्चैर्नितम्बजयहस्तिनि हेमकक्ष्यामेणेक्षणा सरभसं निबिडीचकार ॥
क्वप्रस्थितासि करभोरुघनेनिशीथे प्राणाधिको वसतियत्रजनः प्रियोमे ।
एकाकिनीवदकथं नबिभेषिबाले नन्वस्ति पुङ्खितशरो मदनः सहायः ॥

नायकानयनं यथा—

सखि दयितमिहानयेति सामां प्रहितवती कुसुमेषुणा विभिन्ना ।
हृदयमहृदयाननानपूर्वं भवदुपकण्ठमुपागतं विवेद ॥
तदनघतनुरस्तुसा सकामा व्रजतिपुराहि परासुतांत्वदर्थे ।
पुनरपि सुलभं तवानुरागी युवतिजनः खलु नाप्यतेऽनुरूपः ॥

प्रियाभिगमो यथा—

इतो गमिष्याम्यथवेतिवादिनी चचाल सा च स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥
तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः निक्षेपएवपदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया नययौ न तस्थौ ॥

अपस्थानं यथा—

वेधाव्वळणिञ्अपुव्वहणणीसहहीएकएविसमन्ताहि ।
आअंचिअविहुव्वं गमणं छातरळच्छीए ॥
एव्वो विपळाअंतो चआहअविअळंतकेसहव्थाए ।
विअळव्चलआरणाएकहवसञ्माविओदइओ ॥

सम्भ्रमविकल्पो यथा—

तुरिअपहाइअदिव्ठमिपरिअणेआगओत्ति सोऊण ।
अञ्झामज्झविमविअळाबअञ्चिद्दाउंजपारइ ॥
सञ्झणवेसवेवि . . दकोमळोदुपडिमिसिव्धसमुहनेभार ।
वेणन दिण्ण ताविइपएणपरिरम्भिआरमणी ॥

नायकाप्रतिवचन यथा—

पुरश्चक्षुरागस्तदनु मनसो मन्युपरता
  तनुज्यानिर्योऽस्यत्वयि समभवद्यत्रच तव ।
युवासो ऽयं प्रेयानिहसुवदने मुञ्चजडतां
  विधातुर्वैदग्ध्यं निलमतु सकामोऽस्तुमदनः ॥
त्वं वत्सलेति कथमप्यवलम्बितात्मा
  सत्यं जनोऽयमियतो दिवसाननैषीत् ।
आविद्धकङ्कणकरप्रणयप्रसादं
  आसाद्यनन्दतु चिराय फलन्तु कामाः ॥

सुहृत्परिहासो यथा—

तथागतां तांपरिहासपूर्वं सख्या सखीवेत्रभृदावभाषे ।
आर्ये व्रजावान्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥
पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्यापरिहासपूर्वं ।
साञ्जयित्वा चरणौ कृताशीः माल्येन तां निर्वचनं जघान ॥

अथातो दूतपुरस्कार इतिवृत्ताख्यानमवस्थाज्ञानमवधानं सम्प्रयोगसम्प्रधानं शक्तिविवेचनं समागमोपायः समीहितसिद्धिरिति प्रपञ्चतोऽभिधीयन्ते। तत्रदूतीसखीनायकादिभेदाद्दूतपुरस्कारप्रपञ्चः। तत्रदूतीकृतो यथा—

काम-घस्से अवलोकिते साधुसाधु . अनेनमत्प्रियाभियोगेन स्मारयसि मे पूर्वशिष्यां सौदामनीम्।

यथावा-साधुसरे भूरिवसो साधु, प्रभवति निजकन्यकाजनस्य महाराज इति उभयलोकविरुद्धमुत्तरमुपन्यस्तम् . यथा च।

एह्येहि भूरिजनजीवितदानपुण्यसम्भारधारिणि चिरादसि हन्तदृष्टा।
दत्तप्रमोदमपि नन्दय मे शरीरं आलिङ्ग्य सौहृदनिधे विगमप्रणामात्॥

यतः—

धन्यात्वमेव जगतः स्पृहणीयमिद्धि. एवंविधैर्विलसितैर्नियोगिमद्भिः।
यस्याःपुरापरिचयप्रतिबद्धबाजमुद्भूतभूरिफलशालितिवि-भितन॥

सखीकृतो यथा-साधुलवङ्गिके साधु . अवन्हे खलुअनुरागो विकारयोर्गरीयसोऽपन्यासः। यथावा-

दयावा स्नेहोवा भगवतिनिजेऽस्मिन् शिशुजने
भवत्यारसंसाराद्विरतमपि चित्तंद्रवयति।
ततश्च प्रव्रज्यासमयसुलभाचारविमुखः
प्रसक्तस्तेयत्नः प्रभवतिपुनर्दैवमपरं॥

यथाच—जदाभअवदी आणत्तं अप्पधातवसि अवसरे दुब्दंसणो अदिट्ठंतजोऽवणति किणविआरिदं समन्वेणतापसीद भअवदी परित्तासअते जीविदमरणादो पिअसहिं तदाविहुए साधुत्ति-दवा।

नायककृतो यथा-

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते।
इदंत्वकृतमन्येन कृतमाश्चर्यमार्यया॥

यथावा-

यातो विक्रमबाहुरात्मसमतां प्रासेयमुर्वीतले
सारं सागरिका तथाच भुवनप्राप्त्यैकहेतुः प्रिया।
देवी प्रीतिमुपागताचभगिनीलाभा जिताःकोसलाः
किंनास्तित्वयिसत्यमात्यवृषभे यस्मै विधेयंस्पृहाम्॥

नायिकाङ्कतोयथा—हावरमअधवादिणि विअसहिलवंगिए पसादाणि पिअसहा मणाधामरणे वअमाए मग-भिणिदमणिरंतरो पऊढधीसंभसरिसंपरिसेदअपटेदि ।

यथावा—

पुणोविपणअभंगो किदावराहो अअंजणोजेण ।
एवंमंतेसिपिअसहि तुमंळवंगिअअसंपदंमे हिअअं ॥

एवं सामान्यतोऽपि यथा—

कहविळ०गाळोअणसविससनु०भडविआहिउ०कंट ।
दु०ळहजणाणुर०तं दूईओजुणिजिआवेंति ॥
क०चोसन्देस सुहंळ०तो सरसा इमोहणसुहाइ ।
चिंतामणि०चळोअंमि साहुदूइजइणवो ॥
संगमसुहासम०भहिअमणरेहाहोंति संदेसा ॥
असङ्कल्पितमप्यर्थमुत्सृष्टमविकारणात् ।
पुनरावर्तयत्येव कलावचनकौशलात् ॥

दूतीसखीनायिका व्याख्यानप्रपञ्चः । तत्र दूतीसङ्ख्यायथा—श्रूयतामस्ति विदर्भाधिपस्यनरपतेः अमात्येत्यतमारभ्य सप्यमाधवोनामेति यावत् ।

दूतीनायिका यथा—

काम—(मालत्याश्चुबुकमुपमय्य) शृणुविचित्रमिदंसुभगे अस्तितावदेकदाप्रसङ्गतः कथितपथ- मयामाधवाभिधानः कुमारो यस्त्वमियमामकीनस्यमनसो द्वितीयं बन्धनमित्युपमस्य महोपन्यास . . दा मदस्यरोपणेयतइति माधवस्य सम्प्रत्ययोत्पत्तिरितियावत् ।

दूतीनायकस्य यथा—

एवमतिदुर्मनायमानः पीडयसिमांवत्स वत्साच मालतीदुष्करनिराशाप्राणिति—पृच्छामि च तावदायुष्मन्तमपि भवानमंस्त यथाभूरिवसुरेव मालतीमसभ्यं दास्यतीत्यतः प्रमथतिकथंचन मामन- वधानां मन्यस इति यावत् ।

एवं सखीदूत्यायथा—भअवदि एव्वंवादिणवंति अवधिअंद्दाणंपि भवदिदारिआमअणसञ्जरव्वाउ- सुहुअरोदनं सत्तस्सपव्वदेयस्स वदुसोमणुभूदवसणा भविअराळिअधमुध्धकमळिणीकंदछंदाव- अवसोदयिदाविदाणं गयेमणावेभरमणीआविपरिमणकुळदिण्णाहिणंदइकळाकीळायसाणदाधंमइस- इति यावत् ।

सखी नायिकाया यथा—

अथ बिभ्रज्जटास्तन्वीः सुताम्बुकणदन्तुराः ।
स्तनार्द्रवल्कलस्ताभिरदृश्यत कपिञ्जलः ॥
स्वयमेवोपसृत्यैष महाश्वेतामभाषत ।
राजपुत्र्यपिनामायं प्रत्यभिज्ञायतेजनः ॥
अहंकपिञ्जलस्तस्यवयस्यो दयितस्यते ।
चिरागमनदौरात्म्यादुपालंभ्योऽस्मिनत्वया ॥

इत्यत आरभ्य—

कपिञ्जलकथातस्तं वैशम्पायनविग्रहम् ।
पुण्डरीकमभिज्ञाय महाश्वेतान्वतप्यत ॥
द्वितीयेऽप्यहमेवास्य जाताजन्मनिमृत्यवे ।
शप्तोममानुरक्तोऽसौ मयेति विललापसा ॥

इति यावत् ।

सखी नायकस्य यथा—

सखी तदीया तमुवाच वर्णिनं निबोधसाधो तवचेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥

इत्यत उपक्रम्य—

अगूढसद्भावमितीङ्गितज्ञया निवेदितेनैष्ठिकसुन्दरस्तया ।
अपीदमेवंपरिहासइत्युमां अपृच्छदव्यञ्जितहर्षलक्षणः ॥

इतियावत् ।

नायकेदूत्या यथा—

अथाद्यमन्तर्नगरएव कांचिद्वार्तामुपश्रुत्य माधवस्य चित्तोद्वेगमधिकमाशङ्कमानः त्वरितमवलोकिताविदित कुसुमाकरोद्यानवृत्तान्तः पारावत इव शार्दूलावस्कन्देनगोचरामिमामभिजातकन्यकामभ्युपपन्नवान् ।

नायकसख्युर्यथा–

श्रूयताम्, गतोऽहमवलोकिताजनितकौतुकः कामदेवायतनमित्यत आरभ्य।

जयतिजयिनस्तेतेभावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनोमदयन्तिये।
ममतुयदियं यातालोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः सएवमहोत्सवः॥

इति यावत्।

नायको नायिकाया यथा

त्वत्पाणिपङ्कजपरिग्रहपुण्यजन्मा भ्रामम्यिमिनिवेशकदम्बमानः।
भ्राम्यद्भूमामपणनाय परेतभूमा वाकर्ण्य भीरुरुदितानिनवागतोऽसि॥

नायिकाया दूत्या यथा —

पि ासपिउबधरऽ . ादा पढमवाद् पढवपजवधायदव ावसिअणे अचिरणिदुद्दंसणा भविअ इयत आरभ्य पिअसमअस्स सऽंगमणुभविअ इअतिसुण्णारण्णसव्वजिदंपुणायि मंदभाइणीविहोरेसिजीवलोअ इति यावत्। यथा कधपुदीअणाऽीआविच्छेदपडहो ताऽीअदि। इतियावत्।

नायिकासख्या यथा–

शकुतले जदोपहुदि ममदंसणपहंगदो तपोवणरक्खीराअसी तदो आरद्धिअतदागदेण अहिहासेणप आरिसावत्थासंडत्ता तथाकरेद यथातस्सराअरिसिणो अणुकंपणीआहोमि अध अवणदा सिंचदाणिमे उदअ।

राजा–(सहर्षं) श्रुतश्रोतव्यं विमर्शच्छेदिवचनमेतावान् कामिन इत्यारभ्य तपतितनुगात्रि मदनस्त्वामनिशंमां पुनर्दहत्येव, ग्लपयतियथाशशाङ्कं न तथाहिकुमुद्वतीं दिवसः। इतियावत्।

नायिका नायकस्य यथा–

ययाश्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः।
तपःकिलेदं तदवाप्तिसाधनं मनोरथानामगतिर्नविद्यते॥

एवमन्येऽपि यथा—

भअवदि दंसणरअजिमसाणपच्चारविच्चसिदद्दिसमपवसाअणिच्चविदचंदपसिव्ढपभदपोदंतसाह सोदसिओ, एसो अदोपिअसहिमुच्चविदा।

यथावा—

अण्णंच जाणिदव्वो भअवदीएतव्वमाहवपादिवचंदअसणाहं चिव्वफळअ 'मालत्याः स्तनांशुकः पतीयम्' एसामतव्वसपव्वसह्व्वविरहदा कंठविळविदावउळमाळा जीविदव्वपिअसहिव्वत्ति ।

यद्व्याळव्रणितसुहृत्प्रमोहमुग्धं कारुण्याद्विहितवती गतव्यथंमाम् ।
तत्कामं प्रभवतिपूर्णपात्रवृत्या स्वीकर्तुं ममहृदयंच जीवितंच ॥

अपिच—

दुर्वारां मदनशरव्यथां वहन्त्या कामिन्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शुकशिशुशारिकाभिरुक्तं धन्यानां श्रवणपथातिथित्वमेति ॥

भस्यावस्थानिवेदनात्प्रयोत्य . . . . भेदः । सर्व दूतीनायकोदासीनेषु दृष्टश्रुतानुमितभेदायस्याशानं प्रपञ्चः । तत्र सख्या दृष्टं यथा—

प्रम्लानोत्पलकोमले सखि दृशौ नीलाञ्जनेनाञ्चिते
कर्पूरच्छुरणाच्च गण्डफलके संवर्धितःपाण्डिमा ।
श्वासाः सन्तुच कन्दुकभ्रमिभुवः किन्तुप्रभावाहिनां
अङ्गानां कशिमानमुत्कटममुं कोनामनोत्प्रेक्षते ॥

सख्या श्रुतं यथा—

प्रियसखि विपद्दण्डाघातप्रपातपरम्परा
परिचयचले चिन्ताचक्रे विधाय विधिःखलः ।
*मृदमिव हठात्पिण्डीकृत्य प्रगल्भकुलालवत्*
भ्रमयति मनोनोजानीमः किमत्र विधास्यति ॥

सख्या अनुमितं यथा—

यत्तालीदलपाकपाण्डुरदनं यद्दुर्दिनंनेत्रयोः
यत्प्रेङ्खोलितकेलिपंकजवनाश्वासाः प्रसर्पन्तिच ॥
गौरी क्रुध्यतु वर्तते यदिनतेतत्कोपिचित्तेयुवा
धिग्धिक्त्वां सहपांसुखेलनसखीलोकेऽपियन्निह्नवः ॥

दूत्यादृष्टं यथा—

निकामंक्षामाङ्गी सरसकदलीगर्भसुभगा
कलाशेपामूर्तिः शशिनइवनेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुरां
इयंनः कल्याणीरमयतिमनः कंपयतिच ॥

दूत्याश्रुतं यथा—

यदि तद्विषयोऽनुरागबन्धः स्फुटमेतद्विफलं गुणज्ञतायाः ।
इति नन्दितमप्यवस्थयास्याः हृदयं दारुणया विदीर्यते मे ॥

दूत्यानुमितं यथा—

ईषत्तिर्यग्वलनविषमंकूणितप्रान्तमेतत्
प्रेमोद्भेदस्तिमितललितं किञ्चिदाकुञ्चितभ्रु ।
अन्तर्मोदानुभवमसृणंस्रस्तनिष्कम्पपक्ष्म
व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्ष्यम् ॥

नायकस्य दृष्टं यथा—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविःपाण्डुरा ।
शोच्याच्च प्रियदर्शनाच मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेनमरुतास्पृष्टालतामाधवी ॥

नायकस्य श्रुतं यथा—

तन्वङ्ग्यास्त्वमिति प्रसादविशसेर्नास्तीतिखेदालसं
चक्षुर्द्वारपथावतारिणिजने व्यापारयन्त्या मुहुः ।
हर्षार्तिप्रभवप्रतिक्षणभवत्स्वेदाम्बुदाहज्वरे
बाष्पाम्भः कणिकाः पयोधरतटे पुष्यन्ति शुष्यन्तिच ॥

नायकस्यानुमितं यथा—

स्निग्धं वीक्षितमन्यतोऽपिनयने यत्प्रेरयन्त्यातया
यातंयच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मागा इत्युपरुद्धया यदपिसा सासूयमुक्तासखी
सर्वंतत्किलमत्परायणमहो कामी स्वतां मन्यति ॥

एवं नायकविषये सख्यादीनां दृष्टं यथा—

मामूमुहत्खलु भवन्तमनन्यजन्मा माते मलीमसविकारघना मतिर्भूत् ।
इत्यादिनन्विहनिरर्थकमेवयस्मिन् कामश्चजृंभितगुणोनवयौवनंच ॥

श्रुतं यथा—

धत्तेचक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गेगात्रं क्षिपति बकुलामोदगर्भस्य वायोः ।
दावप्रेम्णासरसबिसिनीपत्रमात्रोत्तरीय
स्ताम्यन्मूर्तिः श्रयति बहुशोमृत्यवे चन्द्रपादान् ॥

अनुमितं यथा—

यदिन्दावानन्दं प्रणयिनि जनेवानभजते
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम् ।
प्रियङ्गुश्यामाङ्ग प्रकृतिरपिचापाण्डुमधुरं
वपुःक्षामंक्षामं वहति रमणीयश्चभवति ॥

नायिकातोनायकस्य श्रुतं यथा—

तुंह णआणे हिअअं महउण मअणो दिवात्तिरत्तिंवि ।
णिग्घिण तवेइ बलिअं तुइजुत्तमणोरहं हिअअं ॥

नायकतो नायिकाया यथा—

तपतितनुगात्रि मदनस्त्वामनिशं मांपुनर्दहत्येव ।
ग्लपयति यथाशशाङ्कं नतथाहिकुमुद्वतीं दिवसः ॥ इत्यादि ॥

नायकस्य स्वानुभूतं यथा—

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशिनिशि भुजन्यस्तापाङ्गप्रवर्तिभिरश्रुभिः ।
अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तंस्रस्तं मया प्रतिसार्यते ॥ इत्यादि ॥

अन्येनदृष्टं यथा—

कुवलयदलश्यामोऽप्यङ्गं दधत्परिधूसरं
ललितविकटन्यासश्रीशश्रीमान्मृगाङ्कनिभाननः ।
हरतिविनयवामोऽस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललत्तरजाङ्गलः ॥

सखीदूतीनायकानां देशकालकार्यपात्रात् भेदादप्रधानप्रपञ्चः । तत्र सत्यादेशाप्रधानं यथा ।
अयमसौ महानर्थोव्यतिकरः, सप्रपः ।

जलनिबिडतवस्त्रव्यक्तनिम्नोन्नताभिः परिगतगतभूमि स्नानमात्रोद्गताभिः ।
रुचिरकनककुम्भश्रामदाभोगतुङ्ग स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥

कालाप्रधानं यथा—

गमनमलसं शून्यादृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किन्त्वेतत्स्यात्किमन्यदतोऽथवा ।
भ्रमतिभुवनेकन्दर्पाज्ञाविकारिचयौवनं
ललितमधुरास्तेतेभावाः क्षिपन्तिच धीरताम् ॥

कार्याप्रधानं यथा—

अभिहन्ति हन्तकथमेषमाधवं सुकुमारकायमनवग्रहः स्मरः ।
अचिरेण वैकृतविवर्तदारुणः कलभं कठोरइवकूटपाकलः ॥

पात्रावधानं यथा–

इयमवयवैः पाण्डुक्षामैर्गलद्ङ्क्रमण्डना
कलितकुसुमाबल्लोबान्तर्लता परिशोषिणी ।
वहति च वरारोहा रम्यां विवाहमहोत्सव
श्रियमुदयिनीमुद्धूनां च व्यनक्ति मनोरुजम् ॥

तुल्यादेशावधानं यथा—

गाढोत्कण्ठकठोरकेरलवधू गण्डान्तपाण्डुच्छदैः
तांबूलीपटलैः पिनद्धफलितव्यानम्र पूगद्रुमाः ।
तक्कोलीफलमुग्धजग्धविकिरव्याहारिण स्तद्भुवो
भागाःप्रेंखितमातुलुंगवृतयः प्रेयोविधास्यंतिवाम् ॥

कार्यावधानं यथा–

क्षिपन्निद्रामुद्रांमदनकलहच्छेदसुभगा
मुपान्तोत्कम्पानांविहग मिथुनानां प्रथमतः ।
दधानस्सौधाना मलघुपुनिकुंजेषुघनता
मसौ सन्ध्याशंखध्वनिरनिभृतः खेविचरति ॥

कार्यावधानं यथा—

वरेऽन्यस्मिन्द्वेषः पितरि विचिकित्साचजनिता
पुरावृत्तोद्गारैरपिच कथिताकार्यपदवी ।
स्तुतं माहाभाग्यं यदभिजनतो यच्चगुणतः
प्रसङ्गाद्वत्सस्येत्यथखलुविधेयः परिचयः ॥

पात्रावधानं यथा–

शरज्ज्योत्स्नाकान्तं कुमुदमिव तं नन्दयतुमा
सुजातंकल्याणी भवतुकृतकृत्यस्सचयुवा ।
वरीयानन्योन्यप्रगुणगुणनिर्माण निपुणो
विधातुर्व्यापारः फलतु च मनोज्ञश्चभवतु ॥

नायकस्य देशावधानं यथा–

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतःफलमिहास्य ।
अथवा भवितव्यानां द्वाराणिभवन्तिसर्वत्र ॥ इत्यादि ॥

कालावधान यथा–

प्रकृतिललितमेतत्सौकुमार्यैकसारवपु रयमपिसत्यंदारुणःपंचबाणः ।
चलितमलयवातोद्भूतचूतप्रसूनः कथमयमपिकालश्चारुचन्द्रावतंसः ॥

कार्यावधान यथा—

मालत्याः प्रथमावलोकनदिनादारभ्य विस्तारिणो
भूयः स्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिपराम् ।
अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे
कल्याण विदधातुवाभगवतीनोतिर्विपर्येतुवा ॥

पात्रावधान यता–

आविर्भवन्ती प्रथमं प्रियायाः सोच्छ्वासमन्तःकरणकरोति ।
सन्तापदग्धस्य शिखण्डियूनोः दृष्टेःपुरस्तादचिरप्रभेव ॥

नायिकावधान यथा–

पळिहीपाडअपुत्रणा हिमगळेनुंगळवुणत्तीए ।
वट्टआएमणोरह भवगिणाहत्थाधरधर ॥
अज्जमएगंतव्वधणंधआरेपितव्सहुहअव्स ।
अव्झाणि मीळअच्छीपअपरिवाडिधरेवुणइ ॥

कार्यावधान यथा—

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मिन्गृहे दास्यसे
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपःपास्यति ।
एकाकिन्यपियामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्तुजरठच्छेदानलग्रन्थयः ॥

पात्रावधानं यथा—

. . एमेअअकअपुण्णाअ०पव्तमणोरहाविवज्जिरसं ।
जणवाद्दोविणजाओ तेणसमं हळिअउव्तेण ॥

स्वयङ्कृतदूनकृतगुरुकृतसहायकृतयोगात् संयोगसंविधानप्रपञ्चः । तत्र स्वयङ्कृतेषु नायककृतं नायिकाकृतंच । तेषुनायककृतं यथा—

इतोगमिष्याम्यथवेति वादिनी चचालसाच स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥

नायिकाकृतं यथा—

चन्द्रापीडं साचजग्राहकण्ठे कण्ठस्थानं जीवितं च प्रपेदे ।
तेनापूर्वां सा समुल्लासलक्ष्मीं इन्दुस्पृष्टा सिन्धुवेलेवभेजे ॥

उभयकृतं यथा—

. . पहाइअओसकाळपडिसिञ्धधीरारं ।
भेपे०चइमणञ्ध चंदअहाअधिएजुअइजणो ॥

अनुभयकृतं यथा—

त्वत्पाणिपङ्कजपरिग्रहधन्यजन्मा भूयासमित्यभिनिवेशकदर्थ्यमानः ।
भ्राम्यन्नृमांस पणनायपरेतभूमावाकर्ण्यभीरुरुदितानितथागतोस्मि ॥

दूतकृतेषु नायकापेक्षया नायिकापेक्षया उभयापेक्षया अनुभयापेक्षया च । तेषु नायकापेक्षया यथा—

प्रेयान्मनोरथसहस्रवृतः सएष सुप्तप्रमत्तजनमेतदमात्यवेश्म ।
प्रौढंतमः कुरुकृतज्ञतयैवभद्रमुत्क्षिप्तमूकमणिनूपुरमेहि यामः ॥

नायिकापेक्षया यथा—

इअजामणं मिऊसा पुरंतत्रामञ्घणीवळंतेइं ।
ताअणिरुन्द्दोधुव्वं तमइळिओचिन्तळेहाए ॥

उभयापेक्षया यथा—

पुरश्चक्षूरागस्तदनुमनसोऽनन्यपरता तनुग्लानिर्यस्यत्वयिसमभवद्यत्रचतव।
युवासोयं प्रेयानिहसुवदनेमुंचजडतां विधातुर्वैदग्ध्यं विलसतुसकामोस्तुमदनः॥

अनुभयापेक्षया यथा—

पृष्टःकालेवदतिसमापं तद्विपरीतंसस्यमरण्ये ।
लुम्पति चोष्ट्रंवाधंवा तस्मैदत्ताविकटनितम्बा ॥

गुरुकृते नायकापेक्षया यथा—

आपत्य सम्बन्धविधिप्रतिज्ञा प्रियस्य नीतासुहृदःस्मृतिं च ।
अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च ॥

नायिकापेक्षया यथा—

तमर्घ्यमर्घ्यादिभिरद्रिनाथः स्वर्गौकसामर्चितमर्चयित्वा ।
आराधनायास्य सखीसमेतां समादिदेश प्रयतां तनूजाम् ॥

उभयापेक्षया यथा—

विशेषतस्तु बालत्वात्तयोर्हिनतभावयोः ।
तेन माधवमालत्योः कार्यस्स्वमतिनिह्नवः ॥

अनुभयापेक्षया यथा—

इमांस्वसारं च यवीयसीमे कुमुद्वतीं नार्हसि नानुमन्तुम् ।
आत्मापराधं नुदतीमुपेतां शुश्रूषयापार्थिवपादयोस्ते ॥

सहायकृतेषु नायकापेक्षया यथा—

प्रारम्भेऽस्मिन् स्वामिनोवृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारीभीतएवास्मिभर्तुः ॥

नायिकापेक्षया यथा—

त्वमर्हतां प्राग्रसरः स्मृतोऽसिनः शकुन्तला मूर्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं चिराय वाच्यं नगतः प्रजापतिः ॥

उभयापेक्षया यथा—

लज्जास्तिमितमासीना मथकादम्बरीं बलात् ।
महाश्वेताग्रहाचारं चन्द्रापीडेन्यथापयत् ॥

उभयानपेक्षया यथा—

. . . संवाहंतिजेणिआजंजं । आलीहउं . . देरोमंचव्समुव्वहइ ॥

सखीदूतनायिकानां प्रभुत्वोत्साहमन्त्रदैवभेदा च्छाक्तिविवेचनप्रपञ्चः । तत्र सत्युः प्रभुशक्तिविवेचनं यथा—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर
भ्राम्यत्पिण्डितचण्डिमाकथमहोनाद्यापिविश्राम्यति ॥

उत्साहशक्ति विवेचनं यथा—

कस्यद्रोणोधनुविनगुरः स्वस्तिदेवव्रताय
त्यक्ताभ्यासः कुरुपतिरयं श्रीसमुत्थैर्विलासैः ।
भोः कर्णाद्यश्शृणुततदिमां ब्राह्मणस्यास्यवाणीं
राधायन्त्रं स्वयतपुनर्विद्धमप्यस्त्वविद्धम् ॥

मन्त्रशक्तिविवेचनं यथा—

प्रमथ्यक्रव्यादं भरणसमये रक्षितवतः
परिष्वंगं लब्ध्वातवकथमिवान्यत्ररमताम् ।
तथाच व्यापारः कमलनयनायानयनयोः
त्वयिव्यक्तस्नेहस्स्तिमितरमणीयश्चिरमभूत् ॥

देवशक्तिविवेचनं यथा—

वयं व्रतविदूरतः क्रमगता वसोःकन्यका
कथंनटवपातितादधिगतायुध . . . ।
. . त्वसहसैव मध्ये स्थितो
दृढं परशुनाहतो व्यसुरसौ कृतश्चामुना ॥

दूनस्यत्र . . पयोगाभियोगजाम् ।
इमामाक्षेपणीं सिद्धिमातनोमि हितायनः ॥

दूतस्य मन्त्रशक्तिविवेचनं यथा—

तां याचन नरपतर्नर्मसुहृन्नन्दनोनृपमुखेन ।
तत्साक्षात्प्रतिषेधःकोपाय शिवस्त्वयमुपायः ॥

उत्साहशक्तिविवेचनं यथा—

माता सपत्न्यपि नामतद्भून् पापं यदस्यां त्वयिवाविशंवयं ।
तत्सर्वथासंगमनायशलः प्राणव्ययेनापिमयाविधेयः ॥

दैवशक्तिविवेचनं यथा—

द्वीपादन्यस्मादपिमध्यादपिजलनिधेर्दिशोऽप्यन्तात् ।
आनाय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥

नायकस्य प्रभुशक्तिविवेचनं यथा—

धैर्यनिधेहि हृदये हतएषपापः किंवा कदाचिदपिकेनचिदन्वभावि ।
सारंगसंहतिविधाविभकुंभकूट कुट्टाकपाणिकुलिशस्यहरेः प्रमादः ॥

उत्साहशक्तिविवेचनं यथा—

येनारोपणकर्मणापि बहवो वीरव्रतंत्याजिताः
कार्यं सज्जितबाणमीश्वरधनुस्तद्दोर्भिरेभिर्मुदा ।
स्त्रीरत्नं तदगर्भसम्भवमितोलभ्यं च लीलायिता
तेनैषा मम फुल्लपङ्कजवनी जाताद्दशाविंशतिः ॥

समानप्रेमाणं जनमसुलभं प्रार्थितवतो
विधौ वामारम्भेममसमुचितैषा परिणतिः ॥
तथाप्यस्मिन् दानश्रवणसमयेस्याः प्रविगळ
त्प्रभं प्रातश्चन्द्रद्युतिवदनमन्तर्दहतिमाम् ॥

दैवशक्तिविवेचनं यथा—

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्यमे
दस्योरस्यकृपाणपातविषयादाच्छिंदतः प्रेयसीं ।
आतंकाद्विकलंद्रुतंकरुणया विक्षोभितंविस्मयात्
क्रोधेनज्वलितं मुदाविकसितं चेतःकथंवर्तते ॥

नायिकायाः प्रभुशक्तिविवेचनं यथा—

मनोरोगस्तीव्रं विषमिवविसर्पन्नविरतं
प्रमाथीनिर्धूमं ज्वलतिविधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
नमांत्रातुंतातः प्रभवति नचाम्बाच भवति ॥

मन्त्रशक्तिविवेचनं यथा—

ज्वलतु गगने रात्रौरात्रावखण्डकलश्शशी
दहतुमदनोकिंवापरेण विधास्यतः ।
ममतुदयितश्श्लाध्यस्तातो जनन्यमलान्वया
कुलममलिनं नत्वेवायं जनोनचजीवितं ॥

उत्साहशक्तिविवेचनं यथा—

अज्जमए गंदव्वंघणंधआरे वितस्ससुहअस्स ।
अज्जाणिमीळ अच्छीपअपरिपाडिंघरेकुणइ ॥
अद्यमयागन्तव्यं घनांधकारेपि तस्यसुभगस्य ।
आर्यानिमीलिताक्षी पदपरिपाटीं गृहेकरोति ॥

विरमरमणोद्योगादस्मात्प्रियेण तवामुना
पुनरपि महाश्वेते वत्से भविष्यति सङ्गमः ।
इति गिरमिमां श्रुत्वा तस्मात्ससम्भ्रमविस्मयाः
किमिदमितितं प्रत्यापृच्छं प्रसृत्य कपिञ्जलम् ॥

तपस्या साहसादिभिः समागमोपायप्रपञ्चः, यथोच्यते ।

तपस्या साहसं माया च्छद्म च्छलितकं हठः ।
वेषो रूपान्तरापत्ति रिन्द्रजालं विनिर्गमः ॥
. . . लेखश्चेष्टाऽनुवर्तनम् ।
कार्योपदेशः साहाय्य मित्युपायाः समागमे ॥

तेषुतपस्या यथा—

इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथाद्वयं तथाविधंप्रेम पतिश्चतादृशः ॥

साहसं यथा—

ततकोऽयमतिगम्भीरमसुराक्रान्तिदत्तरंभितकुटिलकुन्तलः कृपाणपाणिः श्मशानमधतराति . . . श्यामोऽप्यङ्गंदधाति परिधूसरेत्यादि ।

माया यथा—

रक्षसामृगरूपेणवञ्चयित्वा स राघवौ ।
जहारसीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥

छद्मयथा—

तां याचते नरपतेर्नर्मसुहृन्नंदनोनृपमुखेन ।
तत्साक्षात्प्रतिषेधःकोपाय शिवस्त्वयमुपायः ॥

छलितकं यथा—

वत्समकरन्द मनेनैव वैवाहिकेन मालतीनैपथ्येनपरिवारितः प्रवर्तस्व परिणयायात्मानम् इति ।

छद्मोयथा—

सराजलोकः कृतपूर्वसंविदारम्भसिद्धौ समयोपलभ्यम् ।
आदास्यमानःप्रमदामिषंतदावृत्यपन्थानमजस्य तस्थौ ॥

क्षेपः

. . . . . . . छमेकं वासश्च वासपरिपूर्वमृलेऽलसाङ्गः ।
सञ्चिक्लिशे कलिनरुत्तनिकेतनादिभोरणतत्क्षणमसौ मणिभूषणानाम् ॥

रूपान्तरापत्तिर्यथा—

दोर्दण्डाः क्वभृताङ्गदाः क्वचसिरानद्धौ भुजौ द्वाविमौ
वक्त्राणि क्वनुकान्तिमन्ति वलिमत्क्वेदंममेदं मुखम् ।
वाचस्ताः क्वणितार्णवध्वनिघनाः क्वायंत्रचरसंयमो
हेलाकम्पितभूधरः क्व चरणन्यासः क्वमन्दामतिः ॥

इन्द्रजालं यथा—

पइमाहव्वपलिसण्णाअवमव्विआसेससंपुरिसोसीरा ।
जळणूणि एव्जवसिलुअराहवसीसदव्सणे जणअसुआ ॥

विनिर्गमो यथा—

अयं सते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरुयतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता नवाश्रियं श्रियादुरापः कथमीप्सितो जनः ॥

लेखो यथा—

दूरंमुक्तालतया बिससितया विप्रलोभ्यमानोमे ।
हंस इव दर्शिताशो मानसजन्मा त्वयानीतः ॥

चेष्टानुवर्तनं यथा—

सामाहमासगोसव्गमञ्जरितंविड्णिपुणव्गमिअ ।
अतताअदुहेदोह्लिविंतुहे घघंमिव्ठो ॥

कार्योपदेशो यथा–

णीअइअञ्जणिल्लिपिणिधणवरग्गआएवराईए ।
घरपरिपाडिएपहेणआइतुहदंसणासाहे ॥

साहाय्यं यथा–

हेलोदस्तमहीधरस्य तनुतामालोक्यदोष्णाहतेः
हस्तावंसतटेनिधायचरणावारोप्यतत्पादयोः ।
शैलोद्धारसहायतां जिगमिषोरप्राप्तगोवर्धना
राधायाः सुचिरं जयन्ति गगनेवन्ध्याः करभ्रान्तयः ॥

इतिवृत्तस्य सन्ध्यादीनां अलब्धलाभार्थादिभेदात्समीहितसिद्धिप्रपञ्चः अर्थितया अभिप्रवृत्तस्य यथेप्सितफलावाप्तिः समीहितसिद्धिः । सा च प्रमाणप्रमेयविचारनिश्चयप्रवृत्तेरन्तरेणस्याद् अतस्तन्निबन्धना एवेति । इतिवृत्तेषुप्रतिमुखादयो बीजबिन्द्वादीनामर्थप्रकृतीनां येक्रियाविभागास्ते सन्धयोऽवस्थाः संस्थाः समवस्थाश्चाभिधीयन्ते । तत्र प्रमाणं परोक्षप्रत्यक्षोभयात्मकमपि युक्तियुक्तमेव प्रमाणमिति प्रमाणविचारेषुयुक्तेः बलीयस्त्वात्युक्तिः प्रमाणम्, यथोच्यते । 'युक्त्यायंनयदा-सुपैति तदहंदृष्ट्वापिनश्रद्दधे' । तच्च पञ्चावयवमेव वाक्यं यत्परार्थानुमानमिति आचक्षते तेचाव-यवाः प्रतिज्ञाहेतूदाहरणोपनयानिर्गमनानि । तेषां अशेषप्रमाणसमभिव्याहाररूपत्वात् । उक्तं च, तत्रागमःप्रतिज्ञाहेतुरनुमानमुदाहरणमुपमानमुपनयः, प्रत्यक्षमिति । आत्मशरीरेन्द्रियार्थबुद्धि-मनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तुप्रमेयः, तत्सामान्येन संक्षेपतो देशः कालः पात्रं शक्तिः साधनमिति । विशेषस्तु बीजबिन्दुपताकाप्रकरीकार्यमिति । यथोच्यते ।

बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वायोज्या यथाविधि ॥

तत्र बीजं महावाक्यार्थः । यथा जानकीहरणं सुभद्राहरणं कुमारसम्भवः शिशुपालवध इति । उक्तंच–

अल्पमात्रमुपक्षिप्तं बहुधायद्विसर्पति ।
फलावसानं यच्च स्यात्तद्बीजमितिकीर्तितम् ॥

बीजमिव बीजं यथा–

बीजमुत्पन्नं कुलप्रकाण्ड .... शाखाप्ररोहपल्लवपुष्पादिना प्रकारेण बहुविधा विसर्पन्त्यः फलायकल्पते तथा यो नायकमहावाक्यार्थः नायकोपनायकानुनायकप्रतिनायकसुहृत्सहाया-

दिव्याधारभेदाद्बहुधाविसर्पश्नन्तेफलाय जायते । सबीजमिति, कथाशरीराविच्छेदहेतुर्विदंभकप्रवेश-कादिरसंबद्धः संबन्धो बिन्दुः । उक्तं च ।

प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।
यावत्समाप्ति बन्धस्य सबिन्दुरितिकीर्तितः ॥

यथाहि पयोबिन्दुश्चयोनन् पयोऽभिष्यन्दलक्षणायाः क्रियाया विच्छेदहेतुः । यथावा । घृतबिन्दुः रग्निज्वलनलक्षणायाः क्रियायाः विवृद्धयेयस्यादेवंविच्छिन्नेषु कथाशरीरेषु योऽनुसन्धाता सबिन्दुरिति। कथाशरीरव्यापिनो नायकस्य प्राधान्येन यदुपकारकंस्वेन फलेन फलवत् सा पताका । यथोच्यते ।

यस्यावृत्तं परार्थं स्यात् प्रधानस्योपकारकम् ।
प्रधानबद्धफलवत्सापताकेतिकीर्तिता ॥

यथाहि पताकानायकस्य चिह्नरूपौ प्रवेशोभायै भवन्ति, स्वस्यापि प्रकर्षशोभायै भवन्ति, एवमितिवृत्तेषु यदुपनायकादेः चरितं तत्प्रधानस्य आत्मनश्चशोभा प्रकर्षोपजायमानं पताकेत्युच्यते, पताकैव फलत्यनुबन्धविहीना च प्रकरी, यथोच्यते ।

फलं प्रकल्पते यस्याः परार्थायैव केवलम् ।
अनुबन्ध विहीनां तां प्रकरीति विनिर्दिशेत् ॥

प्रकरीवप्रकरीलघुर्हिप्रकरः प्रकरीत्युच्यते, सतु पुष्पादीनामेवस्यात्, स च पुष्पप्रकरः परार्थोपकार-कादेश्ययनस्थानस्यान्यस्यवा शोभायैभवति । एवं महाप्रबन्धय ऋतुवर्णनादिरन्योवाकोऽपि तद्विधो व्यापारः सा प्रकरी । धर्मादीनामन्यतमपुरुषार्थः कार्यम् , यथोच्यते ।

यदाधिकारिकं वस्तुसम्यक्प्राज्ञैः प्रयुज्यते ।
यदर्थस्तुसमारम्भः तत्कार्यमिति कीर्तितम् ॥
प्राचेतसो मुनिवृषा प्रथमः कवीनां
यः पावनं रघुपतेः प्रणिनाय वृत्तम् ।
भक्तस्य तस्य सुमहान्तिममापिवाचः
ताः सुप्रसन्नमनसः कृतिनो भजन्ताम् ॥ इति ॥

बीजस्य —

हा वत्साः खरदूषणत्रिशिरसो वध्याः स्थ पापस्य मे
हाहा वत्स विभीषण त्वमपि मे कार्येण हेयः स्थितः ।
हा मद्वत्सल वत्स रावण महत्पश्यामि ते संकटं
वत्से कैकसि हा हतासि न चिरं त्रीन्पुत्रकान्द्रक्ष्यसि ॥

बिन्दोः —

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापतीन्
आश्वास्याश्रुमुखान्मुहुः प्रियसखान्प्रेष्यान्समादिश्य च ।
संरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥

पताकायाः —

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपातपतनाद्भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
आ ज्ञातं स जटायुरेष जरया क्लिष्टो वधं वाञ्छति ॥

प्रकर्याः —

यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका तथा च भुवनप्राप्त्यैकहेतुः प्रिया ।
देवीप्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मै विधेयं स्पृहां ॥

इति कार्यस्य पञ्चमर्थप्रकृतीनां साधर्म्यवैधर्म्याभ्यां अवगततत्त्वस्य हानोपादानोपेक्षाबुद्धिहेतवे विचारः। स च पञ्चाङ्गः कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत् , देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेति । तस्य च विनिश्चयावस्थायां, पञ्चकर्माणि अनुपलब्धस्यज्ञान मुपलब्धस्यनिश्चयबलाधानमर्थद्वैधस्यसंशयच्छेदनमेकदेशदृष्टस्यशेषोपलब्धिर्विपर्ययेविचिकित्साचेति । तेन च निर्णीता अभिमतफलसिद्धिः, अलब्धलाभार्थं, लब्धपरिरक्षार्थं, रक्षिताभिवृद्धये वर्धितोपयोगाय

उपयुक्तपर्याप्तयेच वर्तमानः यं यं क्रियाप्रबन्धस्कन्धमध्यास्ते तस्यतस्य मुखप्रतिमुखाकृतिभिः सन्ध्यादया व्यपदेशाभवन्ति। तेचसन्धयोऽवस्थासंस्थासमवस्था इति, तत्र मुखः प्रतिमुखो गर्भो विमर्शो निर्वहणं इत्यारंभात्परिसमाप्तिपर्यन्तायाः प्रवृत्तेः पञ्च सन्धयोभवन्ति, यथोच्यते।

मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव हि।
तथा निर्वहणं चेति सन्धयः पञ्चनाटके॥

तत्राधिकारिणो नायकादेर्यत्र निर्देशस्तन्मुखम्, उक्त च।

यत्रबीजसमुत्पत्तिर्नान थंग्मसम्नया।
कथाशरीरानुगता तन्मुखं परिकीर्तितम्॥

यत्र फलार्थायाः प्रवृत्तेरुपक्रमस्तत्रेतुर्वा तत्प्रतिमुखम्, यथोच्यते।

बीजस्योद्घाटनं यत्र दृष्टनष्टमिनक्कचित्।
मुखेन्यस्तस्य दृश्येन तद्वै प्रतिमुखं स्मृतम॥

यत्र क्रियाफलस्योद्भेदः .... नागरघिपणादयो जायन्ते सगर्भः, यथोच्यते।

उद्भेदः कार्यबीजस्य प्राप्तिरप्राप्तिरेव वा।
पुनश्चान्वेषणं यत्र सगर्भ इति संज्ञितः॥

क्रियाफलावाप्तये विचारनिर्णयो विमर्शः। यथोच्यते।

गर्भनिर्भिण्णबीजोऽर्थः क्रोधव्यसनजोऽपि वा।
विप्रलम्भकृतोवापि विमर्श इति कीर्तितः॥

क्रियाफलेन सम्यग्योगो निर्वहणम्, यथोच्यते।

यत्रानयनमर्थानां मुखाद्यानां महौजसाम्।
फलोपसङ्गतानां स्याज्ज्ञेयं निर्वहणं च तत्॥

इहोदाहरणमेकश्लोकेन।

कथमविकृतप्रत्यापत्तौ प्रियेस्खलितोत्तरे
विरहकृशयाकृत्वा व्याजं प्रकल्पितमश्रुतम्।
असहनसखीश्रोत्रप्राप्तिप्रमादससम्भ्रमं
विवलितदृशा शून्येगेहे समुच्छ्वसितंपुनः॥

एवं महाकाव्येष्वपि रत्नावल्यादिषु द्रष्टव्यम्। तेषां च फिलोत्क्षेपपरिकरपरिन्यासादीनि चतुष्षष्टि-रङ्गानि तानिचनेहप्रतन्यन्ते। अभ्युपगतत्वात्। यथानुपक्षेपादयस्तथोद्योतादयोऽपि संभवन्त्येव। तथाचते प्रबन्धेष्वाधिकारिका आनुषङ्गिकाः प्रासङ्गिकावाप्रयोक्तव्याः। यथासन्दर्भशोभायै भवन्ति तेनानुसन्ध्यादीनामपि समावेशः सिद्धो भवति। तत्रकिमाधिकारिकं किमानुषङ्गिकं किं प्रासङ्गिकमिति चेत्।

तत्कार्यंहि फलप्राप्तौ समर्थः परिकल्प्यते।
तदाधिकारिकं ज्ञेयमन्यत्स्यादानुषङ्गिकम्॥
कारणात्फलसौभाग्यवृत्तं स्यादाधिकारिकम्।
तस्योदाहरणार्थं तु प्रासङ्गिकमिहोच्यते॥

एतेन पञ्चसन्धय साङ्गाः सानुषङ्गसङ्काश्च दैवपौरुषोभयव्यापारवशानतया त्रेधा सम्भवन्ति अवस्थाः सत्याः समवस्था इति, तत्र वासुदेवस्य प्राधान्य ता अवस्थाः, दैवकृतोहि कार्यपरिणामोऽवस्था। तत्र पौरुषमुदासीन आस्ते, दवमेव न प्रधानत्वेन व्याप्रियते। तत्र ह्यनुगुणेकार्यमारब्धमारम्भादिभद्र्यासिध्यत्येव। के पुनरारम्भादय.।

आरम्भप्रयत्नौ प्राप्त्याशा नियताप्तिफलागमाः।

तत्र—

औत्सुक्यमात्रबन्धस्तु यो बीजस्य निबध्यते।
महतः फलयोगस्य स खल्वारम्भ इष्यते।
अपश्यतः फलप्राप्तिर्मनोव्यापारः ..........।
फलं प्रतिफलौत्सुक्यगमनं प्रसव उदाहृतः।
ईषत्प्राप्तिर्यदा काचित्फलस्य परिकल्प्यते।
भावमात्रेण तं प्राहुरुद्भेदमिह सूरयः।
नियोगात्तु फलप्राप्तिं यदाभावेनपश्यति।
किञ्चिच्छेषां समाप्तिं तामाप्तिमन्तः प्रचक्षते।
अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम्।
इतिवृत्ते भवेद्यत्र समाप्तिः सा निगद्यते।

अत्र

— ग्रन्थपातः —

इति श्रीमहाराजाधिराज श्रीभोजदेव विरचिते
शृङ्गारप्रकाशे दूतविशेष दूतकर्मोपवर्णनं नाम एकोनत्रिंशः प्रकाशः॥

॥ श्रीः ॥

# महाराजाधिराज श्रीभोजदेवविरचिते

# शृङ्गारप्रकाशे

## ॥ त्रिंशः प्रकाशः ॥

एवं साधर्म्यवैधर्म्याभ्यामनुरागस्य रूपमभिहितम्। इदानीं वैधर्म्यतो मानस्वरूपमुच्यते। साधर्म्यतस्तु प्रथमानुरागेणैव। तदुक्तम्, तस्य चतुर्णामपि विप्रलम्भभेदानां साधारणत्वात्, . . . . . . घा सामान्ये विचित्र इति। वैचित्र्यापेक्षया प्रवासात्प्रथमंमानोऽभिधीयते। कथं पुनरस्यवैचित्र्यम्, श्रूयताम्, अर्थादिदोषोऽपि मद इव मतङ्गजेषु विग्रहोऽपि सहकारभाव इव माकन्देषु कार्श्यादिहेतुरपि तपःप्रबन्धइव सात्त्विकेषु प्रियविनो . . . त्याग इव वदान्येषु, कटुरपि मरीचादिचूर्ण इव भेषजेषु, कलुषोऽपि कज्जलनिवेशइव वनिताल्लोचनेषु, दुरासदोऽपि भ्रमरभर इव प्रसूनसंस्तरेषु, वक्रोऽप्युक्तिविशेष इव कविकाव्येषु, यूनां मनस्सूपजायमानः प्रकर्ष . . . . प्रेमसम्पदः सम्पद्यते, तदुक्तम्।

रइविग्गहम्मिकुंठीकआओ धाराओ पेम्मखग्गस्य।
अण्णमअव्वणछिज्जंतिमाणसाणाएमिहुणाणं॥

रतिविग्रहे कुंठीकृताधाराः प्रेमखड्गस्य।
अन्नमयानीव छिद्यन्ति मानसानि ह्यन्योन्यमिथुनानाम्॥

णूमंति जे पहुत्तं कुविअंदासव्वजेवसाअंति।
तेच्चिअमहिळाणपिआ सेसासामिच्चिअवराआ॥

गोपायन्ति येप्रभुत्वं कुपितं दासाइवयेप्रसादयन्ति।
तएव महिलानांप्रियाः शेषाः स्वामिनएववराकाः॥

अपि च—

अव्वत्सरूसणंखणपअस्सणं सुणिअवअणणिव्वंघो ।
उंमव्वत्थअसंतवोपुव्वअपअंसिणेहव्म ॥
जव्वधणउज्जव्गिरओजंघणईसाविसूरणिमाणं ।
सव्भावचाटुअव्जव्वधणव्धिणेहोहिव्णव्धि ॥

अन्तर्हितरोषणं क्षणप्रसादनमलीकवचननिर्बन्धः ।
उन्मस्तक सन्तापः पुत्रपदं स्नेहस्य ॥
यत्नोज्ज्वालक यत्नेर्ष्यापि गर्हणं मानः ।
सद्भाव चाटु यत्रनास्ति स्नेहस्तस्मिन्नास्ति ॥

कापुनरयं मानोनाम । यस्यैव त्रिभुवनेऽपि मानोमान इति महान्महत्त्ववादः । उच्यते । इष्टधुताद्यपराधजन्मा मिथो मिथुनमानसेषु रोषो मानः । सविषयाश्रयालम्बनभेदादनेकप्रकारः यस्मिन्मानउत्पद्यते सविषयोव्यलीकाप्रियादेरपराधस्य कर्ता धीरोद्धतधीरललितधृष्टशठादिनायकप्रकारः यस्योत्पद्यते स आश्रयो व्यलीकविप्रियादीनां योद्धाधीरधीरोद्धतोदात्तादिनायकप्रपञ्चः, यत उत्पद्यते तदालम्बनं व्यलीकविप्रियाद्यपराधः तेनानयोर्माने मिथो विपर्ययः । परस्पराश्रयाविषयभावश्च व्याख्यातः, स उत्तमः कनीयान्मध्यमश्च, नायिकानायकोभयाश्रयभेदात्, तेषु नायिकाश्रय उत्तमः । स यथा–

परिउव्चिआणजंपइगहिआविव्पुरइचुंबिआरुअइ ।
तुव्णिव्काणववहुआकआवराहेण दइएण ॥

नायकाश्रयः कनीयान्, स यथा–

तणुआइआवराईदिअहेदिअहेमि अंकळेहव्व ।
बहुळपओसेणतुएणिसंसकोअंघआरिअमुहेण ॥

तनुकायिता वराकीदिवसेदिवसे मृगांकलेखेव । बहुळप्रदोषेण त्वयानृशंस अंधकारितमुखेन ॥

उभयाश्रयो मध्यमः, स यथा–

पणअकुइआणदोव्णपि अळिअपसुव्ताणमाणइल्लाणं ।
णिव्चळणिरुव्दणीसासदिव्णकण्णाणकोमव्लो ॥

प्रणय कुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः। निश्चलनिरुद्ध निश्वासदत्तकर्णयोः कोमल्लः ॥

अथैतेषु मानविषयाश्रयालम्बनभेदाः मानजातयः, मानविशेषाः, विषयप्रकीर्णानि, आश्रयप्रकीर्णानि, आलम्बनप्रकीर्णानि, विषयकर्माणि, आश्रयकर्माणि, प्रकीर्णकर्माणि, मानविकाराः, मानोपलक्षणस्थानानि, मानोत्पत्तिकारणानि, मानोद्दीपनानि, मानविलासाः, मानमोट्टायितानि, मानसुखानुभवाः, मानोत्पत्तिप्रकीर्णानि, मानोपाधिभङ्गाः, मानभङ्गकारणानि, मानोपशान्तयः, मानोपशमलक्षणानि, मानभङ्गोपायः, मानानुभवसौख्यानि चेति चतुर्विंशतिरर्थाः पृथक्पृथक् . . . . पभेदभिन्नाः क्रमश उदाह्रियन्ते। तत्र विषयाश्रयालम्बनभेदोपभेदेषु धैर्यगुणप्रकृतिप्रवृत्तिनिमित्ताः धीरोदात्तधीरोद्धतधीरललितउत्तममध्यमकनिष्ठमात्त्विकराजसतामस दक्षिणशठ धृष्टनामानो-मानोपयोगिनो द्वादशगुणविषयभेदाः गुणवयोधैर्यप्रकृतिनिमित्ताः उत्तमामध्यमाकनिष्ठामुग्धामध्याप्रगल्भा धीराधीरा उदात्ता उद्धता ललिता शान्ताभिनयनामानसम्बन्धिनो द्वादश। आश्रयभेदाः। प्रत्यक्षादिप्रमाणजन्मानो मानोत्पत्तिहेतवः दृष्टादृष्टार्थापत्त श्रुताश्रुतार्थापत्तशङ्कितसमाधितानुमितोपमितविपरीतोत्प्रेक्षितस्मृतस्वप्नोपलब्धाह्वया द्वादशैवालम्बनभेदाः। सैषा विषयाश्रयालम्बनविशेषभेदोपा धिनियन्धनषट्त्रिंशत्तदुपाधिलक्षयोदाह्रियन्ते। तत्रविषयविशेषोपाधिनियन्धनेषु धीरोदात्तविषयो यथा—

तदवितथमवादीर्यन्मम त्वं प्रियेति प्रियजनपरिभुक्तं यद्दुकूलं वसानः।
मदधिवसतिमागाः कामिनां मण्डनश्रीः व्रजति हि सफलत्वं वल्लभालोकनेन ॥

धीरोद्धतविषयो यथा–

आताम्रतामपनयामि त्रिवर्णएप लाक्षाकृतां चरणयोस्तवदेवि मूर्ध्ना।
कोपोपरागजनितां नु मुखेन्दुबिम्बं हर्तुंक्षमायदिपरं करुणामयिस्यात् ॥

उत्तमविषयो यथा—

कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥

मध्यमविषयो यथा—

पेञ्छसि अणिमिसणअणोजप्पसिव्रिणअंणदंससेवव्ठिं।
कोसुहअतुज्झदोसोहअहिअअंणिव्ठुरंम्मज्झ ॥

कनिष्ठविषयो यथा–

अहयंहिसमअंउपयोव्द्धारेखहञ्कुणन्तञमि ।
पअवहुआए सरोसं सञ्वञ्चअवञ्चआमुञ्क ॥

सात्त्विकविषयो यथा–

यदि मनसि शमः किमङ्ग चापं शठविषयास्तव वल्लभानुमुक्तिः ।
भवतु दिशतु नान्यकामिनीभ्यः तव हृदये हृदयेश्वरावकाशम् ॥

राजसविषयो यथा–

लीलावतीचरणचुम्बितमौलिमग्रे कान्तं विधूय विहितागसमुच्चचाल ।
अत्रान्तरे मुखरनूपुरयुग्ममस्याः सौभाग्यगन्धगजडिण्डिमतां जगाम ॥

तामसविषयो यथा–

ईसामञ्चरगुरुएसामिञ्स्वेत्रपरिवञ्डिओपाळंभे ।
कह्कहविगमेइ्खणंत्रिळञ्खहसिएविकामिणीसमुल्लावे ॥

दक्षिणविषयो यथा–

पिअविरहोअ॰पिअदंसणंअगुरुआइंदोविक॰जाइ ।
जीएतुमंकारिज्जसितीएणमोआहिजाईए ॥

प्रियविरहोऽप्रियदर्शनं च गुरुणी द्वेदुःखे । यथालंकारिष्यसे तस्यैनम आभिजात्यतायै ॥

शठविषयो यथा–

अविशदवलन्नेत्रोपान्तं विलोकनमस्फुटं
चकितचकिता वाचः स्पर्शाः क्वचिज्जनसङ्कुले ।
इति तव मया प्रेमारम्भे य एव विलोकिताः
कठिनमनसो दुष्टा भावास्त एव विरज्यताम् ॥

धृष्टविषयो यथा–

अ॰ळिअइदि॰ठिणि॰भ॰चिओपिचिहु॰ओपिळ॰गएसिए ।
वहओ विचुंवइयळाअळ॰जणकहणुकु॰पि॰सं ॥

आश्रयविपर्योपाधिनिबन्धनेषु उत्तमाश्रयो यथा–

हसिएहि उवाळ०भा अ०चुवआरेहिँ रोसिअ०वाइ ।
असूहि खंडणाइँ एसो माणो सुमहिळाणं ॥

हसितैरुपालंभा अत्युपचारैः खेदितव्यानि । अश्रुभिः खंडनानि एषमानः सुमहिळानां ॥

मध्यमाश्रयो यथा–

णत्रि तह अणाळवंती हिअअंदूमेइमाणिणी अहिअं ।
अहदूरविअ•भिअगुरुअरोसम०झ०त्थभणिएहि ॥

नापितथानालपन्ती हृदयं परितापयति मानिन्यधिकम् ।
यथादूर विजृंभितरोप गुरुमध्यस्थवचनैः ॥

कनिष्ठाश्रयो यथा–

हु०णि०ळ०जसमोसरत०चिअणुणेसुजाएअप्पा ।
पाअंगु०ठाइ•तअरसेणतिळअ०त्रिणि०मत्रिआ ॥

हुं निर्लज्ज समपसर तामेवानुनयययात्वेतत् । पादांगुष्ठालक्तकरसेन तिलकंविनिर्मितं ॥

मुग्धाश्रयो यथा–

सा पत्युःप्रथमापराधसमये सख्योपदेशं विना
नोजानाति सविभ्रमाङ्गवलना वक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्त नेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥

मध्यमाश्रयो यथा—

उत्तिष्ठामि विमुञ्चनाथ सुतनु क्वस्थिता नकचित्
नेच्छामिप्रभुणैकमासनमहं जातः कथं वा प्रभुः ।
स्वाच्छन्द्यान्ननु किं कृतं तव मया नो किञ्चिदित्थं गिरा
तन्वङ्गीदयितं दुनेति रुदती कृत्वा मुखं वक्षसि ॥

प्रगल्भाश्रयो यथा–

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद् रतः
 ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि नमिश्रितःपरिजनं व्यापारयन्त्यान्तिके
 कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥

धीराश्रयो यथा—

घरिओअमरिसपसरोमाण॰खळणेविणपडिओ॰चिअबाहो ।
तीएण वरं पिअअमे गहिओणिअ॰त॰तळोअणंणीससिअं ॥

अधीराश्रयो यथा —

यावन्नोसखिगोचरं नयनयोरायाति तावद्द्रुतं
 गत्वाब्रूहि यथाऽयतेदयितया मानः समालम्बितः ।
दृष्टेधृष्टविचेष्टिते तु कितवेतस्मिन्नवद्यं मम
 स्वेदाम्भः प्लुतिरोधनिर्भरतनोः स्मेरंमुखंजायते ॥

उदात्ताश्रयो यथा—

भ्रूभेदेन कृतःकृता मुखशशीछायादिना मादृशी
 कालुष्येण न लम्भिताः कलगिरा कोपः स्वतो लक्ष्यते ।
यत्प्रागल्भ्यमपास्य सम्प्रति नवीभूतं पुनर्लज्जया
 यच्चायं विनयादरः प्रणयिनामुक्तोमहान् वर्तते ।

उद्धताश्रयो यथा–

गोत्राद्गोत्रमुपैति चञ्चलतया यापादमूलात्प्रभो-
 र्दृष्टायाचपितुर्ममेतिपटके दृष्टापतन्ती जलम् ।
सेयं सागरिका त्वया पशुपते मूर्ध्नानचारोपिते-
 त्युक्तः कोपकषायपाटलदृशादेव्या हरः पातुवः ॥

ललिताश्रयो यथा–

भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रतां
ईषन्मां प्रति भेदकारिहसितं नोक्तं वचोनिष्ठुरं ।
अन्तर्बाष्पजडीकृतं प्रभुतयाचक्षुर्नविस्फारितं
कोपश्चप्रकटीकृतोदयितया मुक्तश्च न प्रश्रयः ॥

शान्ताश्रयो यथा–

सख्यः किंपरुषैर्विमुञ्चतरुषं तस्यापराधः सकृत
क्षन्तव्यश्चपलस्य मांप्रतिपुनःकर्ताप्रियो नाप्रियम् ।
इत्थं मानपरिग्रहव्यतिकरं हित्वा तथा प्रत्युत
प्रारब्धानुनया यथापरिजने नैवाकुला हस्यते ॥

आलम्बनोपाधिनिबन्धनेषु दृष्टापराधालम्बनो यथा—

म०झ०समुहावराहंतुहंकरंत०सदलिअदक्खिणगुणं ।
अगणिअपरिवाअभअंजुअइजण०मिवह०तणंणिबडिअं ॥

अदृष्टापराधालम्बनो यथा—

प०च०खमंतुआरअजइचुंबसिमहइमेहअकओळं ।
तोम०झपिअसहीए विसेसओ किं०सत०णाओ ॥

प्रत्यक्षमन्तुकारकयादिचुंबसि इमौहतकपोलौ । तस्मान्ममप्रियसख्या विशेषः कः कस्मादार्द्रः ॥

श्रुतापराधालम्बनो यथा—

प०तिअणप०तिअंती जइतु०झणहो०तिम०झरुअरीए ।
पु०ठीएबाहविंदपुळउ०भेएणहिज्जंता ॥

प्रतीहि अप्रतियन्ती यदितवैव न तवरोदनशीलायाः ।
पृष्ठेबाष्पबिंदवः पुलकोद्भेदेनभिद्यमानाः ॥

अश्रुतार्थापन्नालम्बनो यथा—

निर्मग्नेन मयाम्भसि स्मरभयादाली समालिङ्गिता
केनालीकमिदं तवाद्य कथितं राधे मुधा ताम्यसि ।
इत्युत्स्वप्नपरम्परासु शयने श्रुत्वागिरंशार्ङ्गिणः
सव्याजं शिथिलीकृतं कमलयाकण्ठग्रहः पातुवः ॥

शङ्कितापराधालम्बनो यथा—

पइणाव॰णि॰जंते अ॰खाणअसुंदरीएरूवंमि ।
ईसाम॰चरगरुईघरिणीहु॰कारअंदेइ ॥

पत्यावर्ण्यमाने आख्यानके सुंदर्यारूपे । ईर्ष्यामत्सरगुरुकं गृहिणीहुंकारं ददाति ॥

सम्भावितापराधालम्बनो यथा—

णाकुणंति॰चिअमाणं णिसासु पासु॰तधरविश्रंधासु ।
सो॰णइ असकणपरिभूसण॰वेअणं॰जइसिञ्जाणन्तो ॥

नाकरिष्य पचमानं निशासुसुप्तसुतदरविधुराम् ।
शून्यीकृतपार्श्वपरिमोषण वेदनां यद्यज्ञास्यः ॥

अनुमितापराधालम्बनो यथा—

णहमुहपसाहिअंगो णिव्दाघुम्मन्तलोअणोणतहा ।
जहणिव्वणाहरोसामळंगदूमेसिमहहिअइं ॥

उपमितापराधालम्बनो यथा—

गोत्तक्खळणविळक्खोरेहं अळिहसिकिंमहोपव्ठे ।
अहसञ्चणिव्वडिआ अणुराअपरवसे हिअए ॥

विपरीतापराधालम्बनो यथा—

भुजगफणसहस्रस्वच्छरत्नासबिम्बे निजवपुषिसपत्नीशङ्कयेर्ष्याकुलायाः ।
समलिहृदयघातान्नूनमव्धेः सुतायाःचरणमवतुमृद्गत्कंसविध्वंसकृद्धः ॥

उत्प्रेक्षितापराधालम्बनो यथा—

जंतअमेन्तं तीइणिव्वोदुव्वेसुतवंतिअपणिअण्णजणो ।
त्रिणिअन्तपसाअदुक्खसहणक्खमोसव्वोरा ॥

स्मृतापराधालम्बनो यथा—

घोआरूढमहुआखणव्पहुव्घोवराहदिण्णलाव ।
हसिऊणसव्वणविव्जइपिएणसव्भरिपुळव्जआकात्रि ॥

स्वप्नोपलम्भापराधालम्बनो यथा—

भूयश्चाहं त्वमसि शयने कण्ठलग्ना पुरामे
निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा ।
सान्तर्हासं कथितमसकृत्पृच्छतश्च त्वयामे
दृष्टःस्वप्ने कितव रमयन्कामपि त्वं मयेति ॥

अथामीषामेव भेदा श्चतुर्विंशतिर्मानभेदजातय उच्यन्ते । तेच मामः, कोपः, क्रोधः, उपालंभः, रोषः, ईर्ष्यायितं, मन्त्रयुतं, असूयितं, वैमनस्यं, उन्मादः, मन्युः, मात्सर्यं, अभिनिवेशः, अवज्ञावि॰स्फुरणं, वैलक्ष्यं, अनुशयः, कालुष्यं, क्षोभः, आवेगः, अमर्षः, कोपातिरेकः, उन्मदं, प्रणयकलह इति । तेषु स्त्रीणां ललितकोपो मामः,

भ्रूभेदिभिर्विकम्प्रोष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्रकोपैः कृता स्त्रीणामप्रसादार्थिनः प्रियाः ॥

यथा—

दृष्टिं रुषा क्षिपसि यद्यपि भामिनीमां स्निग्धेयमेष्यति तथापि नरूक्षभावम् ।
त्यक्त्वात्वरां व्रजपदैस्खलितैरयंते खेदं गमिष्यति गुरुर्नितरांनितम्बः ॥

षड्ढमादौ वै . . . . हेतुः कोपोयथा—

दूमेइअमंहिअं पुणोपुणोविरहसंगजु॰ताणुणअं ।
दोसपरापु॰तठिअंतळ॰तणि॰वोळिअहर॰तिएमुहं ॥

यथावा—

प॰ठंतिमअणपसरूपसाअसमुहाविळासिणीसमु॰ळवं ।
तीएउणत॰सदीरइरोसपरापु॰तज॰पिएहिविहिअं ॥

सएव स्यात्ययादिहेतुः क्रोधो यथा—

मंतूणविहरविजिअं . . इअणोसरिअं ।
माइरमण॰खळणंरे॰जतुजअईणतिळअळहुईणपिआ ॥

यथावा—

म॰झ॰चिअ॰वअणि॰जं अमर॰तीए गुरुए . . . ।
सोह॰गपड॰चूडो माळ॰जविआतुम॰णपावइअअसो ॥

प्रियादिषु व्याजनिन्दोत्प्रासो यथा—

साकुसुमेहि गुरुइआ महविकओसुह अदंसणेणपसाओ ।
कहअणपिसाअस॰दो ळ॰गइ णसहि अअस॰ळ॰स तुह ॥

यथावा—

कीरइगुणोविदोसोसेवत॰मिविदिणेण दि॰जइदि॰ठि ।
अजस॰सणभीभि॰जइजहगहिअंतहपहु॰तणं रमणि॰जं ॥

प्रियापराधात् मनस्संरम्भो रोषो यथा—

तहबंधणअणुराए त हसंमोहविअळ॰तविसामा ।
ळावेते॰चिअतीएमअगुणारोस॰ति॰ठिआपसाअविमुहंमिमुहे ॥

यथावा—

णयणपहोळिरबाह॰पुरिआहरमे॰तणीसह॰वविअणीसा ।
संदूमेइधरगओअंतीसे रोसविरिमाळण॰महिअं ॥

समानाच्च दानमानाद्यमर्षणमीर्ष्यायितं यथा—

वाओर॰दपणव॰इरिवरइअक॰णवअ॰सदु॰पे॰चे ।
धाहगुरुअणसंमइबाहुएवहूमुहे दि॰ठी ॥

यथावा—

जोतीए अहराराओरंत्तिउत्रासिओपिअअमेण ।
सोण्णिअदीसहगोसेसवत्तिणअणेसु संकंत्तो ॥

यस्तस्याधररागोरात्रिमुद्वासितः प्रियतमेन । सएवप्रभाते दृश्यते सपत्नीनयनेषुसंक्रान्तः ॥

अनुनयापेक्षो मन्युर्मन्युतं यथा—

कुविआअ स°चभामा अणुमरिसेपहइणीणपरमाणं ।
खळणे°पाअडिअणिअं सारो पे°मासंगमरिसोअंगईमंतू ॥

कुपितात्रसत्यभामा समेपि बन्धूनां मानस्खलने ।
प्रकटितहृदयसारः प्रेमाभ्याससदृशःप्रवर्तते मन्युः ॥

यथावा—

अत्रान्तरे ललितहारलता नितम्बसंवाहनस्खलित वेगतरंगितांगी ।
देवीव्यपास्यशयनं धृतमानतन्तुरन्तः पुरंगतवती सहसौविदल्लैः ॥

परव्यंसहनमसूयितं यथा—

तोणिणिअपे°मपडिपसाअदूमाण°असहंतिचळिआ ।
जावपइणोचळ°तणेडरपळावक°ढिअहिअआ ॥

यथावा—

गोत्राद्गोत्रमुपैति चञ्चलतया या पादमूलात्प्रभोः
भ्रष्टा या च पितुर्ममेव कटके दृष्टा वहन्ती जलम् ।
सेयं सात्विका त्वया पशुपते मूर्धान्समारोपिते
त्युक्तः कोपकषायपाटलदृशा देव्या हरःपातुवः ॥

दर्पावसादो वैमनस्यं यथा—

णीसासागमधूसरोऽतिमहरोतव्वोळकाओवच्छिदो
हु°धु°ह • चिगळेसिद°चवअणंबाहु°ळग°ड°किणो ।
दामाणं बहुत्र°ळह°सहिअअव्वारिंजमाणिणी
एर्ह्निमापरितम्मगाढहिअआगोदूणसव्वंसहा ॥

यथावा–

वेसेणणऽधिदुक्खकअच्चअन्तपेमणम्मसंमिपिओउहुइ ।
वेशावणरमणरण्णअमाणणीए माण॰खळणं ॥

विरुद्धवाक्यादिज कोपातिशय उन्मादो यथा–

साहसुविळासिअणिज्जे हिळन्तिसरसावराहपिअआकिं ।
अरहव खळणगुणाओ पहवंताणसुराअए ससहाओ ॥

यथावा —

आमपिअ . . ऋतुहमणरूवसहि रआमणि॰गुणा अंहे ।
जोवातीएण सरिसो सो किं सव्वो जणो मरउ ॥

अपराधजन्मदुःखोत्पीडितो मन्युर्यथा—

आमूर्च्यान्तेश्वसितमरुतो यत्कुचोत्सेदकम्पैः
अन्तर्ध्यानात्त्रुटति च बहिर्यादशोलक्षभावः ।
पक्ष्मोत्क्षेपव्यतिकरहितो यश्च बाष्पस्तदेते
भावाश्चण्डिद्रविनहृदयंमन्युरावेदयन्ति ॥

यथावा–

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निश्वासैरयममृतहृद्योऽधररसः ।
मुहुर्लग्नः कण्ठे तरलयति बाष्पस्स्तनतटीं
प्रियो मन्युर्जातस्तवनिरनुरोधेनतुवयम ॥

परगुणसम्भावनासहिष्णुता मात्सर्यम् यथा—

वेसोसिजीअपंसुळअ हिअअरंमाहुवळ्ळहातुज्झ ।
इअजाणिऊणत्रिमएणईसिअंदव्वटपेम्मस्स ॥

यथावा–

सव्विअरामेइतुम॰पडिअइ॰तिअळंहरणमिएण ।
स॰भाववाहिदाळ॰जाजाणइअंगमंगाइं ॥

अभिनिवेशः यथा–

णसहिअणुणअभणिअंणदेसिपसरं॰ठहोसमु॰कामरिसं ।
कहआएकरचिअदूरविसव्वइअ॰णिठुर॰तुहहिअं ॥

यथावा–

तहमाणो माणहणाएतएमेअदूरमणुबंघो ।
जहसेअणुणीअपिओए॰क॰गाम॰विअपड॰ते ॥

तथामानोमानधनाया तया दूरमनुबद्धः । यथातस्या अनुनीय प्रियएकमामएव प्रोषितः ॥

. . . एवा यथा–

छिन्दानं हृदयं मतिं विधुरया दाक्षिण्यमुन्मीलयन्
देवोत्प्रासनया जनेन जनितं यत्प्रेम सापि प्रियम् ।
सोढुं हन्तुमपेक्षितुंजरयितुं निह्नोतुमुत्पुंसितुं
निध्यातुंगदितुं च न प्रणयिभिः तज्जन्मना पार्यते ॥

यथावा–

पे॰म॰सविरोहिंअसंदिठ्ठिअ॰सप॰च॰खदि॰ठविळअ॰स ।
इअअ॰सवताविसंअइ॰सविरसो रसो होइ ॥

अवशा विसूरणं यथा–

. . . . . ळामएजीविदं घरंदीए ।
सोअमवमणेइ॰रिओ अह॰चि अणुणे॰जिमिहआसा ॥

यथावा–

पुरासीदस्माकं तनुरियमभिन्नैव सततं
ततोनु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥

प्रियापमानाद्विलक्षादिभ्यो लज्जावैलक्ष्यं यथा–

णपि अइह॰ज्ञपइ . . .
समुहपडिच॰खविलिआतंमेतु॰महइवाअडणचिअमरिसं ॥

यथावा–

शैलात्मजापि पितुरुच्छिरसोऽभिलापं
व्यर्थं समीक्ष्य ललितं वपुरात्मनश्च ॥
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथंचित् ॥

विप्रियस्य पुनःपुनः स्मरणमनुशयः, यथा–

त॰खणजणि अपरिपसभरिअविरोधसंगजु॰ताणुसअंतीए ।
गरु . . . ओलिअ॰तं पिअमरिसे॰चिअहिअअं ॥

यथावा–

अमुणि॰खळ॰धमुहेत॰खणसंभरिअम॰तुदूमिअविहळो ।
झिअएमाणवर॰णिचिर॰णचिरेणपणअअगरूओपसमइरोसो ॥

विप्रियोपरागाच्चित्ताशुद्धिः कालुष्यं यथा–

तंन्विअसोहअमाणोसमुह॰जावपणअ॰णखंडति पिआ ।
सव्विओअपणअपसरोप॰छामाणमइआणिअ॰तअकः ॥

यथावा–

वरं भ्रूभङ्गास्ते प्रकटितगुरुक्रोधविभवाः
वरं सोपालम्भाः प्रणयविमुखा गद्गदगिरः ।
वरं मानाटोपप्रसरजनितोऽनादरविधिः
निगूढान्तःकोपः कठिनहृदये संवृतिरियम् ॥

प्रियापराधजधैर्यविध्वंसक्षोभो यथा—

भङ्गंभ्रुवोः श्वसितमानन मश्रुचक्षुः खेदंमन स्तनुलता च मलीमसत्वम् ।
नैवावगाहितुमलं सुतनोस्तदेष मन्येऽनुपायपरवत्वमुपैतिकोपः ॥

यथावा–

धीरंधरिअंपिगइ॰दूरवल॰गोविपिअणिओ मअराओ ।
ळहुइअप॰म॰धाम॰खिळंभइपअइवेळविसे हिअअं ॥

व्यलीकानुसन्धानात्क्रोधोद्भेद आवेगो यथा–

तोधाळ॰जापणआभणइविअ॰खणविअ॰णदि॰ठि॰चो ।
हासविसेसम॰तुगरिइअकंट॰धपरि॰खळंतविसुमु॰ळाव ॥

यथावा—

उ॰माळुंतिवहिअअं अणुण॰जंतीओमाणवत्तीओ ।
सम्हरिअमण्णुणिब्भर बाहभरोद्धूळिअमुहीओ ॥

उन्मूलयंतीवहृदयं अनुनीयमानामानवत्यः । संस्मृतमन्युनिर्भरबाष्पभरोपरुद्धमुदयः ॥

कृतापराधेषु क्रोधाप्रशान्तिरमर्षो यथा—

अपर॰झसुअत्ताहे वीस॰ध॰चिअजणंमिणि॰फळमउए ।
काउंणि॰खिवदु॰खंप॰तिअसहिअंउ॰च ए॰कस०चिअहिअअं ॥

यथावा—

तेणणमरामिमण्णूहिपूरिआअ॰जजेणरेसुहअ ।
तु॰गअमणामरत्तीमातु॰झपुणोविळ॰गि॰सं ॥

तेननम्रियेमन्युभिःपूरिताद्य येनरेसुभग । त्वद्गतमनाम्रियमाणामातवपुनरपिलगिष्यामि ॥

मानोपशमचिह्नानि मानापगमहेतवः ।
उपाधिभङ्गा मानस्य मानभङ्गस्य भक्तयः ।
मानभङ्गोपधानानि मानानुभवसम्मताः ।
उक्ताः संक्षेपतः प्राज्ञैरनुक्तमनुमीयताम् ।
मनुष्यवचसाकेऽस्यप्रकारान्वक्तुमीशते ।
क्षमन्ते मातुमम्भोधेरपः केऽञ्जलिनाजनाः ।

परश्शतविकल्पवानिति सएषमानस्त्रिधा
मयैणनयनामनःपरमबान्धवोवर्णितः ।
अथाध्वगविलासिनीमुखसरोजसन्ध्यातपः
प्रवास उपवर्ण्यते रतिसमुद्रचन्द्रोदयः ॥

इति श्रीमहाराजाधिराज श्रीभोजदेव विरचिते
शृङ्गारप्रकाशे मानप्रकाशो नाम
त्रिंशः प्रकाशः समाप्तः ॥



॥ श्रीः ॥

# महाराजाधिराज श्रीभोजदेवविरचिते

# शृङ्गारप्रकाशे

## ॥ एकत्रिंशः प्रकाशः ॥

### ॥ प्रवासचर्या ॥

अथातोऽवसरप्राप्तंप्रवासमुपवर्णयिष्यामः । तत्रप्रथमानुरागादीनां पूर्वः पूर्वोविचित्रः परः परोरागवर्धनः । इतिविमर्शोविचित्रतया प्रथमानुरागादीनां प्रथममभिधानं, रागवर्धनत्वेन-मानादीनामनंतरमिति, मानानंतरं प्रवासोऽभिधीयते ॥ कथंपुनः रागवर्धनाद्विचित्रस्य प्राथम्यं ? तदुच्यते—रागवृद्धेः वैचित्र्यस्यावधातुमशक्यत्वात् । रागान्धोहिवैचित्र्यमवैचित्र्यंवा नावधातुं-शक्नोति । यथोच्यते–

"शास्त्राणांविषयस्तावद्यावान्मंदरसानराः । इतिचक्रेप्रवृत्तेतुनास्तिशास्त्रंनचक्रमः ॥"

रागवृध्दिहेतुत्वाद्वैचित्र्यस्य हेतुःप्रथमं फलमनन्तरंस्यादिति ।

तदुक्तं–

तैस्तैरुपायैरौचित्याद्वैचित्र्यस्यप्रयोजितैः । यूनांस्नेहोऽभिमानश्च रागयोगश्च जायते ॥

भवतुनामरागवर्धनतया प्रथमं विचित्रता । विचित्राणां किंकृतंमिथःप्राथम्यं ? राग-वर्धनानांवाकुतस्त्यमानन्तर्यमिति । अतोच्यते-प्रागसङ्गतयोः सङ्गतवियुक्तयोश्च मान, प्रवास-करुणविप्रलम्भाः । प्रथमानुरागस्तुप्रागसंगतयोरेवेत्यतः सप्रथममेवाभिधीयते, करुणास्तु । करुणो-नन्तरएव जाते मानप्रवासयोरसम्भवएव । नहि तथाविधेभ्यः संविधानकेभ्यः तथाविधायाम-छत्रिमायां रागवृद्धौसमुपजायते, निष्कैतवे प्रकृष्टेच विश्रमजानुरागेमानप्रवासयोरवकाशः स्यात् । यथात्वेवानै . . . . . योरन्य . . ॥

यथंच–

उकइअत्ररहिअंपेम्मंणद्धि चि अमामिमाणुसेलोए ।
अहहोइ कस्स विरहोहोहिइ विरहम्मिकोजिअइ ॥

अतोऽपश्चिममेव करुणविप्रलम्भस्य करुणानन्तरसंभोगस्यवा अभिधानमर्पयितु मर्हति। मान-प्रवासयोस्तु प्रवासान्मानोविचित्रस्त . . . . . . विकासात् म . . . . वियिचित्रः तत्रचेत-स्सङ्कोचात्। प्रथमानुरागेहि-रागिणश्चित्तं विक्षिप्यते, माने विकसति, प्रवासे सङ्कुचति, करुणे संक्षिप्यत इति पूर्वाचार्यवादः। कथंसउपपद्यत इतिचेत्—तथाविधप्रथमानुरागनिमित्तं सन्नि-धानात्। तथाहि–चुम्बक भ्रामक कर्षक द्रावक . . . . . . . . रसास्ते तेविकाराः चुम्बन भ्रमण कर्षण द्रुयाद्वया जायन्ते; तथा प्रथमानुरागमानप्रवासकरुण विप्रलम्भसन्निधेर्मनसो विक्षेप विकास सङ्कोच संक्षेपाइति। यथावा जपासूर्यचन्द्रकर्पूरसन्निधेः स्फटिकाश्मनोऽनेक-प्रकृतेरेकरूपस्यानुराग ज्वलनस्पन्दनस्फुरन . . . . . . विक्षेपविकाससङ्कोच संक्षेपाधिष्ठितस्य विप्रयोगिचेतसः प्रथमानुरागमानप्रवासकरुणविप्रलम्भानुभावाइति। एतेन प्रथमानुरागादीनां रागवर्धनरयेतारतम्यमपि परस्परमानन्तर्यहेतुर्व्याख्यातम्॥ उत्तरोत्तरमुपचीयमानप्रीतियोगं हि प्रियोपचारं चतुरकामिनोमनोमव . . . . . . . नितव्यहेतुंमन्यते। तस्मान्मानादनन्तरः करुणात्प्रथमः प्रवास यथासिधातव्योमवनि। कः पुनरयंप्रवासोनाम, यस्मैते क्षयितजातयो नर्मश्रवणसंकीर्तनादिभ्यो विश्यतीति। उच्यते–सत्यनुरागेपरस्परंदैवादिजनितदेशान्तरव्यवधानं प्रवासः। स दैवापन्नउत्तमः। धर्मापन्नोमध्यमः। अर्थापन्नः कनिष्ठः। तेषु, दैवापन्नोयथा–

नयनप्रत्याशामनुपतति नो वा रहयति प्रतिक्षिप्तं चेतः प्रविशतिच मोहान्धतमसम्।
अकिञ्चित्कुर्वाणाः पशवइवतस्यां वयमहो विधातुर्वामत्वाद्विपदि परिवर्तामह इमे॥

धर्मापन्नो यथा —

जानाम्यात्मनितेप्रसादमसमंचेतो . . तःपदं
दातुंनेच्छति किन्तुशासनमिदं नोल्लंघनीयं गुरोः।
मन्युरसम्प्रतिसह्यतां पुनरिहागन्तास्मिकादम्बरी
संदिश्येतिसबाष्पगद्गदमसौकेयूरकंप्राहिणोत्॥

अर्थापन्नो यथा–

यान्बिम्बोष्ठरुचिःक्वचिद्द्रुममणिः स्वप्नेपितांलब्धवान्
हामश्रीसदृशैस्तपोभिरपिकिं मुक्ताफलैर्भूयते।
तत्कान्तिः शतशोपिवह्निपतनैर्हेम्नः कुतस्सेत्स्यति
त्यक्त्वारत्नमयींप्रयासिदयितां कस्मैधनायाध्वग॥

अथैषत्रिविधोपिसामान्यतोविशेषतश्चप्रपंच्यमानः प्रायशोऽष्टिपञ्चाशत्प्रकारः प्रथते । तत्रसामान्यतो भूतपूर्वः, अभूतपूर्वः, साधारणः, असाधारणः, सहजरागः, विस्रम्भरागः, प्राप्तसमयः, अप्राप्तसमयः, संप्रतिविधानः, निष्प्रतिविधानः, सन्निकृष्टः, विप्रकृष्टः, सावधिः, निरवधिः, अल्पकालः, दीर्घकालः, सानुबंधः, निरनुबंधः, प्रकाशकार्यः, प्रच्छन्नकार्यः, सोपसंहारः, निरुपसंहारः, नायिकानिमित्तः, नायकनिमित्तः, इतिप्रकाराश्चतुर्विंशतिः ।

दैवापन्नश्चतुर्धा–शापकृतः, पापकृतः, सम्भ्रमकृतः, विभ्रमकृतः इति । एवं धर्मापन्नोपि साभिप्रायः, निरभिप्रायः, सानुतापः, निरनुतापः, इति । अर्थापन्नोपि, साभ्यनुज्ञः, निरभ्यनुज्ञः, सोपधानः, निरुपधान इति । दैवधर्मापन्नः, प्रकृतिस्थः, कोमलः, कठोरः, परिणत इति । दैवार्थापन्नोपि ग्राम्यः, नागरः, उपनागरः, विप्रकीर्ण इति । धर्मार्थापन्नोपि हितः, अहितः, सुखः, दुःख इति । दैवधर्मार्थापन्नोपि वृत्तः, आयतः, त्र्यस्रः, चतुरस्रश्चेति ॥

अर्थाश्चन्वर्थतो भूतपूर्वादीनामुदीरिताः । षट्त्रिंशतः प्रवासानांषोडशानांतुकथ्यते ॥
यस्मिन्वियोगिनोः कर्मस्वस्थयोर्विजायते । अनुरागातिरेकेपि प्रकृतिस्थ सउच्यते ॥
यूनोर्यत्रोपजायंते मनोमार्दवसूचकाः । अश्रुपातादयः शश्वदनुभावाः सुकोमलाः ॥
यत्रदैवादिजनितंसाध्यमेवस्यदृश्यते । वियोगकारणं सोऽस्मिन्कठोरइतिकथ्यते ॥
पूर्वंकठोरोभूत्वा यः कोमलत्वंप्रपद्यते । शापादिहेतुविगमाज्ज्ञेयः परिणतस्तुसः ॥
तेऽमीधर्मानुरोधायदैवयोगाच्चतद्भुवः । आवर्धंतेततोदैवधर्मापन्नाइतिस्मृताः ॥
वियोगकारणंयत्रव्रीडाहेतुः प्रजायते । अर्थभ्रंशादिनायूनां सग्राम्यइह गीयते ॥
यत्रान्यत्रानुरक्तस्यप्रियस्यप्रियकाम्यया । . . . . . . . . . . नागरः सोभिधीयते ॥
निमित्तकुपिताया योयोषितः प्रियकारणात् । पुरुषेणप्रवर्त्येत ज्ञेयःसउपनागरः ॥
यत्रान्ययोषिद्यामङ्के पत्युरापतिते स्त्रियाः । भवेदर्थानवाप्त्यार्तिः सप्रकीर्णः प्रकीर्तितः ॥
एतेचार्थानुबंधाच्चदैवाच्चसमुपस्थिताः । दैवार्थापन्नसंज्ञत्वं प्रयान्तिबुधसंसदि ॥
यत्रायत्यांहितंभर्तुरभिसन्धायभामिनी । प्रवर्ततेवियोगाय हितः स परिकीर्त्यते ॥
यत्रार्थगौरवाघातःप्रवासीननिवर्त्यते । विपद्यतेऽपि वा योषिदहितः स निगद्यते ॥
यत्रार्थोलभ्यतेऽभीष्टः प्रियाभीष्टंच सिध्यति । न चानर्थो भवेत्कश्चित्सुखः सउपवर्ण्यते ॥
प्रवासिनोमहत्दुःखं यत्प्रभावेनजायते । लग्नदोषादिजनितं सदुःख इति शस्यते ॥
धर्मार्थावनुरुद्ध्येते चत्वारोऽपिप्रकीर्तिताः । धर्मार्थापन्नसंज्ञायास्थानं भवितुमीशते ॥

यत्रोभयोर्भवेदिच्छा क्रियाचविरहं प्रति । सर्वस्नेहाश्रि लोपात्स प्रवासो वृत्तउच्यते ॥
यत्रैकत्रक्रियेच्छाच द्वितीयेतद्विपर्ययः । प्रेम्णःकोटिद्वयभ्रेषात्स वृत्तायतइष्यते ॥
यत्रैकस्यक्रियानेच्छा द्वितीयस्य द्वयं नतत् ।
सप्रेमैकाश्रिविभ्रंशात् स्त्र्यश्रइत्येवकथ्यते ॥
इच्छायत्रोभयोर्नास्ति नास्तियत्रोभयोःक्रिया ।
सोनष्टसर्वप्रेमाश्रि श्चतुरस्रोऽभिधीयते ॥
दैवादर्थाच्चधर्माच्च चत्वारोऽमीसमुत्थिताः । लभन्तेदैवधर्मार्थपन्नसंज्ञां विवेकिषु ॥

तत्रसामान्यमेदेषु, भूतपूर्वो यथा–

अंबोदुक्कर आरअ पुणो वितंतिंकरेसि गमणस्स ।
अज्जविणहोतिसरला वेणी एतरंगिणो चिउरा ॥

अभूतपूर्वो यथा–

सहिसाहसु सम्भावेण पुछिमोकिं असेसमहिलाण ।
वड्ढंति करठिअचिअ वलआदइए पउलटम्मि ॥
सखिकथयसद्भावेनपृच्छामः किमशेषमहिलानाम् । वर्धन्तेहस्तएववलयादयितेप्रोषिते ॥

साधारणो यथा—

पूरतु पणअभंगेगआविमणोरहा सवत्तीणमहं ।
अणहोणाम णिअत्तइ अकअत्थोविबहुईण पुलेहिपिओ ॥

असाधारणो यथा–

स्वत्कासीतांदशमुखरिपुर्नोपयेमेयदन्यां तस्याएव प्रतिकृतिसखो यत्क्रतूनाजुहाव ।
वृत्तान्तेनश्रवणविषयप्रापिना तेनभर्तुः सादुर्वारंकथमपि परित्यागदुःखंविषेहे ॥

सहजरागो यथा—

कृतककुपितैः र्बाष्पाम्भोभिः सदैन्यविलोकितैः
वनमपिगता यस्य प्रीत्या धृतापि तथाम्बया ।
नवजलधरश्यामाःपश्यन् दिशोभवतीं विना
कठिनहृदयो जीवत्येव प्रिये सतवप्रियः ॥

विस्रब्धरागो यथा–

जानेसख्यास्तव मयिमनः संभृतस्नेहमस्मादित्थंभूतांप्रथमविरहेतामहं तर्कयामि ।
वाचालंमांनखलु सुभगंम्मन्यभावःकरोति प्रत्यक्षंते निखिलमचिराद्भ्रातरुक्तंमयायत् ॥

प्राप्तसमयो यथा—

बन्धूकैरधरंस्मितानिकुमुदैर्नेत्राणिनीलोत्पलैः
हस्तौकोकनदैर्मुखंचकमलैः हंसैःसहासागिरः ।
प्रत्यध्वंप्रतिवासरंप्रतिसरः संदर्शयंतीहठात्
पान्थानांप्रियकामिनीव कुरुते यात्रोपरोधंशरत् ॥

अप्राप्तसमयो यथा–

उद्यद्बर्हिंपिदर्दुरारवपुषि प्रक्षीणपन्थायुषि
श्च्योतद्विप्रुषि चन्द्ररुङ्मुषिसखे हंसद्विषि प्रावृषि ।
मामुत्त्वोच्चकुचांतसन्ततगलद्बाष्पाकुलां बालिकां
कालेकालकरालनीलजलदव्यालुप्त भास्वत्त्विषि ॥

सप्रतिविधानो यथा–

प्रत्यासन्नेनभसिदयिता जीवितालंबनार्थी जीमूतेनस्वकुशलमयींहारयिष्यन्प्रवृत्तिं ।
सप्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै प्रीतः प्रीतिप्रमुखवचनंस्वागतं व्याजहार ॥

निष्प्रतिविधानो यथा–

व्यर्थंयत्रकपीन्द्रसख्यमपिमे वीर्यंहरीणां वृथा
प्रज्ञाजांबवतोपि यत्रनगतिः पुत्रस्यवायोरपि ।
मार्गंयत्रनविश्वकर्मतनयः कर्तुंनलोऽपिक्षमः
सौमित्रेरपिपत्रिणामविषये तत्रप्रिये क्वासिमे ॥

सन्निकृष्टो यथा–

सीआत्रिओअदुःखं त्रिसहंतरस चउजाममेत्तंतरिअं ।
दीहोअगहोकालोणसमा एक्का असाणिसारहुवइणो ॥

विप्रकृष्टो यथा–

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननैः
यत्नेनापिनयाति लोचनपथं कान्तेतिजानन्नपि ।
उद्ग्रीव श्चरणावरुद्धवसुधः कृत्वाश्रुपूर्णांदृशं
तामाशांपथिकस्तथापि किमपि ध्यायन्मुहुर्वीक्षते ॥

सावधिः यथा–

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्त
श्शापेनास्तंगमितमहिमा वर्षभोग्येन भर्तुः ।
यक्षश्चक्रेजनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषुवसतिं रामगिर्याश्रमेषु ॥

निरवधिः यथा—

उपायानां भावादविरतविनोदव्यतिकरै र्विमर्दैर्वीराणां जनितजगदत्यद्भुतरसः ।
वियोगोमुग्धाक्ष्याःसखलु रिपुघातावधिरभू त्कथंतूष्णींसह्योनिरवधिरिदानींतुविरहः ॥

अल्पकालो यथा–

एकैकमत्रदिवसे दिवसे मदीयं नामाक्षरं गणयगच्छसि यावदन्तम् ।
तावत्प्रिये मदवरोध गृहप्रवेशंनेताजनस्तवसमीप मुपैष्यतीति ॥

दीर्घकालो यथा—

देव्याशून्यस्यजगतो द्वादशः परिवत्सरः ।
प्रनष्टमिव नामापि नच रामो न जीवति ॥

संसृष्टो यथा–

रुअइ रुअन्तीए मए ओहि दिणेगणइखिज्जइअहंवि ।
पिअविरहे मामि सअंझिआए णेहोच्चिअ अपुव्वो ॥

रोदितिरुदत्यामया अवधिं दिनानिगणयति क्षीयतेऽहमपि ।
प्रियाविरहेमामि सैरन्ध्र्याः स्नेहएवापूर्वः ॥

असंसृष्टो यथा—

कुलवालिआए पेच्छह जोव्वणला अण्णविब्भमविलासा ।
पवसंतिव्वपवसिए एतिव्व पिएघरंएंते ॥

प्रकाशकृतो यथा—

यावन्निरस्यतिसतत्रनसिद्धमेनामाकृष्यखड्गमसितं निजविक्रमेण ।
अन्येन तावदपहृत्य मृगाङ्कलेखा नीतान्तरिक्षगतिनारजनीचरेण ॥

प्रच्छन्नकृतो यथा—

त्वद्वत्सलः क्व तपस्विजनस्यहन्ता कन्याविटःपतिरसौ परिरक्षतु त्वाम् ।
श्येनावपातचकितानववर्तिकेव किंनेक्षसे ननुमया कवलीकृतासि ॥

सोपसंहारो यथा—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानन्यान् गमयचतुरो लोचने मीलयित्वा ।
पश्चादावांविरहगुणितंतंतमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥

निरुपसंहारो यथा—

नसुलभवियोगात्कर्तुं मात्मप्रियाणि प्रभवतिपरवत्ता शासने तिष्ठभर्तुः ।
अहमपितवसूनावायुपिन्यस्तराज्यः परिचितमृगयूथान्याश्रयिष्ये वनानि ॥

नायिकानिमित्तो यथा—

अयमेकपदे तयावियोगः प्रियया चोपनतः सुदु.सहोमे ।
नवत्रारिधरोदयादहोभि र्भवितव्यं च निरापगत्वरम्यैः ॥

नायककृतो यथा—

ऊण्हं जउणाए जलं उण्हा जउणाए वेअसकुडुगाः ।
उण्हा जउणावि कआ केणवि महुरंगएकण्हे ॥

अथातोविशेषभेदाः। तत्रदैवापत्तेषु—शापकृतो यथा—

विचिंतयन्तीयमनन्यमानसा तपोनिधिंवेत्सि न मामुपस्थितम्।
स्मरिष्यतित्वांनस बोधितोऽपिसन् कथांप्रमत्तः प्रथमंकृतामिव॥

पापकृतो यथा—

स्वच्छेपेण च्छुरितकरया कुङ्कुमेनादधत्या कोपच्छायां भवनबिसिनीहंसके कौतुकेन।
वक्त्रभ्रांतिक्षणविरहिणी यत्कृताराजहंसी तस्यैतन्मेफलमुपनतं नाथयत्त्वद्वियोगः॥

सम्भ्रमकृतो यथा—

सम्भ्रांतस्त्वरितमसौमलिम्लुचाना मुर्वीशः शमितमयोधयद्दनुष्काम्।
कालेस्मिन्विनयवतीवनेपुचार्तावार्तायैकमितुरितस्ततो जगाम॥

विभ्रमकृतो यथा—

विभ्रान्तः सपदि सराक्षसीतिसीता मन्यांतुस्वमनसिजानकीत्यजानाद्।
जायावान्दशरथनंदनो नियत्या वैयात्याद्व्यसनमहार्णवेपपात॥

धर्मापत्तेषु—साभिप्रायो यथा—

न्यक्कारे विहितेद्विषा यदुचितं मन्येकृतं तन्मया
स्वेसुग्रीवविभीषणावविपदे नीतौ पुनःस्वांस्थितिं।
आज्ञांपालयतो ममेह फलितास्ताश्चाशिषः किन्हिदं
सर्वंनेह विदेहराजतनयात्यागाद्विना लभ्यते॥

निरभिप्रायो यथा—

विस्रम्भादुरसिनिपत्य जातनिद्रा मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम्।
आतङ्कस्फुरितकठोरगर्भगुर्वी क्रव्यादोबलिमिवदारुणः क्षिपामि॥

सानुतापो यथा—

कैकेयी मयिनोविलक्षवदनानोमन्थरान्यादृशी
श्रूयन्तेनच मैथिलीपरिजनस्याद्यापि दुष्टागिरः।
मिथ्यावादविमोहितेन सहसा वन्हौ विशुद्धा तथा
निर्वाच्याकिम्भोमया प्रियतमा धर्मध्वजेनोज्झिता॥

निरस्तुतापो यथा—

सदसि पिहितद्वारे दाराञ्निधायपिधायतत्

तृणजतु शणैःपूर्णंतूर्णं प्रदीप्य कृशानुना ।

अविकृतमनाः पार्श्वं भर्तुर्जगाम शिवासुत

स्सकलमपितज्ज्ञात्वा चारैर्नृपोऽपिविसिस्मिये ॥

अर्थापत्तेषु—साम्यनुक्षो यथा—

तदाशुकुर्वन्वचनंमहर्षे र्मनोरथान्नः सफलीकुरुष्व ।

प्रत्यागतं त्वास्मिकृतार्थमेव स्तनोपपीडं परिरब्धुकामा ॥

निरम्यनुक्षो यथा—

प्रत्यागमिष्यति भविष्यति सङ्गमोपि सम्पत्स्यते च हृदयाभिमतोऽभिलाषः ।

एषागतानपुनरेष्यति जीवितेश विद्युद्विलासतरलानवयौवनश्रीः ॥

सोपधानो यथा—

शैशवात्प्रभृति पोषितांप्रियां सौहृदादपृथगाशयामिमां ।

छद्मनापरिददामि मृत्यवे सौनिको गृहशकुन्तिकामिव ॥

निरुपधानो यथा—

नमातुलस्यानुचरायजायांसमर्पयान्नोजगतीं जिगीषुः ।

महाभिमानैकधनोवनाय गतैः समेयाय पुरः सुहृद्भिः ॥

दैवधर्मापत्तेषु—प्रकृतिस्थोयथा—

श्लाघ्यस्त्यागोपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।

अनन्यजानेर्यस्यासीत्सैव जायाहिरण्मयी ॥

कोमलो यथा—

सीतावेश्मयतोनिरीक्ष्यहरते दृष्टिंझडित्याकुला

मन्योन्यार्पित चञ्चुलब्धकवलैः पारावतैर्भूयते ।

इन्दोर्दूरत एव नश्यति विशत्यन्तर्गृहं दुःखितः

प्रच्छाद्याननमञ्चलेनरजनीप्वस्तत्रपंरोदिति ॥

कठोरो यथा—

छित्वानलः सपदि तद्वसनं निशीथे हस्तंगतेन कलिनेव कुलक्षुरेण ।
श्रांतामरण्यसदसि स्वपतींविहाय भीमात्मजामभिमतेन पथाजगाम ॥

परिणतो यथा—

मुनिसुताप्रणयस्मृतिरोधिना ममचमुक्तमिदं तमसामनः ।
मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्चनिवेशितः ॥

दैवार्थावस्तेषु-ग्राम्यो यथा—

अथसदयितां सुप्तामङ्कादपास्यशनैःशनै
शिथलितभुजाश्लेषः शय्यांविहायविनिर्गतः ।
गतवतिरजन्यर्धे सार्धंतयास्समृगीदृशा
मृगपतिगतिः पश्यत्यग्रेविधिं हयविग्रहं ॥

आयतो यथा—

वनभुविसहपत्या प्रस्थितां वीक्ष्यसीतां गृहिणमनुयियासु र्जानकीशोकनिष्ठा ।
गुरुगुरुजनलज्जानम्रवक्त्राम्बुजेन भ्रूकुटिपुटनिबन्धाद्वारिता लक्ष्मणेन ॥

त्यक्तो यथा—

संरोऽपितेप्यात्मनि धर्मपत्नी त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय वसुन्धराकालइवोप्तबीजा ॥

चतुरस्रो यथा—

सारङ्गेण हिरण्मयेन सहसा रामःसुदूरंहृतः
हावत्सेति वचो निशम्य तमनुस्नेहाद्गतो लक्ष्मणः ।
कालेऽस्मिन्कुलिशाभिघातकठिनक्लेशाकुलां मैथिली
मारोप्याङ्कमशङ्कमेप नभसा लङ्कांगतो रावणः ॥

अथैतस्य त्रयः स्कन्धाभवन्ति—प्रासि स्कन्धः, व्यासिस्कन्धः, समासिस्कन्धः इति । तेषु— प्रवासशङ्का, प्रवासारम्भः, प्रियप्रस्थानं, प्रियानुगमः, प्रियाप्रश्नः, प्रतिनिवृत्तिः, प्रवासचर्या, प्रवासवृत्तांत इति प्रासिस्कन्धस्याष्टौ प्रकाण्डानि । वियुक्तस्वरूपं, वियुक्तावस्था, विरहोद्दीपनं,

* मातृकापत्रेषु व्यत्यस्तत्वात् मुद्रणे विषयानुक्रमः स्थगितः । १०५८ पुटे "दैवार्यापत्रेषु—ग्राम्यो यथा—" इत्यनन्तरं "नागरो यथा—" इत्यादि पाठ्यं ।

नागरो यथा—

ततःस्वभगिनीमनु प्रहितचित्तवृत्तिं पतिं
विभाव्यभवितव्यतामपि कृतागमो जन्मनः ॥
उपाश्रमपदं पितुः प्रतिजगाम विद्याधरी
चकारनविदामिदं मदनपीडयापार्थिवः ॥

उपनागरो यथा—

अहदिट्ठ विक्कमस्सि विसिणेहसच्चविगरुअविणिवाअहआ ।
चिंतेइ सच्चभामा सुरअरुलंमहिए गअम्मिमहुमहे ॥

प्रकीर्णो यथा—

सम्बोध्य सायमिति सानुमतीं प्रभाते
श्रीपर्वतं धृतधनुस्तपसे जगाम ।
पुत्रीयतोस्य वृषभध्वजसेवयास्मि
न्मासाःषडेकमनसो दिनवद्व्यतीयुः ॥

धर्मार्यापत्रेषु—हितो यथा—

आसृष्टेः प्रतिपार्थिवं युवतयो जाता मनोवल्लभाः
मग्नास्तेव्यसनार्णवे च बहवस्ताभिः सहैवेश्वराः ।
देव्यायत्तुकृतं तथा विकलतामुत्सृज्य लोकोत्तरं
तस्यैपाकृपणेनतेन विधिना किं ग्लानिरुत्पाद्यते ॥

अवहितो यथा–

यावत्प्रिये तव पितुः प्रथमस्य दातुं
न्यायार्जितस्य वसुनो वसुधां भ्रमामि ।
कोटीश्चतुर्दश गुरोर्गुरुदक्षिणाया
स्तावत्सहस्व विरहं रचितोऽञ्जलिस्ते ॥

सुखो यथा–

अभ्यागतस्यसुहृदः सुधियोऽग्रजाते
रातेनुपो विनयमन्यपराङ्मुखस्य ।
कान्तेव्रजामिमनसोऽभिमतं च कर्तुं
आहर्तुमेव च शिरोमणिभूषणंते ॥

दुःखो यथा–

व्रीडायोगान्नतवदनया सन्निधाने गुरूणां
बद्धोत्कम्पं स्तनमुकुलयोर्मन्युमन्तर्नियम्य ।
तिष्ठेत्युक्तं किमिव नतया यत्समुत्सृज्य बाष्पं
मय्यासक्त श्चकितहरिणीहारिनेत्रत्रिभागः ॥

ईपथमौंपपसेषु–दृषो यथा–

हेधन्याः श्रृणुतप्रधानधनिनः सेऽयं मयाप्रेयसा
मत्पाणिग्रह दूषणादिति दशांयाता जगत्पावनी ।
दुर्वृत्तोसिदुरन्तपातकशतै रस्तोभितः पौरुषे
स्वामित्यैकसमुन्नतेन सुदती विक्रीयते क्रीयतां ॥

* इतःपरं "आयतो यथा–" इत्यादि पाठ्यं ।

विरहप्रतीकारः, सहायाश्वासनं, सहायो . . . . . उत्कण्ठाविनोदः, सन्देशादानं, इति व्यासिस्कन्धस्याष्टौ प्रकाण्डानि । प्रवृत्यागमः, प्रवृत्तिपरिप्रश्नः, अवधिप्रतीक्षा, मार्गोदीक्षणं, दैवनिमित्तशकुनोपश्रुतयः, सुस्वप्नदर्शनं, सुनिमित्तानुभवः, प्रियप्रत्यागमइति समाप्तिस्कंधस्याष्टौ-प्रकाण्डानि । तत्रप्राप्तिस्कन्धे—नायिकायाः प्रियवियोगसम्भावना प्रवासाशङ्का । साच पञ्चधा वर्तमाना, अद्यतनी, ह्यस्तनी, श्वस्तनी, भविष्यन्तीच । तासुवर्तमाना—

कल्लाणिज्जइसत्वाकिज्जाइ सईडोल्लुज्जइ ।
अंतिहोहिअआ सहहिलोच आद्धणलोमोल्लु ॥

अद्यतनी यथा—

केणमणेभग्गमणोरहेण उल्लाविअंपवासोत्ति ।
सविसाइंव अल्साअंतिजेणबहुआए अंगाइं ॥

ह्यस्तनी यथा—

प्रत्यग्रैरपि विप्रियैःसमुचितां नालम्बनेवामतां प्रेमप्रत्यहमातनोति
विविधैःमाधूत्तरंचेष्टते । सोच्छ्वासा दिवसेऽवसीदतिनिशानाथे
पुनर्वेपते बाला श्रोत्रपथंगते परिजनात्पत्युःप्रयाणध्वनौ ॥

श्वस्तनी यथा—

कल्लंकिरे खरहिअओ पवसिइहिपिओत्तिसुण्णइजणम्मि ।
तहवड्ढ भअवइणिसेजहसेकल्लंविअणहोइ ॥

कल्यं किलखलहृदयः प्रवत्स्यति प्रिय इतिश्रूयतेजने ।
तथावर्धस्व भगवति निशेयथातस्यकल्यमेवनभवति ॥

भविष्यन्ती यथा—

होंतपिअविरहदूसहसंतापुप्फुसिअवअणसोहाओ ।
चंदमुहिओत्ति अड्ढाजाआउपिआउ पच्चूसे ॥

नायकस्यप्रियापरित्यागोद्योगः प्रवासारम्भः । सोपि पञ्चधा । प्रवृत्तोपरतः, प्रवृत्ताविरतः, नित्यप्रवृत्तः, भूतसामीप्यः, भविष्यत्सामीप्यश्च । तेषु—प्रवृत्तोपरतो यथा—

कामं केलिरसानुवन्धविधुरे जातेरतोपक्रमे पक्ष्माग्रग्रथिताश्रुबिन्दुजडया
दृष्ट्या निरीक्ष्यक्षणं । श्वोगन्तानियमेनकिंप्रियइतिप्राणेशयाव्याहृते
यूनःसादरकल्पितोपिसहसा भग्नःप्रयाणोद्यमः ॥

प्रवृत्ताविरतो यथा–

होंत पहिअरस जाआआउच्छणजीवधारणरहस्सं ।
वुच्छंतीभमइ घरंघरेण पिअविरहसहिरीओ ॥

भविष्यत्पथिकस्यजाया आपृच्छनजीवधारणरहस्यं ।
पुच्छन्तीभ्रमतिगृहंगृहेणप्रियविरहसहनशीलाः ॥

नित्यप्रवृत्तो यथा–

घरिणीघणत्थणपेल्लणसुहेल्लि पडिअस्सहोंतपहिअस्स ।
अवसउणंगार अवारविट्ठिदि अहासुहावेंती ॥

गृहिण्याघनस्तनपीडनसुखपतितस्यभविष्यत्पथिकस्य ।
अपशकुनाङ्गारकवारविष्टिदिवसास्सुखयन्ति ॥

भूतसामीप्यो यथा–

प्रस्थानं वलयैःकृतं प्रियसखैरस्रैरजस्रंगतं
धृत्या न क्षणमासितं व्यवसितंचितेनगन्तुंपुरः ।
यातुंनिश्चितचेतसि प्रियतमे सर्वेसहप्रस्थिता
गन्तव्येसति जीवितप्रियसुहृत्सार्थः किमुत्सृज्यते ॥

भविष्यत्सामीप्यो यथा–

कण्णे पडिअं हिअए पडिअंचिअ ओमए अहव्वाए ।
जामत्ति तुज्झ वअणं किंवणसहिअं पवासस्स ॥

कर्णेपतितं हृदयेपतितमेव ओमयाअभव्यया । यामीतितववचनंकिंवा न सोढं प्रवासस्य ॥

नायकस्यगेहाद्बहिर्निर्गमःप्रियस्थानं, तदपिपञ्चधा, प्रवृत्तं, अप्रवृत्तं, प्रवृत्ताप्रवृत्तं, अप्रवृत्तप्रवृत्तं, अप्रवृत्ताप्रवृत्तं चेति । तेषु–प्रवृत्तं यथा—

दृष्टः कातरनेत्रयातिसुचिरं बध्वाञ्जलिंयाचितः
पश्चादंशुकपल्लवेचविधृतो निर्व्याजमालिंगितः ।
इत्याक्षिप्य सदासमस्तमघृणोगन्तुंप्रवृत्तस्तदा
पूर्वंप्राणपरिग्रहो दयितया मुक्तस्ततोवल्लभः ॥

अप्रवृत्तं यथा–

लग्ना नांशुकपल्लवेभुजलता नोद्वारदेशेर्पिता
नोवापादयुगे मुहुर्निपतितं तिष्ठेतिनोक्तं वचः।
कालेकेवलमम्बुदालिमलिने गन्तुं प्रवृत्तश्शठ
स्तन्व्या बाष्पजलौघकल्पितनदीपूरेणरुद्धः प्रियः ॥

प्रवृत्ताप्रवृत्तं यथा–

यामीत्युक्तवतिव्रजेत्यभिहितं त्रस्तंविमुक्तासने
द्वित्राण्येवपदानिगच्छतिगलद्बाष्पांघमालोकितं।
निर्याते दयितेऽश्रुपूरितदृशा तन्मुग्धयानुष्ठितं
व्यासेऽवस्थितिपत्रकं प्रवसतो यज्जातमाजन्मनः ॥

अप्रवृत्तप्रवृत्तं यथा–

यात्रामंगलसंविधानरचनाव्यग्रे सखीनांगणे
बाष्पाम्भःपिहितेक्षणे गुरुजने तद्वत्सुहृन्मंडले।
प्राणेशस्य मदीक्षणार्पितदृशः कृच्छ्रादपिक्रामतः
किंव्रीडाहतयामयाभुजलतापाशोनकण्ठेऽर्पितः ॥

अप्रवृत्ताप्रवृत्तं यथा—

कर्तव्यं न निवारितं गुरुजनात्प्रास्थानिकं लज्जया
शून्यं मन्युनिरोधमन्धरगिरा संवर्गिकाबांधवाः।
पान्थेन . . . . प्रवासविधुरां दृष्ट्वापुरःप्रेयसी
मुद्राप्पेणदिशो निवृत्तिशकुनप्रत्याशया वीक्षिताः ॥

नायिकायाः प्रेयसासह प्रस्थानसीमान्तात् प्रियानुगमः, सोपिपञ्चधा–सह, अग्रतः, पश्चात्, दूरतः, अन्तिकइति। तेषु—सहानुगमो यथा—

याताः किं न मिलन्तिसुन्दरिपुनश्चिंतेतिनासासुते
कार्याद्दूरमनुद्रुताहि कथयत्येवंमुहुः प्रेयसि।
तन्व्यामन्थरतारकेणबहुशःपीताश्रुणाचक्षुषा
दृष्ट्वातंहसितंनकिन्तुमरणोत्साहस्तयासूचितः ॥

अग्रतो यथा—

तिष्ठेत्युक्तः प्रवसन्दयितानयनेन कृष्णशारेण ।
दयितः पुरतोयाते वामंवलतामृगेणैव ॥

पश्चात् यथा—

परिष्वक्तस्तावद्गुरुजनभयान्नैवसमया नचोक्तंतिष्ठेति प्रियविरहबाष्पार्द्रगलया ।
द्रुतंगच्छामीति प्रियसखि सुदृष्टोपिनकृतोनिरुद्धोयावन्मेनयनसलिलैर्दृष्टिविषयः ॥

दूरतो यथा—

किंवःकोपि जनोऽध्वगास्त्ववसतेरापृष्टमूढां प्रिया
मुत्सृज्यागतवान्विमूढहृदयोधीरं ध्वनत्यम्बुदे ।
मालामांसलपङ्कभूयसिपथिश्रान्तापुरोवल्लभे
दूरंगच्छति पृच्छतीति पथिकान्क्षीवानिवाकुञ्चतीन् ॥

अन्तिकतो यथा—

दूरंसुन्दरि निर्गतासि नगरादेषद्रुमः क्षीरवा
नस्मादेव निवर्त्यतामिति शनैरुक्त्वाध्वगेनप्रियाम् ।
गाढालिङ्गनवामनीकृतकुचाभोगस्फुटत्कंचुकं
वीक्ष्योरस्थलमश्रुपूरितदृशः प्रस्थानभंगः कृतः ॥

प्रस्थितस्यसम्भाषणाश्लेषादिपूर्वकः प्रियजनपरित्यागः प्रियाप्रश्नः, सोपिपञ्चधा—सम्भाषणकृतः, आलिङ्गनकृतः, अवधिप्रदानकृतः, अवधियाचनकृतः, प्रियानुशासनकृतश्चेति । तेषु संभाषणकृतो यथा—

आपृच्छंतम्मि पिए पुरंतगोसउडविसुण आपेअं ।
रुण्णंससज्झसोसरिअहिघारकुलबहूए ॥

आलिङ्गनकृतो यथा—

आपुच्छणोवऊहण कंठसमासरि अव्वाहुलइआए ।
वलआइ पहि अचणे वहुएणिअलाविअपडंति ॥

अवधिदानकृतो यथा—

जावअणदेहि ओहिं अवऊढंजावचेअसिढिलेइ ।
मरणेण पुण्णअं मह तावगारु आविवो अप्पा ॥

अवधियाचनकृतो यथा—

मुग्धेप्रेषय यामि यान्तिपथिकाः कालोवधेःकथ्यतामुद्विग्ना किमकाण्ड-
एवभवती तूष्णीं किमेवंस्थिता । पूर्वोक्तोपरतां प्रियेणदयितामाश्लिष्य-
तत्तत्कृतं दत्तोयेनसमस्तपांथविरहप्राणान्तिकोडिण्डिमः ॥

प्रियानुशासनकृतो यथा—

आपृष्टासि विनिर्गतोऽध्वगजनस्तन्वङ्गि गच्छाम्यहं स्वल्पैरेवदिनैः
समागमइतिज्ञात्वाशुचंमाकृथाः । इत्याकर्ण्यवचः प्रहस्यसहसा
तन्मुग्धयानुष्ठितं येनाकुण्ठसमात्पतीव्रविरहक्लेशः कृतोवल्लभः ॥

प्रेयसिगतेनायकादीनां गृहागमनंप्रतिनिवृत्तिः । सापिपञ्चधा—गृहात्, अलिन्दतः, अङ्गणतः, उपवनात्, जलाशयतइति ।

गृहात् यथा—

मयाबद्धावेणी निवसितमशुक्लंचवसनं श्रुताःशोचंतीनां
परिजनसखीनामपिगिरः । निवृत्तास्तेदृष्ठागतमनुगता
येऽस्यसुहृद स्तथाप्येते प्राणा दयितमनुयातानकृपणाः ॥

अलिन्दतो यथा—

सौख्ये गते प्रवसतादयितेन सार्धं नेत्रद्वयेदयितमार्गगमान्निवृत्ते ।
व्रीडावतीवतकृता हतजीवितेन निर्याययन्नपदमात्रमपिप्रयातम् ॥

अङ्गणतो यथा—

यास्यामीतिसमुद्यतस्य वदतोविस्रब्धमाकर्णितं गच्छन्दूरमुदीक्षितो
मुहुरसौ व्यावृत्यपश्यन्नपि । कारुण्ये पुनरागतोस्मि भवने प्राणास्त
एवस्थिताः सख्यस्तिष्ठत जीवितव्यसनिनीदम्भादहंरोदिमि ॥

उपवनतो यथा—

अम्मणुअंचेविजा हिहूआ हेन्ठिवईइट्टविरहे ।
पुच्छइ जाहिकहिं बहुअहं कालहंविट्ट . . . . . ॥

जलाशयतो यथा—

प्रियानुगमतोगृहं प्रतिनिवृत्यमुग्धेक्षणा निरीक्ष्यसरसीमपि स्फुटितपङ्कजामोदिनीं
व्रजन्तमपिदूरतः समनुकूलवाताध्वना निवृत्त . . . . . वलितकण्ठमालोकते ॥

प्रियवियोगेनायकेतिवृत्तं प्रवासचर्या । सा स्वदेशकालकार्यपात्रौचित्यशक्ति साधनोपाय भेदात् द्वात्रिंशत्प्रकारा । तेषुदेशश्चतुर्धा—स्वकीयः परकीयः, नस्वकीयो नपरकीयः इति । एवं कालादयोऽपि । तत्रकालः-साधारणः, असाधारणः, उल्लेखवान्, अनुल्लेखवान् च । कार्यं-सामान्यवत्, विशेषवत्, नित्यं, नैमित्तिकंच । पात्रं—उत्तमादिकं, उदात्तादिकं, मुग्धादिकं, धीरादिकंच । औचित्यं जातितः, क्रियातः, गुणतः, द्रव्यतश्च । शक्तिः—औत्साहिकी, वैशिकी, लाक्षाव्ययी, दैविकीच । साधनं-हेतुः, करणं, अधिकरणं च । उपायः, स्वाभाविकः, प्रायत्निकः, सार्वलौकिकः, यादृच्छिकइति । तत्रदेशोपाधिभेदेषु, स्वकीयदेशे यथा—

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं दूरीभूतेमयिसहचरे
चक्रवाकीमिवैकां । गाढोत्कण्ठा गुरुषुदिवसेष्वेषु गच्छत्सुबालां
जातां मन्येशिशिरमथितां पद्मिनीं वान्यरूपां ॥

परकीयदेशो यथा—

हत्थेण ओहगरिअं दूरपहं खलुउदएण पहं ।
पिअवेसअंगलअअमणिव्वहावाउ एक्कआसुपहं ॥

नस्वकीयेनपरकीये यथा—

गतवतिनिषधेश्वरेविबुद्धा वनभुविभीमसुता भ्रमन्मृगीव ।
मृगयितुमनुसानुसानुगन्तुं दिशिदिशिदत्तविलोलदीर्घदृष्टिः ॥

कालः साधारणो यथा—

जहदिअहविरामोणवसिरीसगंदुत्थगणिलग्घविओ ।
पहिअघरणीउणतहातवेइतिलाविमज्झण्णो ॥

असाधारणो यथा—

मण्णेदद्ढढं दढढं हिअ अएव्वि तुह पसाएण।
दूरुण्णअ घणसामलिआदिसीवहि सिग्घपरिणामा॥

उल्लेखवान् यथा—

अस्मिन्वर्षमहे न वर्ततइदं यत्कामदेवोत्सवे स्थेयंपुत्रि निरन्नया
तदधुना किंचिन्मुखेदीयतां। इत्युक्तेजरतीजनेन कथमप्यध्वन्य-
वध्वाततः पर्यन्तेऽहनि कल्पितश्चकवलो धौतश्च धाराश्रुभिः॥

अनुल्लेखो यथा—

स्नातायाः स्वजनोत्सवेविधिरिति स्नानीयशून्यैर्जलैः बिभ्रत्या गुरुगौरवेण
गुरुणी रक्तेवृथावाससी। पत्युर्मंगलमिछता परिजनेनायोजिते मण्डने
तन्व्यालोचनवारिताकथमपिस्वच्छन्दमागच्छति॥

कार्योपाधिभेदेषु, सामान्यवत् यथा—

अम्भरसूणाइ णिरंजणाइं वइरिकरुण्णपुसिआइं।
विरहुक्कंटं कुलवालि आण साहेति अच्छीहि॥

विशेषवत् यथा—

उक्कंठाणिच्छाआ सव्वंचिअ परिअणंरुआवेइ।
आअंविरेहि अज्झा पुसिअपरुण्णेहि अच्छीहिं॥

नित्यं यथा—

अइकोवणा विसासू रुआविआ गअवईएसोण्हाए।
पाअपडणोण्णआए दोसुविगलिएसुवलएसु॥

नैमित्तिकं यथा—

छणपडिव आए पहदे वअणादिज्जंतिपहि अघरिणीए।
दोव्वल्लगलिअवल आमिपरिग आमंगलपईवा॥

पात्रभेदेषु, उत्तमा यथा—

धनगिरीन्द्रविलङ्घनशायिना वनगतावनजद्युतिलोचना।
जनमतादृद्दशेजनकात्मजा तरुमृगेणतरुस्थलशायिनी॥

मध्यमा यथा—

आधिक्षामांविरहशयने सन्निषण्णैकपार्श्वां प्राचीमूलेतनुमिव
कलामात्रशेषां हिमांशोः । नीतारात्रिः क्षणमिवमयासार्ध-
मिच्छारतैर्या तामेवोष्णै विरहमहतीमश्रुभिर्यापयन्ती ॥

उदात्ता यथा—

श्वासालिङ्गन धूसरेण सुमुखी बिम्बाधरेणामुना पर्यन्तारुणतांदृशोः
विदधती बाष्पैरविच्छेदिभिः । क्षामक्षामकपोलमण्डलपतत्
व्यालंविलोलालकैरङ्गैरुज्झितभूषणैः कथमियं धत्तेनवंमण्डनम् ॥

ललिता यथा—

नूनंतस्याः प्रबलरुदितोच्छूननेत्रंप्रियायाः निश्वासानामशिशिरतया
भिन्नवर्णाधरोष्ठं । हस्तन्यस्तं मुखमसकलव्यक्ति लंबालकत्वा
दिन्दोर्दैन्यं त्वदुपरणक्लिष्टकान्तेर्बिभर्ति ॥

मुग्धा यथा—

अज्जंग ओत्ति अज्जं गओत्ति अज्जं गओत्ति गणरीए ।
पढमे चिअ जामद्धे कुड्डो रेहाहि चित्तलिओ ॥

अद्यगतोद्यगतोद्यगतइति भणनशीलया । प्रथम एवदिवसार्धे कुड्यं लेखाभिश्चित्रितम् ॥

प्रगल्भा यथा—

निश्श्वासेनाधरकिसलय क्लेशिना विक्षिपन्तीं शुद्धस्नानात्परुषमलकं
नूनमागंडलंबं । मत्संभोगःकथमुपनमेत्स्वप्नजोऽपीतिनिद्रा
माकांक्षन्तीनयनसलिलोत्पीडरुद्धावकाशाम् ॥

अधीरा यथा—

विज्झावेइ पईवं अब्भुट्ठंतीए पहिअजाआए ।
पिअअमविओअदीहर णीसहणीसासरिंछोली ॥

निर्वापयतिप्रदीपमभ्युत्तिष्ठन्त्याः पथिकजायायाः । प्रियतम वियोगदीर्घनिस्सहनिश्वासपङ्क्तिः ॥

धीरा यथा–

. . . . . जा . . . . . तं । सपल्लहन्यिअं मुखाआपहिअजाआ ॥

औचित्यभेदेषु, जात्यौचित्यं यथा–

परिअड्ढि आइ दोण्णित्रिघरिणी . . . . पवसिएपंते ।

णिअमो कुलाणुरूओ सिणेहसरिसंदोच्चमौव्वल्लम् ॥

क्रियौचित्यं यथा–

जंपीअं मङ्गलवासणए पन्थानपडमदिअहंमि ।

वाहसलिलंण चिट्टयि तंचिअविरहे रुअंतीए ॥

यत्पीतंमङ्गलंवासनया प्रस्थानप्रथमदिवसे । बाष्पसलिलंनतिष्ठति तदेवविरहेरुदत्याः ॥

गुणौचित्यं यथा–

कुलवालि आए पेच्छह जोव्वणला अण्णविब्भसविलासा ।

पवसंति व्वपवसिए एंतिव्वपिए घरंएंते ॥

कुलपालिकायाः पश्यत यौवनलावण्यविभ्रमविलासाः ।

प्रवसन्तीवप्रोषिते आयान्तीवप्रिये गृहमायाति ॥

द्रव्यौचित्यं यथा–

णवितह घराम्मिदड्ढे अण्णेसुविसच्चएसु बहुएसु ।

कूदलिएसु जहसास . . . . . . . . . . ॥

शक्तिभेदेषु, औत्साहिकी यथा–

आसासेइ परिअणं परिउत्तंतीए पहिअजाआए ।

णित्थामोव्वत्थणबलि अहत्थमुहुलो वलअसद्दो ॥

वैशिकी यथा–

रणरण अरज्जदोव्वल . . . ए . . . . . अनिणंडंय अवलोओ ।

विरहेमरणेणत्रिणा सिणेहरेहाणणिव्वउइ ॥

साहाय्यकी यथा–

ओत्रिज्जउ छणदिं अहे सवत्तित्रग्गरसपहिअघरणीए ।

पविहज्जउण वहुसो विरहसिहादीवहिरसेण ॥

दैविकी यथा–

जंमुच्छिआएणसुओ कलंवगंधेणतग्गुणेपडिओ ।
इहरा गज्जिअसद्दो जीएण विणा नवोलंतो ॥

यन्मूर्छितयानश्रुतः कदंबवातेऽप्यस्तद्गुणे पतितः ।
इतरथा गर्जितशब्दो जीवितेनविना नापक्रामति ॥

साधनभेदेषु, उपादानं यथा–

पम्मुट्टपाणिआए विपहअहिअआएपहिअजआए ।
पहमंडअं उवउरोइरीएवाहेण सिम्मविओ ॥

हेतुः यथा–

णीहमवेविरसिहं पहिअवहू वाहसलिलसिप्पंतं ।
देइपहदेवआणं भामं भामं चणप पईवं ॥

करणं यथा–

गिम्हंरगमेइ क कहविविरहसि हितविआपहिअवहू ।
अविर अपडंतणिब्भरवाह जलोल्लावरिल्लेण ॥

अधिकरणं यथा–

जंझावाओत्तिणिए घरम्मिरोत्तूण णीसणिसण्णं ।
दावेइवगअवइअ विज्जुज्जोओ जलहराणं ॥

उपायभेदेषु, स्वाभाविको यथा–

उप्पेक्खाग अदइ अंगसंसमुच्चलि अविउणसेआए ।
वालीणोत्रिणणाहो पउत्तपइआएहेमंतो ॥

प्रयत्निको यथा–

सअयणेच्चिंतामिलिअं काऊण पिअंणिमीलअछीए ।
अधाणोउवऊढो पसिढिलवलएहि वाहेहिं ॥

शयनेचिंतामयंकृत्वाप्रियंनिर्मीलिताक्ष्या । आत्माऽउपगूढः प्रशिथिलवलयाभ्यां बाहुभ्यां ॥

सार्वलौकिको यथा–

पिअसम्हरणपलोट्टंतवाहधाराणिवा अअमीआए ।
दिज्जइ वक्कग्गीवाएदीववोपहि अजाआए ॥

प्रियसंस्मरणप्रलुठद्बाष्पधारानिपातमीतया । दीयतेवक्रग्रीवयादीपः पथिकजायया ॥

याहच्छिको यथा–

मञ्जर्योनविलोकिताविकसिताश्चूतस्यबाष्पान्धया नाघ्राता अपि
सन्ततश्वसितयावातास्तदामोदिनः । भृङ्गाणांकलिकावृतश्रवण-
यानोगीतमाकर्णितं क्षेमेणव्यतिलंघिता पथिकहे वध्वामधुश्रीस्तव ॥

विप्रियोगेपिदेशाद्यै नायिकावस्थानंप्रवासवृत्तान्तः । सः प्रवासचर्यायाव्यापपातः भूयश्च-
विशेषतोवक्ष्यामः । तत्रदेशस्त्रिधा–ग्राम्यः, आरण्यः, साधारणश्च । तेषु ग्राम्यो यथा–

ग्रामेऽस्मिन् पथिकायपान्थवसतिर्नैवाधुनाहश्यते पश्यात्रैव
विवाहमण्डपतले पांथः प्रसुप्तोयुवा । तेनोत्थाय खलेनगर्जतिघने
स्मृत्वाप्रियांतत्कृतं येनाद्यापिकरंकदंडपतनाशङ्कीजनस्तिष्ठति ॥

आरण्यो यथा—

अथमाल्यवतः प्रस्थे काकुत्स्थस्यवियोगिनः ।
दुर्निवारास्त्रसंवेगो जगाम जलदागमः ॥

साधारणो यथा–

पज्जंतयि आसूवेल्लगोदिपव्भारणामि अद्लाइं ।
पहि आणदुरालो आइहोन्तिमाअंदगहणाइ ॥

कालः–उपक्रांतः, प्रक्रान्तः, व्यतिक्रांतश्च । तत्र–उपक्रांतो यथा—

अहजललिटिम्मि अहिअंमअणे अमिअंकदंसणविआत्थ ।
विरेहविहुरस्स जलणंणिसविरामं सवतिआघत्ते ॥

प्रक्रान्तो यथा–

हिअइ खुडंकइगोड्डीगअणे डुडुक्कइमेह ।
आसारं तववास अहंविसमा सक्कड अइहु ॥

व्यतिक्रान्तो यथा—

गमिआ कलंबवा आदिठट मेहंगआरिअंगअणतलं ।
सहिओगज्जि असदोतहविहुसेणत्थिजीविए आसंघो ॥

कार्ये निवर्त्यवृत्ति, विकार्यवृत्ति, आप्यवृत्तिचेति—तत्र—निवर्त्यवृत्तिर्यथा—

जाअसहत्थ वक्किवा हे अअमलए विहत्थेहिं ।
पहि एण पुढमदि अहे विसव्वच्चि ण्वंण्णवद्ध अणम् ॥

विकार्यवृत्तिर्यथा—

कज्जलमलछ्रि अङ्गुठिं उम्मोल कंविजाम वसन्तो ।
धवलवलआणपुज्जंत पेच्छइ सव्वले पहिओ ॥

प्राप्यवृत्ति यथा—

रायविरुद्धंवकहं पहि ओपहि अस्ससाहइ ससंकम् ।
जत्तो अंबावणं तत्तोदरणिग्ग अंकंवि ॥

राजविरुद्धामिवकथां पथिकः पथिकस्य शंसतिसशङ्कः ।
यत आम्रवणं ततोदरनिर्गतं कमपि ॥

पात्रं—उत्तमं, मध्यं, कनिष्ठं च । तत्र उत्तमं यथा—

कोडि परिठवि आणण हरणिणिअं रघाव इरससी आविरहे ।
चाववलिअ चण वरं संजिअजीअं वि वाह धाराहि कअं ॥

मध्यमं यथा—

मज्झण्णपत्थि अरसवि गिह्रे पहि अस्स हरइ संताव ।
हि अअट्ठिअजाआमुह मिअंक जोण्हा जलप्पवहो ॥

मध्याह्नप्रस्थितस्यापि ग्रीष्मेपथिकस्यहरति संतापं ।
हृदयस्थित जायामुख मृगाङ्कज्योत्स्ना जलप्रवाहः ॥

कनिष्ठं यथा—

अंघार चिवइ चुएइ ठेवइहिअअमि जणिअरोमंचो ।
जाआकओल सारिं चविण पहिओ महु अपुंफ ॥

आजिघ्रति स्पृशति चुंबति स्थापयतिहृदयेजनितरोमांचः ।
जायाकपोल सादृश्येन पथिकोमधूकपुष्पम् ॥

मौचित्यं,—स्नेहौचित्यं, उद्योगौचित्यं, औत्सुक्यौचित्यं, च। तेषु स्नेहौचित्यं यथा—

गाजमहं चिअउवरिं सव्वत्थामेण लोहहिअअस्स।
जलहर लवालहिअं मारे मारेहिसिवराइं॥

गर्जमम्मैवोपरिसर्वस्थाम्नालोहहृदयस्य। जलधरलंबालिकिकांमारेमारयिष्यसिवराकीम्।

उद्यमौचित्यं यथा—

छित्वासद्यःकिसलय पुटान्देवदारुद्रुमाणाम् येतत्क्षीरस्रुति
सुरभयोदक्षिणे नप्रवृत्ताः। आलिङ्ग्यन्ते गुणवतिमयाते
तुषाराद्रिवाताः पूर्वस्पृष्टं यदिकिलभवेदङ्गमेभिस्तवेति॥

औत्सुक्यौचित्यं यथा—

सी आविओअदुःखं विसहतंसच उच्चामर्मेत्तंणीसा।
उरिअं दीहो अगओ कालोणसमा एक असारेहु व् इणो॥

शक्तिसाधनोपायानां प्रवासिषु प्रायोविपर्ययादयः स्वदन्ते, नस्वरूपाणि। ततः तथैव तान्युदाह्रियन्ते—तेषु शक्तिविपर्ययलेशा—बलविपर्ययः, बुद्धिविपर्ययः, उत्साहविपर्ययश्च। तत्र बलविपर्ययो यथा—

समपंथपत्थि अस्सवि पहिअस्सखलंति पढम दिअहंमि।
हिअअट्ठि अजाआगुरुणि अंचभारेण व पआइ॥

समपथप्रस्थितस्यापि पथिकस्यस्खलंति प्रथमदिवसे।
हृदयस्थितजाया गुरुनितम्बभारेणेव पदानि॥

बुद्धिविपर्ययो यथा—

मटपुंभामि पइं जाणिता मेहविरहं जोमरिइंतसुखसखिकेह॥

उत्साहविपर्ययो यथा—

धीरेण समं चामा हिअएण समं अणिं रिअउएसा।
उंचाहेण सह सुआ वाहेण समं गलंति सेउल्लावा॥

साधनविपर्ययः हेयः उपादेयः हेयोपादेयश्च। तत्र हेयो यथा—

सो उद्धेसो विहिणाण जिम्मिओ चहुविहंतिलहं तिसो।
जध्थवि अपिपवोअ संदावं देहिणिंचिति॥

उपादेयो यथा—

दीहुण्णा णीसासा रणरणओ सुण्णगग्गअंगेअं ।
पिअविरहे जीवअवं लहाण एसो च्चिअविणोओ ॥

दीर्घोष्णानिश्वासारणरणकोरोदनगद्गदंगेयम् । प्रियविरहेजीवितवल्लभानां एषएवविनोदः ॥

हेयोपादेयो यथा—

चिरजीवंतण किंखिरि मातम्मरसा अलेहि अघिरेहिं ।
विरहिम उव्वजाअंतिजेण जुअदीहरादिअहा ॥

चिरजीविस्थकांक्षणशीले मातास्मरसायनैरस्थिरैः ।
विरहंप्रतिपद्यस्व जायन्तेयेनयुगदीर्घतरादिवसाः ।

दुपायविपर्ययः कादाचित्कः एकदेशिकः विहितश्च । तेषुकादाचित्को यथा—

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो र्लब्धायास्ते कथमपि
मयास्वप्नसंदर्शनेषु । पश्यंतीनां नखलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥

एकदेशिको यथा—

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं वक्त्रच्छायां शशिनि
शिखिनां बर्हभारेषु केशान् । उत्पश्यामि प्रतनुषु नदीवीचिषु
भ्रूविलासान् हन्तैकस्मिन् क्वचिदपिनते चण्डि सादृश्यमस्ति ॥

विहितो यथा—

त्वामालिख्यप्रणयकुपितां धातुरागैश्शिलायां आत्मानंते
चरणपतितं यावदिच्छामिकर्तुं । आस्रैस्तावन्मुहुरुपचितै
र्दृष्टिरालिख्यतेमे क्रूरस्तस्मिन्नपि न सहतेसङ्गमं नौकृतान्तः ॥

सोयमष्टप्रकाण्डोपि प्रातिस्कंधउदाहृतः ।
व्यासिस्कन्ध प्रकाण्डानां अर्थेपोद्दिश्यतेगतिः ॥

॥ व्यतिस्कंधः ॥

तेषु-विरहिणामसाधारणधर्मः वियुक्तस्वरूपं । तत्रदेश काल पात्रादिमेदादनेकधा । तत्रदेशे नायिकास्थं, नायकस्थम्, उभयस्थम्, उभयसाधारणं च-काले-दृष्टविपरीतम्, श्रुतविपरीतम्, अनुभूतविपरीतम्, च । पात्रे-उदात्तास्थं, उद्धतास्थं, शान्तास्थं, च प्रपञ्चितो दृष्ट्या शेषमवगन्तव्यम् ।

तत्रस्वदेशे नायिकास्थं यथा—

उंचउरने उदुंगुववसं तइजम्मदे । . . . . . . . . ॥

परदेशे नायकस्थं यथा—

उत्कंपोपि सकंपएवहृदये चिन्तापिचिन्तान्विता निश्वासाअपिनिश्वसिस्य-
निभृताबाष्पेपिबाष्पायते । कान्तांसंस्मरतोविदेशवसतेर्नक्तं दिवंकामिनः
प्रारोषाइवनिष्पनन्ति मनसो दुःखानिदुःखान्वितान् ॥

स्वपरदेशेउभयस्थं यथा—

सुप्ते ग्रामे नदति जलदे शान्तसंवादरम्यं पार्थेनाभूद्व्यसनकरणोदश्रु
गीतं निशीथे । च्छीतोत्कंण्ठापरिगतधिया प्रोषितस्त्रीजनेन
ध्यानावेश स्तिमितनयनं श्रूयते रुद्यतेच ॥

उभयसाधारणे उभयसाधारणं यथा—

चिरंध्यात्वाध्यात्वा लिखितमिवनिर्माय पुरतः प्रवासे प्रश्वासं
नखलुनकरोति प्रियजनः । जगज्जीर्णारण्यं भवतितु
विकल्पव्युपरमे कुकूलानां राशौतदनुहृदयं पच्यतइव ॥

कालेसाधारणे दृष्टविपरीतं यथा—

या अहित्रतितो दुःखहिं अंमदे । चुडुकि सूरिहोइ पवनं इजंमते ॥

असाधारणे श्रुतविपरीतं यथा—

राईण भणइ लोओ जाकिर गिम्मम्मिहोंति मडहाओ ।
महउणदयिए णविणाण अणिमो कीस वढ्ढंति ॥

. . रात्रीणांभणतिलोकोयाः किलग्रीष्मेभवन्तिमहभावाः ।
ममपुनर्दयितेन विनानजानीमः क्रियद्विवर्धन्ते ॥

अनुल्लेखयतिभूतविपरीतो यथा—

निशाद्राघीयस्यः क्वचिदपिदिनानामलघिमा नतन्वीनव्यूढा
क्वचिदपिसमावृत्तिरनयोः। ऋतुःकोनामायं विरहदहनम्लानमनसां
मसीमानोयत्र प्रियसखिनिशाएवदिवसाः ॥

उल्लेखयति अनुभूतविपरीतं यथा—

यस्मिन्पुष्पमयंधनुरस्मृतिभुवोयत्रामृतांशुश्शशी प्रेयोन्यस्यसुखस्य
धामगतवान्मातस्यकामोद्भवः। कोवायं विपरीत कारणगुण-
प्रक्रान्तिमान्पर्वणः सर्गोयत्रभवन्ति लंबितरजःप्राणाः महाम्रूलवः ॥

पात्रेऽदाक्षायांदश्यमानं यथा—

प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधुरः कपोलः
पांडुत्वादवनरति तालीपरिणतिं। परिम्लानच्छायामनु-
वदतिदृष्टिःकमलिनी वियोगेमाधुर्यंस्यजातिचमृगाक्षीस्पृशतिच ॥

उद्धतायां श्रूयमाणं यथा—

वामबाहुशिखराग्रशायिना सामुखेनलवलीफलत्विषा।
दिङ्मुखप्रहितलोललोचना मृत्युमुत्सवमिवप्रतीक्षते ॥

ललितायामुपनीयमानं यथा—

शुद्धंरुद्धंवहतिसलिलं नेत्रयोरुष्णमुष्णं न्यस्तंसपदिहृदये
चन्दनशोपमेति। यातंथातंदयितविरहे जीवितंधारयत्या
दुःखंदुःखंव्रजतिरजनी कल्पतुल्यात्रयाक्याः ॥

शान्तायामनुमीयमानं यथा—

ओहिचदेण उविहुग पुंणमहुआ पओसि अंपंथं।
ठिअवहिअं पिगहवइ आसाणडि यापुलोएइ ॥

मनोदग्धत्वक धान्यपुश्चेष्टासुधिरहिणः स्वरूपावस्थानंवियुक्तावस्था। तन्मनसि चिन्तामय-
मनुस्मरणात्मकं च। दृशिप्रजागरमयं, विषयव्यावृत्त्यात्मकं, च। धर्मेनिर्लज्ज . . . . . .
मपमुन्मादात्मकं, च। वाचिगुणकीर्तनमयं विलापात्मकं, च। वपुषिकार्श्यमयं, व्याध्यात्मकं, च।

चेष्टायांजाड्यमयं, मूर्छात्मकं च। तच। स्थानाली स्थानांतरेऽतिष्ठमानं अवस्थेत्याचक्षते।

तत्र—मनसि चिन्ता यथा—

सासुन्दरीतितरुणीति तनूदरीति मुग्धेति मुग्धवचनेति मुहुर्मुहुर्मे।
कान्तामयंविरहिणीमभिगन्तुकामः कान्तामयंजपति मन्त्रमिवान्तरात्मा॥

यथावा—

कृतरसङ्कल्पोपिव्यथयति परिछेदविषयः परिच्छिन्दीत्युक्तं
वचनमपि पीडांजनयति। मनस्स्मृत्वास्मृत्वाग्लपितमिद-
मत्रैवरमते प्रबन्धान्तश्चिन्ता सुखयतिचमांदुःखयतिच॥

तत्रैवानुस्मरणं यथा—

अद्यापितत्कनकचम्पकदामगौरं गोरोचनातिलकबिन्दु कृतैकबिन्दु।
ईषत्कटाक्षहसितोल्बण गण्डदेशं तस्यामुखं पथिमया सहगच्छतीव॥

यथावा—

निरस्तालंकारां नयनजलसिक्ताधरपुटां स्वावस्तंयाते
द्विगुणतर . . . सुमुखीम्। अहोदूरस्थां तां करकमल-
विन्यस्तवदनां प्रियांपश्यामीतिस्मृतिशरण कुड्येहिलिखिता॥

दृष्टिप्रजागरो यथा—

प्रजागरात् खिलीभूतस्तस्यास्स्वप्नेसमागमः।
बाष्पस्तुनददात्येनां द्रष्टुंचित्रगतामपि॥

यथावा—

निंदणिकसुएइ पघणिसि चिंतंतहजाइ।
दइ आमुह पडिबिंवे बिजउचि पिंजइताइ॥

तत्रैवविषयव्यावृत्तिर्यथा—

विघर्माणोभावास्तदुपहतवृत्तेर्नधृतये स्वरूपत्वादन्ये
विहितविफलौत्सुक्यविरसाः। अतश्चेत्थं पूर्वेष्वसृजदितरेभ्यः
प्रतिहतं कहीनंप्रेयस्याहृदयमिदमन्यत्ररमताम्॥

यथावा—

अनारब्धाक्षेपंपरमकृतबाष्पव्यतिकरं निगूढान्तस्तापं
हृदयचकितव्यवसितम्। कृशाङ्ग्यायत्पापे व्रजति-
मयिनैराश्यपिशुनं श्लथैरङ्गैरुक्तं हृदयमिदमुन्मीलयतियत्॥

धरकेलज्जाप्रणाशो यथा—

गिरांनैकावाच्यं हृदयमपितत्रैवनिरतम् पुरःसर्वं दृष्टंभवति-
हरिणाक्ष्यामुखमिति। वियोगस्तन्वङ्ग्याः कथमनुपकारी-
यदिभवेत् कृतंतद्रूपेणत्रिभुवनमिदं येनकृतिना॥

यथावा—

क्वचित्स्वप्नेपश्याम्यविरचितलंबालकमुखीं क्वचित्सङ्कल्पस्तां
सुहृदिव पुरस्स्थापयतिमे। क्वचिद्दृष्टव्यासा सुखयति
मुहूर्तंह्यनुसृता नमस्तस्यै यस्यारमयति वियोगोपिहृदयम्॥

तत्रैवोन्मादो यथा—

रक्तस्त्वंनवपल्लवैरहमपि श्लाघ्यैःप्रियायागुणैः त्वामायान्ति शिलीमुखाः
स्मरधनुर्मुक्तारसखेमामपि। तस्याः पादतलाहतिस्तवमुदे तद्वन्ममाप्या-
वयोः सर्वंतुल्यमशोक केवलमहं धात्रासशोकःकृतः॥

यथावा—

भव . . ङ्गप्रकृतिरमणीयाकुलवधू रिहस्थैर्दृष्टावा विदितमिह
वास्यायदभवत्। वयोत्रस्थांतस्याःश्रुणुतसुहृदोयत्रमदनः
प्रगल्भव्यापारश्चलतिहृदिमुग्धश्चवपुषि॥

धाचिगुणकीर्तनं यथा—

इदं किंतेन्यस्तंवलयिनिकरेवक्त्रकमलं प्रियेकःकोपोयं
प्रणयिनि निरागस्यपिजने। ब्रुवाणेमय्येवंश्वसितविषयो-
त्कंपितकुचं मृगाक्ष्यास्तत्कालं नयनजलमेवोत्तरमभूत्॥

यथावा—

क्षणमविशदं व्यक्तं भूयस्ततः परिमन्थरं तदनु चकितं ह्रीतं
पश्चात्ततश्चनिरङ्कुशम् । कुवलयदृशा प्रेमप्रादुर्भूतं
नवसङ्गमे तदिहविरहे ध्यातं ध्यातं विधूनयतीवमाम् ॥

तत्रैवविलापो यथा—

हे विप्रयोगदहनज्वलितो . . . मा निर्दह प्रियमिदं नहि जीवितं मे ।
एवं मनः परिहराञ्जलिरेषमूर्न्धिन्यस्तोमया वसतियत्र सरोरुहाक्षी ॥

यथावा—

प्रियविरहमहोष्मा मुर्मुरामङ्गलेखा मयिहतक हिमांशो मास्पृश क्रीडयापि ॥
इह हि तव लुठन्तः प्लोषपीडां भजन्ते दरजरठमृणालीकाण्डमुग्धा मयूखाः ॥

वपुर्विकार्श्यं यथा—

पर्यस्य प्रसरेण बाष्पपयसां पूरस्य पक्ष्मालकाः निश्वासांश्च नखम्पचा
न सहते पाणिः कपोलाश्रयः । दग्धोन्तर्मदनाग्निना स्तनभरो
भग्नेवपांडुछवि र्भास्वद्बिम्बगता कलेवशशिनः क्षीणा तनुस्ताम्यति ॥

यथावा—

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदय कुसुमशोषीदारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं शरदिज इव घर्मः केतकीगर्भपत्रम् ॥

तत्रैवव्याधिर्यथा—

आपाण्डुर्वदने गतावविशदं चिन्तामयेष्वायतः क्षामो वाचि
विचारणास्यकुशलोरम्येष्वरम्यक्रियः । उत्कम्पोहृदये द्रवो नयन-
योरूर्वोर्जडोऽङ्गे गुरु रशोकोऽयंमयियाति तद्विरहभुरेकोऽप्यनेकांगतिम् ॥

यथावा—

दलतिहृदयं गाढोद्वेगं द्विधा नतु भिद्यते वहतिविकलः कायो
देहंनमुञ्चति चेतना । ज्वलयति तनूमन्तर्दाहः करोति
नभस्मसा त्प्रहरंति विधिर्मर्मछेदी नकृन्तति जीवितम् ॥

चेष्टायांजाड्यं यथा—

एकमुत्कण्ठयाशून्यमन्यद्दयितयाहृतम् ।
वेदनामपरंधत्ते कियन्ति हृदयानिमे ॥

यथावा—

शिथिलशिथिलं न्यस्य स्वैरं धनुर्दिशखरेभुजं नयनसलिलैः
कुर्वन्मौर्वीलतामपरामिव । अहहविकलं श्रुत्वाश्रुत्वा
घनस्तनितध्वनिं किमपि किमपि ध्यायन्नार्यो नयाति नतिष्ठति ॥

तत्रैवमूर्छा यथा—

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः शून्यंमन्येजगदविरत
ज्वालमन्तःर्ज्वलामि । सीदन्नन्धे तमसि विधुरो मज्जतीवान्त-
रात्मा विष्वङ्मोहः स्थगयति कथं मन्दभाग्यःकरोमि ॥

यथावा—

बन्धुता हृदय कौमुदीमहो मालतीनयनमुख्य चन्द्रमाः ।
सोयमधमकरन्दनन्दनो जीवलोकतिलकः प्रलीयते ॥

जातानुभावस्य विरहिणः स्मरणादिबीजोद्बोधन हेतुश्चित्तारम्भादिकारणं भर्यातिशयः विरहोद्दीपनम् । स प्रायेणाष्टधा—देशः, देशचिन्हं, कालः, कालचिन्हं, वस्तु, वस्तुचिन्हं, कार्यं, कार्यचिन्हमिति । स्मरणादयस्तु चत्वारः स्मरणं, इच्छा, द्वेषः, प्रयत्न, इति । चित्तारम्भादयोऽपि, तावन्तएव, चित्तारम्भः वागारम्भः बुध्यारम्भः शारीरारम्भइति । उभये प्रत्ययगतश्चतुर्धा । तत्रस्मरणभेदेषु, स्मृतिः, अनुस्मृतिः, स्मृतिविशेषः, अनुस्मृतिविशेषश्च। इच्छाभेदेषु, इच्छा, अन्विच्छा, इच्छाविशेषः, अन्विच्छाविशेषश्च ; द्वेषभेदेषु—द्वेषः, अनुद्वेषः, द्वेषविशेषः, अनुद्वेषविशेषश्च ; प्रयत्नभेदेषु—प्रयत्नः, अनुप्रयत्नः, प्रयत्नविशेषः, अनुप्रयत्नविशेषश्च । चित्तारम्भप्रभेदेषु शुद्धः, सङ्कीर्णः, प्रकीर्णः, विप्रकीर्णइति । वागारम्भप्रभेदेषु—प्रकृतः, अप्रकृतः, प्रसक्तः, अनुप्रसक्तइति । बुध्यारम्भप्रभेदेषु—यथा, तथा, अन्यथा, उभयथा, इति । शारीरारम्भप्रभेदेषु—वक्त्रे, वपुषि, दृष्टौ, चेष्टायामिति । चत्वारश्चतुष्काः कारणभूताः, चत्वारस्तु कार्यभूताइति । तेषु—चित्तारम्भ बुध्यारम्भावाभ्यन्तरौ, वागारम्भशारीरारम्भयोः कारणमपिभवतः । शारीरारम्भवागारम्भौ तु बाह्यौ कार्यमेव । चित्तारम्भस्तु बुध्यारम्भस्यापि-

कारणमिति । तत्र विरहोद्दीपनप्रभेदेषु—ग्राम्यारण्यावुद्योनेशाः—तेषुग्राम्यो यथा—

अभ्याशस्थितचूतषण्डगहनाद्ग्रामादितोगेहिनी स्थानंकिञ्चिदवृक्षकं
विरहिणी तूर्णंवधूनीयताम् । अत्रायात्य चिरेण कोकिलकुल
व्याहारझङ्कारिणः पान्थ स्त्रीजनजीवितापहरणप्रौढाः पुरोवासराः ॥

आरण्यो यथा—

एतत्पुनर्वनमहो कथमद्यदृष्टं यस्मिन्नभूम चिरमेव पुरावसन्तः ।
आरण्यकाश्च गृहिणश्च रताःस्वधर्मे सांसारिकेषुचसुखेषु वयंरसज्ञाः ॥

अनुभूयमानस्मर्यमाणानि देशचिन्हानि, तेषु—अनुभूयमानं यथा—

एतेतएवगिरयोऽपिरवन्मयूरास्तान्येव मत्तहरिणानि वनस्थलानि ।
अमञ्जुवञ्जुलरुतानि च तान्यमूनि नीरन्ध्र नीरनिचुलानि सरित्तटानि ॥

स्मर्यमाणं यथा—

पुरायत्र स्रोतः पुलिनमधुना तत्रसरितां विपर्यासं यातो
घनविरलभावः क्षितिरुहाम् । बहोर्दृष्टं कालादपरमिव मन्ये
वनमिदं निवेशः शैलानां तदिदमितिबुद्धिं द्रढयति ॥

वर्षावसन्तसमयादिः कालः—तत्रवर्षासमयो यथा—

वातप्रोक्षित धूलीपरिमिलनसमुद्धूलिताङ्गःसमन्ताद्दण्डोद्वेल्लद्बला-
कावलिकुणपशिरोनद्धनीलाभ्रकेशः । प्रेङ्खद्विद्युत्पताकारुचिरसुरधनुः
खण्डखट्वांगधारी सम्प्राप्तःप्रोषितस्त्रीप्रतिमयजनकः कालकापालिकोऽयं ॥

वसन्तसमयो यथा—

चैत्रः सैवसखे स्ववृन्तनियतश्यामाशिभिः किंशुकैः अङ्गारैरिवभासुरोन्ध-
रुचिभिश्चक्षूंषि दन्दह्यते । यत्रैतामदमञ्जुभिः परभृतैरुच्चोच्चरत्पञ्चमा
श्चूतारामभुवः प्रियविरहिणां कुर्वंतिकर्णज्वरं ॥

घनोन्नतिप्रसूनविकासादीनिकालचिन्हानि यथा—

किञ्चिन्मुद्रितपांसवः शिखिकुलैरसानन्दमालोकिताः भग्नावास-
रुदद्दरिद्रगृहिणी श्वासानिलैर्जर्जराः। एतेते निपतन्ति नूतनघना
त्प्रावृड्भरारम्भिणो विच्छायीकृत विप्रयुक्तवनिता वक्त्रेन्दवो बिन्दवः॥

यथावा—

मागणइंदहोअं कुसुमहुसिहहोणहकुमाइवसि रइकेलि सुअवआणा।
सक्कतरुवड्ढइ विरहिणी जीवइं किंफाइं कुडउलोहिं अलि अत्तउम
अणहोणं हद्दकुडउ॥

ईप्सितमनीप्सितंवा द्रव्यजातं वस्तु। तत्र ईप्सितं यथा—

द्यूते पणः प्रणयकेलिषु कण्ठपाशः क्रीडापरिश्रमहरं व्यजनंरतान्ते।
शय्यानिशीथकलहे हरिणेक्षणाया लब्धंमयाविधिवशादिदमुत्तरीयम्॥

अनीप्सितं यथा—

अयिपिबतचकोराः किञ्चिदुन्नाम्य कण्ठं क्रमुक वलन-
चञ्चच्चञ्चवश्चन्द्रिकाम्भः। विरहविधुरितानां जीवित-
त्राणहेतोर्भवति हरिणलक्ष्मा येनतेजोदरिद्रः॥

असाधारणधर्मचिन्हानि यथा—

कान्तारैर्मम गर्जितैकपरता धाराम्बुभिः का हृता का मोहंगमिता
त्रियोगविधुरा धाराकदम्बानिलैः। नीता का च विलोलतांमदकलैः
केकारवैर्बर्हिणामित्यंपान्थगृहाणिपश्यतिघनोविद्युत्प्रदीपैरिव॥

यथावा—

अरखुडइ पिआ हिअए अण्णं महिला अणं रमंतस्स।
दिट्ठेसरिसम्मि गुणेऽसरिसम्मिगुणे अईसंते॥

निर्वर्त्य, विकार्य, प्राप्य, कर्मव्यापी, क्रियाविशेषः । कार्यो यथा—

मागाः पान्थपथामुना यदि तव भ्रातः प्रियंजीवितं यच्चूताकृतिरत्र
तिष्ठति महान् रौद्रः पुरो राक्षसः । तेनोद्यन्मकरन्द लुब्धमधुप
व्याहारझङ्कारिणा पान्थानामधुनैव निर्घृणधिया सार्थोहतःश्रूयते ॥

यथावा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः सरणिमपरो
मार्गस्ताअद्भवद्भिरवेक्ष्यताम् । इहहिविहितो रक्ताशोकः
कयापि हताशया चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

क्रियाविशेषाणामनुमापकमर्थान्तरं कार्यचिन्हं यथा—

सव्याधेः कृशता क्षतस्यरुधिरं दष्टस्य लालास्रुतिः सर्वनैतदिहास्ति
तत्कथमयं पान्थस्तपस्वी मृतः । आघ्रातं मधुलम्पटैर्मधुकरै
रारब्धकोलाहलैः नूनं दुःखितकेन चूतमुकुलेदृष्टिः क्वचित्पातिता ॥

यथावा—

रक्ताशोक कृशोदरी क्वनु गता मुत्क्वानुरक्तं जनं नोदृष्टेति मुधैव
धूनयसिकिं वातावधूतंशिरः । उत्कण्ठा घटमानषट्पद घटासङ्घ-
ट्टदष्टछदः तत्पादाहतिमन्तरेण सरसः पुष्पोद्गमोऽयंकुतः ॥

अथैतेपुस्मृतीच्छाद्वेषप्रयत्नजन्मानो वाग्बुद्धिशरीरारम्भाः । तेषु—मनआरम्भःस्मृतिजन्मा यथा—

तस्यचक्रुश्चमत्कारं व्यतीतसमयाअपि ।
स्मितार्द्रमुकुलोद्भेदाः कदम्ववनराजयः ॥

स्पर्धेच्छाजन्मा यथा—

करकमलवितीर्णैरम्बुनीवारशष्पै स्तरुशकुनिकुरङ्गान्मैथिलीयानपुष्यत् ।
भवतिमम विकारस्तेषु दृष्टेषु कोपि द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥

एव द्वेषजन्मा यथा—

सञ्छन्नैर्जलवामनैर्जलधरै र्व्योम्नि प्रसुप्तेजने देवे वर्षतिदिङ्मुखेषु
चरतिस्वैरं कदम्बानिले । . . गायतिच प्रवासिनिकथं पान्थ-
प्रियाणामिमा नोन्मथ्नंतिमनांसि मांसलमिलद्दीर्घान्धकाराःक्षपाः ॥

अयमेव प्रयत्नजन्मा यथा—

उत्केकाः शिखिनः पयोदपटलैःछन्नं नभोमण्डलं वाता वान्ति
कदम्बरेणुशबला जातामहीशाड्वला । उद्भिन्नंनवयौवनंप्रिय-
तमोदेशान्तरस्थो ऽवधिः कालो याति न यातिजीवितमिति व्यग्रं मनश्चिन्तया ॥

बागारम्भस्मृतिजन्मा यथा—

यत्वन्नेत्रसमान कान्तिसलिले मग्नं तदिन्दीवरं मेघैरन्तरितः
प्रियेनवमुखच्छायानुकारीशशी । येऽपि त्वद्गमनानुसारिगतयस्ते
राजहंसा गताः त्वत्सादृश्यविनोदमात्रमपिमे दैवेननक्षम्यते ॥

सपवेच्छाजन्मा यथा—

अपि जनकसुताया स्तच्चतच्चानुरूपं स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननुपुनरिवतन्मे गोचरीभूतमक्ष्णो रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥

एव द्वेषजन्मा यथा—

तरुणतमालनीलबहुलोन्नमदम्बुधाराः शिशिरसमीरणावधुतनूतनवारिकणाः ।
कथमवलोकयेयमधुनाहरिहेतिमती र्मदकलनीलकण्ठ कलहैर्मुखराहरितः ॥

अयमेव प्रयत्नजन्मा यथा—

शैलःसोऽयं ककुभसुरभिर्माल्यवान्नाम यस्मिन्नीलस्निग्धश्श्रयति
शिखरं नूतनस्तोयवाहः । आर्येणास्मिन्विरमविरमातःपरं
नक्षमोऽस्मि प्रत्यावृत्तः पुनरिवसमेजानकीविप्रयोगः ॥

वृक्षारम्भस्मृतिजन्मा यथा—

रक्ताशोकतरोः कराकृतिधरा गजन्त्यमीपल्लवा वृत्तत्वात्सदृशी
तदूरुयुगलेनैषापिरम्भावलिः । प्रौढिम्या कुसुमेस्थिता तदधरच्छाया-
विकारंविना तन्मन्येऽत्रवने विभज्यविधिना क्षिप्ता ममप्रेयसी ॥

स्वपरेच्छाजन्मा यथा—

यस्यान्ते दिवसास्तयासह तथानीताः पुनःस्वेगृहे यत्सम्बद्धकथाभिरेव
सुचिरं दीर्घाभिरस्थीयत । एकः संप्रतिनाशित प्रियतम स्तामेवपापः
कथं रामः पञ्चवटीं विलोकयतुवा गच्छत्वसम्भाव्यवा ॥

परद्वेषजन्मा यथा—

वातैः केसरगन्धिभिर्विषधरश्वासैरिवान्धंमनो दग्धेतप्तशलाकयेव
तटिता पर्यश्रुणी लोचने । एताः संप्रतिरूपगर्भगुरवः सान्द्री-
भवत्सौरभाः केतक्यः करपत्रपत्रजरठाः कृन्तन्तिमर्माणिमे ॥

स्वयमेव प्रयत्नजन्मा यथा—

स्निग्धश्यामल कान्तिलिप्तवियतो वेल्लद्बलाकाधना वाताःशीकरिणः
पयोदसुहृदामानन्दकेकाःकलाः । कामंसन्तुदृढःकठोरहृदयो रामोऽस्मि
सर्वंसहे वैदेहीतुकथंनविष्यतिहहाहादेविधीराभव ॥

शारीरारम्भःस्मृतिजन्मा यथा—

निपततिशयनेतव स्मरन्ती पथिकवधूरवधूतजीविताशा ।
जलधरसमयस्य केतुभूतां वकुललतामवलोक्य पुष्पिताग्राम् ॥

स्वपरेच्छाजन्मा यथा—

अदृश्यन्त पुरस्तेन खेलाःखञ्जनपङ्क्तयः ।
असर्यन्तच निश्वस्य प्रियानयनविभ्रमाः ॥

पपद्वेपजन्मा यथा—

संजीवणोसहिं विअसुअस्सरक्खइ अणण्णवावारं ।
सासूणवब्भदं सणकंठागअजोविअंसोणहं ॥

संजीवनौषधमिवसुतस्य रक्षत्यनन्यव्यापारा । श्वश्रूर्नवाभ्रदर्शन कण्ठागतजीवितांस्नुषाम् ॥

अपमेवप्रयत्नजन्मा यथा—

दट्ठूण उण्णमंते मेहेआमुक्कजीविआसाए ।
पहिअवहुए परि अणोओरुण्णमुहीएसच्चविओ ॥

दृष्ट्वान्नमतःमेघान् आमुक्तजीविताशायाः । पथिकवध्वापरिजनः अवरुदितमुखयापरिज्ञातः ॥

अथैतेषु स्मरणादीनांपृथक्पृथक् चतुष्कम् । तत्र स्मरणस्य स्मृति रनुस्मृतिः स्मृतिविशेषो अनुस्मृतिविशेषश्च । तेषु— स्मृतिर्यथा—

शशिमणिविलासेयं यस्यां विपाण्डुरमाननं करकिसलयेकृत्वा
वामे घनश्वसितोद्गमा । चिरयतिमयि व्यक्ताकूता मनाक्स्फुरिताधरा
नियमितमनोमन्युर्दृष्टामयारुदतीप्रिया ॥

अनुस्मृतिर्यथा—

तस्यास्तीरेरचितशिखरःपेशलैरिंद्रनीलैः क्रीडाशैलः कनककदलीवेष्टन
प्रेक्षणीयः । मद्गेहिन्याःप्रियइतिसखे चेतसाकातरेण प्रेक्ष्योपान्त
स्फुरिततटितं त्वांतमेवस्मरामि ॥

स्मृतिविशेषो यथा—

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः प्रत्यासन्नौ कुरवकवृते-
र्माधवीमण्डपस्य । एक स्सख्यास्तवसह मया वामपादाभिलाषी
कांक्षत्यन्यो वदनमदिरां दोहदच्छद्मनायः ॥

अनुस्मृतिविशेषो यथा—

तन्मध्येचस्फुटितफलका काञ्चनीवासयष्टिः मूलेबद्धामणिभिरनति
प्रौढवंशप्रकाशैः । तालैश्शिञ्जात्वलयसुभगैर्नर्तितःकालयामे
यामध्यास्तेदिवसविगमेनीलकण्ठस्सुहृद्धः ॥

इच्छाया इच्छा अन्विच्छा इच्छाविशेषः अन्विच्छाविशेषश्च । तेषु—इच्छा—

विलसत्कदम्बनिकुरुम्बपांसुना सहजीवितं वह ममप्रियायतः ।
अपिवातदङ्ग परिवादशीतलं मयि कश्चिदीरय भवान्हि मेगतिः ॥

अन्विच्छा यथा—

तं दइआहिण्णाणं जंम्मिविअंगम्मिराहवेणणिम्मिअं ।
सीआपरिमट्टेणव ऊढोतेणविणिरंतररोमंचो ॥

इच्छाविशेषो यथा—

तस्योत्संगे प्रणयिन इवस्रस्तगङ्गादुकूलां नत्वंदष्ट्वा नपुनरलकां
ज्ञास्यसे कामचारिन् । यावः कालेवहति सलिलोद्गारमुच्चैर्विमानै
र्मुक्ताजालग्रथितमलकंकामिनीवाभ्रवृन्दम् ॥

अन्विच्छाविशेषो यथा—

तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं दूराल्लक्ष्यं सुरपतिधनु-
श्चारुणातोरणेन । यस्योद्याने कृतकतनयः कान्तयावर्धितोमे
हस्तप्राप्यस्तबकनमितोबालमन्दारवृक्षः ॥

द्वेषस्य द्वेषोऽनुद्वेषोद्वेषविशेषोऽनुद्वेषविशेषश्च—तेषु द्वेषो यथा—

अग्निक्षोदवतीव कुन्दमुकुलैः फुल्लैः पलाशद्रुमैः साङ्गारप्रकरेव-
धूमकलुषेवोत्पातिभिः षट्पदैः । रक्ताक्षिद्युतिभिः सशोषगहनालातेव
पुंस्कोकिलैः दृष्टाप्राणसमान्वितेव पथिकेनाराद्वनान्तस्थली ॥

अनुद्वेषो यथा—

चंदो विसअसहोअरउकोवोल्लअमिअरस सहिल्ग्गं ।
तीआगेमहुज्जोह्वाविजालइजरम ॥

द्वेषविशेषो यथा—

अज्जमए तेण विणा अणुभूय सुहाइ संम्हरंतीए ।
अभिणवमेहाणरवीणीसागिओ वच्चपडहोव्व ॥

अनुद्वेषविशेषो यथा—

भ्रमय जलदानम्भोगर्भान्प्रमोदयकोकिलान् कलय शिखिनः
केकोत्कण्ठान्कठोरय केतकान् । विहरिणि जनेमूर्च्छालब्धा
विनोदयतिव्यथा मकरुणः पुनःसंज्ञाव्याधिंविधाय किमीहसे ॥

प्रयत्नस्य प्रयत्नोऽनुप्रयत्नः प्रयत्नविशेषः अनुप्रयत्नविशेषश्च । तेषु प्रयत्नो यथा—

देशैः रन्तरिताशतैश्चसरितामुर्वीभृतांकाननैः यत्नेनापि न याति
लोचनपथं कान्तेतिजानन्नपि । उद्ग्रीवश्चरणाग्ररुद्धवसुधः
कृत्वाश्रुपूर्णां दृशं तामाशांपथिकस्तथापि किमपि ध्यायन्मुहुर्वीक्षते ॥

अनुप्रयत्नो यथा—

अलमगतयः श्यामागन्धं वहन्तिवनानिलाः क्वणतिमधुरं
कादम्बानांकुलं कमलाकरे । अवधिगणनाभग्नाङ्गुल्या तया
विरहश्च मे भगवतिनिशे शंस प्रातः कदानु भविष्यति ॥

प्रयत्नविशेषो यथा—

अक्लिष्टबालतरुपल्लवलोभनीयं पीतंमया सदयमेवरतोत्सवेषु ।
बिम्बाधरं स्पृशसि चेद्भ्रमरप्रियाया स्त्वांकारयामि कमलोदरबन्धनस्थम् ॥

अनुप्रयत्नविशेषो यथा—

व्योमश्रीर्हृदयैक मौक्तिकलते मातर्वलाव .. ब्रूयास्तं जनमादरः
खलुमहान्प्राणेषु कार्यस्त्वया । एतांम्लानिमुपागतांस्रजमिव
त्यक्तातनु दुर्वहा मेपाहं सुखिनी भवामि नसहे तीव्रांवियोगव्यथां ॥

अथचिन्तारम्भादीनां पृथक्पृथक् चतुष्कम् तत्र। चिन्तारम्भेषु—स्मृत्यादीनामेकस्यैव सद्भावे शुद्धः, द्वयोस्सङ्कीर्णः, त्रयाणांप्रकीर्णः चतुर्णांविप्रकीर्ण इति, तेषु—शुद्धो यथा—

चिराद्वेगारम्भी प्रसृतइव तीव्रोविषरसः कुतश्चित्संवेगात्प्रचल
इव शल्यस्यशकलः। व्रणोरूढग्रंथिः स्फुटित इवहृन्मर्मणिपुनः
परावृत्तःशोको विकलयति मांनूननइव।

सङ्कीर्णो यथा—

एताः प्रियतमावाचः स्नेहार्द्राः शोकदारुणाः।
एतास्ता मधुनोधाराश्च्योतन्ति सविषास्त्वयि॥

प्रकीर्णो यथा—

शीतांशुर्विषसोदरः फणभृतां लीलास्पदं चन्दनं हाराः क्षारपयोभुवः
प्रियसुहृत्पंकेरुहंभास्वतः। इत्येषां किमिवास्तु वस्तु मदनज्योतिर्निर्घा-
ताययद्वाह्याकारपरिग्रहेणतुवयं तत्त्वत्यजोवञ्चिताः॥

विप्रकीर्णो यथा—

तस्यस्थित्वा कथमपि पुरः कौतुकाधानहेतो रन्तर्बाष्पश्चिरमनुचरो
राजराजस्यदध्यौ। मेघालोके भवति सुखिनोऽप्यन्यथावृत्तिचेतः
कण्ठाश्लेष प्रणयिनि जने किं पुनर्दूरसंस्थे॥

पातारम्भेषु कार्यशरीरानुगामीप्रकृतः, तद्विपरीतोऽप्रकृतः, प्रकृताप्रकृतयोरनुयायी प्रसक्तः प्रसक्तानुयायिन्यप्रसक्तइति। तत्र—प्रकृतो यथा—

सन्तप्तानां त्वमसिशरणं तत्पयोदप्रियायाः सन्देशंमेहर
धनपतिक्रोधविश्लेषितस्य। गन्तव्याते वसतिरलका नाम
यक्षेश्वराणां बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या॥

अप्रकृतो यथा—

मार्गं तावच्छ्रृणु कथयतस्त्वत्प्रयाणानुरूपं सन्देशं मे तदनु जलद
श्रोष्यसि श्रोत्रपेयम्। खिन्नः खिन्नः शिखरिषुपदं न्यस्यगन्ता
सियत्र क्षीणःक्षीणः परिलघु पयः स्रोतसां चोपभुज्य॥

प्रसक्तो यथा—

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां सौधोत्संगप्रणय-
विमुखो मास्मभूरुज्जयिन्याः। विद्युद्दामस्फुरित चकितैर्यत्र
पौराङ्गनानां लोलापाङ्गैर्यदिनरमसेलोचनैर्वंचितःस्याः॥

अनुप्रसक्तो यथा—

भर्तुः कण्ठच्छविरितिगणैः सादरंदृश्यमानः पुण्यंयायास्त्रि-
भुवनगुरोर्धाम चंडेश्वरस्य। धूतोद्यानं कुवलयरजोगन्धिभि-
र्गन्धवत्या स्तोयक्रीडानिरतयुवतीस्नानतिक्तैर्मरुद्भिः॥

सुव्यारम्भेषु साहश्यावलम्बीप्रत्ययः यथा—अन्यथा इति। संशयावलम्बीतु उभयथेति,
तेषु यथारूपो यथा—

तन्वीमेघजलार्द्र वल्कलतया धौताधरेवाश्रुभिः शून्येवाभरणैः
स्वकालविरहाद्विश्रान्तपुष्पोद्गमा। चिन्तामौनमिवास्थिताम्धुकृतां-
शब्दैर्विनालक्ष्यते चण्डीमामवधूयपादपतितं याताप्रकुप्येवसा॥

अन्यथारूपो यथा—

नवजलधरः सन्नद्धोऽयं नदृप्तनिशाचरः सुरधनुरिदं दूराकृष्टं
न नाम शरासनम्। अयमपि पटुर्धारासारो नबाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रियानममोर्वशी॥

संशयावलंबी यथा—

हृतोष्ठरागैर्नयनोदबिन्दुभि र्निमग्ननाभौनिपतद्भिरङ्कितम्।
च्युतंरुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम्॥

उभयथारूपो यथा—

पथिककथितं त्वत्प्रस्थानं गतोऽधिकवासरः श्वसितमधुना
वामेनाक्ष्णा तरङ्गितपक्ष्मणा। प्रतिदिनममी दोषादोषं
हताहतवायसा स्तदपि दयितोनैवायातः किमालिविपश्यसि॥

शारीरारम्भेषु वक्त्रमभिव्यक्तरूपो वक्त्रे, वपुरभिव्यक्तरूपो वपुषि, दृष्ट्यभिव्यक्तरूपो दृष्टौ, चेष्टाभिव्यक्तरूपश्चेष्टायामिति । तेषु—प्रथमो यथा—

भ्रातःपान्थ व्रजसि यदि हे तांदिशं पुण्यभाजं वक्तासीत्थं
कठिनहृदयं तंजनं किं यथेति । पृष्टायावत्कथयतिवचो वाञ्छितं
नैव बाला यावत्सान्द्रै र्वदनकमलं रुद्धमश्रुप्रवाहैः ॥

द्वितीयो यथा—

परिपाण्डु पांसुलकपोल सुन्दरं दधतीविलोल कबरीकमाननम् ।
करुणस्यमूर्तिरथवा शरीरिणी विरहव्यथेववनमेति जानकी ॥

तृतीयो यथा—

त्वामारूढं पवनपदवी मुद्गृहीतालकान्ताः प्रेक्षिष्यन्ते
पथिकवनिताःप्रत्ययादाश्वसन्त्यः । कस्सन्नद्धे विरहविधुरां-
स्त्वय्युपेक्षेतजायां नस्यादन्योऽप्यहमिवजनोयःपराधीनवृत्तिः ॥

चतुर्थो यथा—

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोः लब्धायास्ते
कथमपिमया स्वप्नसन्दर्शनेषु । पश्यन्तीनां नखलुबहुशो
नस्थलीदेवतानां मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाःपतन्ति ॥
अथैनेदेशकालादिभेदैरसंभिन्नमूर्तयः ।
परस्परंच संपृक्ताः संख्यामत्येतुमीशते ॥
नपर्यन्तोविकल्पानां विरहोद्दीपिजन्मनाम् ।
शब्दब्रह्मविवर्तानां व्यक्ताव्यक्तात्मनामिव ॥

स्वाभाविकः कादाचित्कश्च, नायककृतः, नायिकाकृत, सखीकृतः, परिजनकृतश्च, हेतुविपरीतः, व्याधिविपरीतः, तदर्थकारी, काल्पनिकश्चेति । तत्रस्वाभाविको यथा—

उन्नाल नाल कमलाकर माकरन्द निष्पन्द संवलन मांसल गन्धबन्धुः ।
त्वां प्राणयिष्यतिपुरःपरिवर्तमान कल्लोलशीकरतुषारजडस्समीरः ॥

स्वाभाविको यथा—

वीचीवातैःशीकरक्षोदशीतैः आकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं स्वैरं स्वैरं प्रेषितैस्तर्पयेति ॥

याहच्छिको यथा—

जंमुच्छि आएणसुओ कलंवगन्धेदतगुणेपडिओ ।
इअरा गज्जिअसद्दो जीएण विणा णव्वोलंतो ॥

यन्मूर्छितयानश्रुतः कदंबवातेऽयत्तद्गुणेपतितः ।
इतरथागर्जितशब्दोजीवितेन विनानापक्रामति ॥

. . . . . . .

. . . . . . . . . . . इउग्गः णिव्भरोहि अंगेहिं ।
परिरंभईसुहाइं पाअ उमाणं पदोहोई ॥

नायककृतो यथा—

तस्मिन्काले जलदयदिमाल्ब्धनिद्रासुखास्याव् तत्रासीनःस्तनित
मुखरोयामगात्रेसहस्व । माभूद्स्याः प्रणयिनिमयिस्वप्रलब्धे-
कथंचित् सद्यःकंठच्युनभुजलताग्रन्थिगाढोपगूढम् ॥

आश्च्योतनन्नु हरिचन्दन पल्लवानां निष्पीडितेन्दुकर कन्दलजोनुसेकः ।
आतप्तजोवित पुनः परितर्पणोमे सञ्जीवनौषधिरसोनु हृदिप्रसक्तः ॥

सखीकृतो यथा—

सपदिसखीभिर्निभृतं विरहवती स्थानमत्र भज्यन्ते ।
सहकारमंजरीणां शिम्वोद्गम ग्रन्थयः प्रथमे ॥

परिजनकृतो यथा—

सहमामासाहिप्पउ पिआगमो तिएविरह किसिआए ।
अच्चन्तपहरिसेणा विजामआसाऽमअच्चेअ ॥

हेतुविपरीतो यथा—

साहीणेविपिअ अमे पत्तेविह्णेणमंडिओअघा ।
दुगाअपउत्तपइअं सअंझिअं संठवन्तीए ॥

व्याधिविपरीतो यथा—

मगाअपलद्धवलअं सअंसअं . . . . . .
दोत्तिण्णं सहृच्चिअ चोरि आवेरे हपुसि सिज्झत्ति ॥

तदर्थकरी यथा—

चिरपवसिअदइ अकहाणिउणाहिसहीहि विरहसहणढम् ।
अलिआ अवि अवराए वहूए कमसो कहिज्जन्ति ॥

चिरप्रोषितदयितकृतानि निपुणसखीभिर्विरहसहनार्थम् ।
अलीकाअपरायावध्वाः क्रमशःकथ्यंते ॥

काल्पनिको यथा—

विलीयेन्दु रसाक्षादमृतरसवापी यदिभवेत् कलंकस्तत्रत्यो
यदिच विकचेन्दीवरवनम् । ततस्नानक्रीडाजनित जडभावै-
रवयवैः कदाचिन्मुंचेयं प्रियविरहपीडापरिभवम् ॥

वियोगवेदनावेगशान्तये सखीजनादिवानयं सहायाभ्यासनं । तत्—आपातारंभप्रवृत्तप्रक्रमो-द्दीपनाभिनिवेशकालेषुउपपद्यते ।

तत्र आपातो यथा—

हरिहिइ पिअस्सणवचू अपल्लवो पडममंजरिसणाहो ।
मारुअप्पुपुत्ति पत्था णकलसमुहसंठिओ गमणम् ॥

आरंभो यथा—

ए अच्चिय पुत्तिपिअं धरंति आउत्तणे महपअत्त ।
उत्ताण अमुहवोलं तवाहत्रिरिमाल णोवाअ ॥

प्रवृत्तो यथा—

एत्तहिपुङ्किअ . . . . . . . .

. . . . णिविजिन विउन्ऌइपरमइसुसमीरणआरइ ॥

प्रक्रमो यथा—

पक्ष्माग्र ग्रथिताश्रुधौतवलया निष्पन्दतारेक्षणा बिभ्राणा करपल्लवेन कलित क्लाम्यत्कपोलस्थलम्। सेदानींविभिदेव कामपिगतावस्थां सखीभिश्चिरादासन्नावधि वासरप्रक . . . . . . ॥

उद्दीपन यथा—

गिम्हेदवग्गिमसिमइलिआइ दीसंतिविझासिहराइ।

ऊसपु पउत्तप इएणहोतिणवपाऊस भाइं ॥

ग्रीष्मेदवाग्निमषीमलीनीमानिदृश्यन्ते विन्ध्यशिखराणि।

आश्वसिहिप्रोषितपतिके नमवन्तिनवप्रावृड्भ्राणि ॥

अभिनिवेशो यथा—

पत्तिअण्मेहचदं सहिसूरदीव असिहाए।

कज्जलपडणिणहखुपरम्मिदिअसेहि संगलअं ॥

स्वयं सहायनायकानां मिथः स्वपरादिदोषोद्घाटनं . . . . . . . . . पयोरितिद्वादशधा

तत्र नायकस्य सखीं प्रति यथा—

त्रस्तैकहायनकुरंग विलोलदृष्टेः तस्याः परिस्फुरित गर्भभरालसायाः।

ज्योत्स्नामयीवमृदुबालमृणाल कल्पा क्रव्याद्भिरंगलतिका नियतंविलुप्ता।

तस्यैवसहायं प्रतियथा—

– ... कृतान्ता ॥

नायिकायाः सखीप्रति यथा—

सहिद्‌मेंति कलं वाइं जहमंह णसेसकुसुमाइं ।
णूणं इमेसुदि अएसु बहड्‌गुडिआघणुंकामो ॥

तस्याः सहायं प्रतियथा—

श्वासावाष्पजलंगिररसकरुणामार्गेचनेत्रार्पणा केनेदं नकृतंप्रियस्य
विरहे कस्यासवो निर्गताः । सख्येवंदयितेननास्मिकथिताकान्तः
कथंप्रोषितः प्राणाःसंप्रतिमे कलंकमलिनास्तिष्टन्तुवा यान्तुवा ॥

सखयानायिकां प्रतियथा—

अच्चलेणु धणुओ सहुण्णगणअमुअवणग्गिअमग्गे ।
तुहअप्पणदुण्णअकिरेविएवहिंज्जुरिमअग्गे ॥

तस्यावेव नायकं प्रतियथा—

संप्रातेप्रथिवासरेक्षणमनु त्वद्वर्त्मवातायनं वारंवारमुपेत्य
निर्वृणतयानिश्चित्य किंचित्ततः । संप्रत्येवनिवेध केलिकुररीं
सास्रंसखीरयःशिशोः माधव्यासहकारकेणकरुणः पाणिग्रहःकल्पितः ॥

तस्याः सहायंप्रतियथा—

छंबीओ अंगणमाहवीणदारगालाओ जाआओ ।
आसासो[यांथपलो अणेत्रिपिद्दोग अवईणम् ॥]

स्तबका अङ्गणमाधव्याद्वारार्गलाजाताः । आश्वासोमार्गप्रलोकनेपिनष्टोगतपतिकायाः ॥

सहायस्य नायिकां प्रतियथा—

. . णंतितिघिअं विरहिणी ओणमणअप्पि ।
माअन्दमंजरी वोरूए एमे अमारेति ॥

सहायस्यनायकं प्रतियथा—

म अरद्धअसामणुमणहि मुहप्पिभाहरसिन्दूरि ।
रक्ष्कघेत्रि तइह अहुआहिअएव्वहंत उज्जिविसो ॥

. . . . . .

अपहस्तितबांधवे त्वया विहितं साहसमस्य तृष्णया ।
तदिहानपराधिनिप्रिये सखिकोयं करुणोज्झितःक्रमः ॥

सहायस्य सखीं प्रतियथा—

वज्रादपिकठोराणिमृदूनिकुसुमादपि ।
लोकोत्तराणां चेतांसि कोहिविज्ञातुमर्हति ॥

सहायं प्रतियथा—

तेपुच्चिज्ज हिअत्तउंजे तहिंदिसिहिणएंति ।
जेहिसदिट्ठिगोरडीतं दुक्करजीअंति ॥

जातोत्सुक्यस्य चेतसः क्रियान्तरेषु व्यासंगजत्कंठाविनोदः—स आन्तरो बाह्योबाह्याभ्यंतरः प्रसक्तोऽनुप्रसक्तः प्रसक्तानुप्रसक्तश्चेति नायकस्यषोढा । नायिकायामपि बाह्यअन्तरो बाह्यान्तरः प्रसक्तोऽनुप्रसक्तः प्रसक्तानुप्रसक्तश्चेति क्रमेणषोढैवोदाह्रियन्ते ॥

तत्र नायकस्यान्तरो यथा—

यद्यत्साधु नचित्रे स्यात्क्रियते तत्तदन्यथा ।
तथापि तस्यालावण्यंरेखयाकिञ्चिदन्वितम् ॥

तस्यैव बाह्यो बाह्याभ्यंतरश्च यथा—

कृतंनकर्णर्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेसरम् ।
नवा शरच्चन्द्र मरीचिकोमलं मृणालसूत्रंरचितं स्तनांतरे ॥

तस्य प्रसक्तोऽनुप्रसक्तः प्रसक्तानुप्रसक्तश्च यथा—

कार्या सैकतलीनहंसमिथुना स्रोतोवहामालिनी पादास्तामभितो
निषण्णहरिणा गौरीगुरोःपावनाः । शाखालंबितवल्कलस्य च
तरोर्निर्मातुमिच्छाम्यधः शृङ्गेकृष्णमृगस्यवामनयनं कण्डूयमानांमृगीम् ॥

नायिकाया बाह्यआन्तरो बाह्यान्तरश्च यथा—

आलोकेतेनिपतति पुरा साबलिव्याकुलावा मत्सादृश्यं
विरहतनुवा भावगम्यं लिखन्ती । पृच्छन्तीवा मधुरवचनां
शारिकां पञ्जरस्थां कच्चिद्भर्तुःस्मरसि रसिके त्वं हि तस्यप्रियेति ॥

तस्या एवप्रसक्तो यथा—

उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्यवीणां मद्गोत्राङ्कं विरचितपदं
गेयमुद्गातुकामा । तन्त्रीरार्द्रां नयनसलिलैः स्सारयित्वा कथंचि
द्भूयोभूयःस्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥

तस्याप्रसक्तः प्रसक्तानुप्रसक्तश्च यथा—

शेषान्मासान् विरहदिवसस्थापितस्यावधेर्वा विन्यस्यन्ती भुवि
गणनया देहली मुक्तपुष्पैः । सम्भोगंवा हृदयनिहितारम्भमा-
स्वादयन्ती प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥

दूरस्थयोर्दूतद्वारकयोः पत्रप्रयोगः सन्देशादानम् । तत्रपरम्परो परोपरः प्रत्ययपरश्च । मुखयोरान्तरस्तूष्णीं भाकश्च वार्तं वार्तवः सौवार्तवः सौखवार्तवश्चेति द्वादशधा । तेषु—

परो यथा—

तामायुष्मन्ममच वचनादात्मनश्चोपकर्तुं ब्रूयाएवं तव सह
चरो रामगिर्याश्रमस्थः । अव्यापन्नः कुशलमबलेपृच्छति
त्वां वियुक्तः पूर्वाभाष्यं सुलभविपदांप्राणिनामेतदेव ॥

परोवरो यथा—

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेनतप्तं सास्रेणास्रद्रवमविरतो-
त्कण्ठमुत्कण्ठितेन । उष्णोच्छ्वासं समधिकतरोच्छ्वासिना-
दूरवर्ती सङ्कल्पैस्तैर्विशति विधिनावैरिणारुद्धमार्गः ॥

स्वरो यथा—

शब्दाख्येयं यदपि किलते यरसखीनां पुरस्तात् कर्णे लोलः
कथयितुमभूदाननस्पर्शलोभात् । सोऽतिक्रांतः श्रवणविषयं
लोचनाभ्यामदृश्य स्त्वामुत्कण्ठाविरचितपदं संमुखेनेदमाह ॥

प्रस्वरो यथा—

भर्तुर्मित्रं प्रियमविधवे विद्धिमामंबुवाहं तत्सन्देशैर्मनसि·
निहितैरागतस्त्वत्समीपम् । योबृन्दानि त्वरयति पथिश्राम्यतां
प्रोषितानां मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥

मुख्यो यथा—

कुडजकटवो वाताघ्राताः श्रुतंघनगर्जितं निशिनिशिमुहुः
शून्येनल्पे कृतःशयनश्रमः । अवधिगणनारेखाः पूर्णाःकृतानच
भित्तयो नतव सविधं प्राप्ताःप्राणा नचत्वमिहागतः ॥

मवांतरो यथा—

पान्थद्वारवतींप्रयासि यदिहे तद्देवकीनन्दनो वक्तव्यः स्मरमन्त्र-
मोहविवशागोप्योननामोज्झिताः । एताःकेतकपुष्पधूलीपटलैरा-
लोकयरम्यादिशः कालिन्दीतटभूमयः कितव रे नोयांतिचिन्तास्पदम् ॥

तूर्णी यथा—

नत्राः किं नाम्भोदा न वहतिकिमासारपवनो निशाः किंवासर्वा
नघनतिमिरच्छन्नककुभः । प्रियोयस्मिन्देशे व्रजतुपथिकोनास्ति
लिखितं नजानेसन्देष्टुंसखिकथयवाच्यंपरमतः ॥

मक्तो यथा—

एअंपिअपेसज्ज उआलाहि ओरमह किंथणेहेण ।
लेहणि अवोलणोअत्थ हत्थगलिअं पलअंमिरया ॥

वार्ता यथा—

इत्यात्मानं बहु विगणयन्नात्मनैवावलम्बे तत्कल्याणित्वमपि
सुतरां मागमः कातरत्वम् । कस्यैकान्तंसुखमुपनतं दुःखमे-
कान्ततोवा नीचैर्गच्छत्युपरिच दशाचक्रनेमिक्रमेण ॥

आर्तवो यथा—

धारासिक्तस्थलसुरभिण स्त्वन्मुखस्यास्यबाले दूरीभूतं प्रतनुमपि
मां पञ्चबाणःक्षिणोति । घर्मान्तेस्मिन्विगणय कथं वासराणि-
व्रजेयुः दिक्संसक्तप्रबलजलदव्यस्तसूर्यातपानि ॥

सोवार्ता यथा—

संक्षिप्येत क्षणमपि कथं दीर्घयामात्रियामा सर्वावस्थास्वहरपि
कथं मन्दमन्दातपं स्यात । इत्थंचेतश्चटुलनयने दुर्लभ-
प्रार्थनंमे गाढोष्णाभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥

सोत्नवार्ता यथा—

शापान्तोमे भुजगशयनादुत्थिते शार्ङ्गपाणौ शेषान्मासान्
गमयचतुरो लोचनेमीलयित्वा । पश्चादावांविरहगुणितं
तंतमात्माभिलापं निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासुक्षपासु ॥

व्याप्तिस्कन्धोऽयमुद्देशनिर्देशाभ्यामुदाहृतः ।
अथोदाह्रियतेह्यद्य समाप्तिस्कन्धपद्धतिः ॥

तत्रदूतादिभ्यः प्रियोदन्तलाभप्रवृत्या स स्वदूतकृतः परदूतकृतः स्वपत्रहारकृतः सखीकृतः सहायकृतइति । तेषु—स्वदूतकृतो यथा—

देव्यारसन्ततत्राप्यवारिपटलच्छन्नेक्षणायाःकरं दूरोरत्नसमर्पणाय
बहुशोयान्तं वृथैवान्यतः । भ्राम्यन्तं पतदश्रुपूरितदृशो
हस्तंममाप्यैकतो दृष्ट्वातत्रनिशाचरैरपि निजस्वामीचिरं निन्दितः ॥

परदूतकृतो यथा—

पलिअंति पहिअतु हभवणदारसह आरसाहिणोएण्हि ।
घरीणीए कुंदलो अणगलंतजलपूरि आहारा ॥

स्वपक्षहरकृतो यथा—

जंजंपउडूपइ आपि अअमणामरखरंलिहइलेहे ।
तंतंसेले हणिआणु सारगलि ओपुसइ सेओ ॥

सखीकृतो यथा—

स्वप्नान्तरेसमुपलभ्य च साभवन्तं मिथ्योपगूहनविपक्तभुजाप्रबुध्य ।
दृष्टोऽसियन्न शयनेऽथतदध्यशेत मुग्धा पुनःपुनरलीकनिमीलिताक्षी ॥

सहायकृतो यथा—

मुक्तानङ्गः कुसुमविशिखान्पञ्चतूणीकृताग्रान् मन्येमुग्धां प्रहरति
सखे पत्रिणावारुणेन । बाष्पोत्पीडः कथमपरथा स्थूलनेत्रप्रणाली
वक्त्रोद्भ्रान्तस्त्रिवलिविपिने सारणीसाम्यमेति ॥

विरहिणोः प्रियोदन्तपृच्छाप्रवृत्तिप्रश्नः स ऊर्जितः, दीनः, स्वस्थ, उन्मत्तः शङ्काशाग्निचित्रश्चेति।
तेषु—ऊर्जितो यथा—

केयूरीकृतकङ्कणावलिरसौ कर्णावतंसीकृत व्यालोलालकपक्षतिः
पथिपुरो बद्धाञ्जलिःपृच्छति । यावत्किंचिदुदंतमात्मकमितुस्तावत्स-
एवेत्यथ व्रीडावक्रित कण्ठनालमचलाकैःकैर्नभिन्नारसैः ॥

दीनो यथा—

मध्येमन्नसमुत्थिता तदनुच द्वारान्तरालंगता यात्रत्प्राङ्गणमागतः
कथमपिप्रियांस्तु नालोकितः । हंहोवायसराजहंसशुकहेहेशारिके
कथ्यतां कागतेतिमृगीदृशो विजयते बाष्पान्तरालंवचः ॥

स्वस्थो यथा—

भ्रातः पान्थपथित्वया नपथिकःकश्चित्समासादितो मुग्धेनैकशता-
निकीदृशइतिप्रख्याप्यतांवल्लभः । यंदृष्ट्वानभवन्तिकीदृशइति
प्रेक्षावतामुक्तयः सज्ञेयो दयितो ममेति पथिकायावेद्य मोहंगता ॥

उन्मत्तो यथा—

सर्वक्षितिभृतांनाथ दृष्टासर्वाङ्गसुन्दरी ।
रामा रम्येवनोद्देशे मयाविरहितात्वया ॥

शङ्किता यथा—

भद्रात्रग्रामकेत्वंवसस परिचयस्तेऽस्ति जानासिवार्तामस्मिन्नध्वन्ययोषि-
द्दुरुतरविरहात्क्वानकाचिद्विपन्ना । इत्थं पान्थः प्रवासावधिदिनविगमापाय-
शङ्कीप्रियायाः पृच्छन्वार्तां समीपस्थितनिजभवनोप्याकुलोनोपयाति ॥

विचित्रो यथा—

मधुकरमदिराक्ष्याः शंसतस्याःप्रवृत्तिं वरतनुरथवासौ नैवदृष्टिं गताते ।
यदिसुरभिमपास्यस्तन्मुखोच्छ्वासगन्धं तवरतिरभविष्यत्पुण्डरीकेकिमस्मिन् ॥

प्रियागमनदिनोद्वीक्षणमवधिप्रतीक्षा, सा दवीयस्यविदूरा नेदीयस्यपिप्राप्तातीताच । तासु-

दवीयसी यथा—

स्मर्तुं वियोगदिवसान् दयितस्य यांयां रेखांचकार मुदिताम्ररुचा नखेन ।
तांतामरालचलपक्ष्मशिखाव्यभिन्नैः मुक्ताफलद्युतिभिरश्रुभिरुन्ममार्ज ॥

अविदूरा यथा—

अवधिदिवसाः प्रायेणैतेप्रयान्ति कृतागसस्तनुरपि तनुस्थातुं
शक्तानकालकलामपि । ग्लपयति मनोमूर्च्छावेशैर्वियोग-
विषद्रुमस्तदलमधुना सख्यश्चिन्ता शनैरसुरक्षणे ॥

नेदीयसी यथा—

घरकज्जेण त्रिजो चल्लइजत्थघावइतहितहिं चेअ ।
घरणीए ओहिदि अहेपद्धाव असंकिअं हिअअं ॥

प्राप्ता यथा—

देइपुलोइ अपरि अणमोही दिअहंमिमज्जणुतिण्णा ।
सूरं जल्वं जल्वं पिवयहणि अक्कअजीअरस ॥

अतीता यथा—

वत्सेमाधवि मुग्धिकासिबलवद्भ्रोकसोदेवताः पान्तुत्वामथमस्त-
मद्यतिरविर्वीतोऽवधिस्ते पितुः । शान्तं पापममङ्गलं परमतःश्रव्या
नकल्याणिनी काव्यं नव्यमधुव्रताद्य नु मधून्युद्दिश्य नोदास्यसि ॥

दयितपथावलोकोमार्गोदीक्षणं यथाः—सः गृहात् गवाक्षतः अंगणतः अपघ्नदयकात् मार्गवृक्षत इति । तेषु गृहाद्यथा—

धारेहत्थकखत्ताइ आल्वणीलंतिगलि अवाहाइ ।
पिअदंसणूसु आओसुहाणवहिं आणजाआओ ॥

गवाक्षतो यथा—

अण्णपहि अंमिएते सोत्तिगयरखाओतं पुल्लोअंति ।
मुणिअवअणा गअवइं सहीओरु अरीरु आवेइ ॥

अङ्गणतो यथा—

आलंव्याङ्कणवापिकापरिसरेस्वेच्छानतांशखिका केयूरीभवदल्प-
शेषवलयाबालासमस्तंदिनम् । सादैवोपहतस्य मूढमनसो
भग्नावधेरद्यमे पन्थानंविधृताश्रुणावदनकेनालोक्यकिंवक्ष्यति ॥

अपघ्नदयकाद्यथा—

आदृष्टिप्रसरात्प्रियस्यपदवीमालोक्यनिर्विण्णया विश्रान्तेषु
पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति । दत्वैकं सशुचागृहं प्रतिपदं
पान्यस्त्रियास्मिन्क्षणे माभूदागतइत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ॥

मार्गवृत्तो यथा—

पिअवं धुणि अणतिर्हिगोरि अहे दिड्विपिहुल्ल घाइ ।
तणुगिरिणइसोच्चि चउपुउइमिणकुडुंइणावइ ॥
तरुसाही ओदुंवति अहेखग्गाहोंति घणुल्ला ।
तणुअपि आसहंपत्तु अहंपहेण ॥

प्रियागमप्रधानहेतवोदैवनिमित्त शकुनोपश्रुतयः, तेषुदैवो यथा—

येप . . . . पञ्चमकण्टकस्थाः सौम्यास्तृतीयरिपुलाभगताश्च पापाः ।
आयान्तितेपु भवनानि पुनः कृतार्थाः दत्तंद्विजातिषुपुरा विधिवद्यथार्थाः ॥

यथावा—

जातिमित्रेऽथवापष्ठे राहौ चन्द्रेचयाद्युतौ ।
प्रोषितागमनं विद्यात्तृतीयेज्ञेसितेपिवा ॥

निमित्तं यथा—

दत्तंपिण्डं नयनसलिलक्षालनाधौतगंडं द्वारोपान्ते
गतदयितया सङ्गमान्वेषणाय । वक्रग्रीवश्चलनतशिराः
पार्श्वसञ्चारिनेत्रः पाशाशङ्कीगलितवलयं नैनमश्नातिकाकः ॥

यथावा—

तैलाक्तानलकान्कपोलपतितान्सन्धायकर्णान्तरे वस्त्रान्तेन विलम्बिना
सरभसं प्रच्छाद्यपीनौस्तनौ । बालावायसमाह बहुशोदा-
स्यामितेयत्प्रियं चूतात्केसरपादपं व्रजशनैर्यथेतिमेवल्लभः ॥

शकुनो यथा—

गतोऽस्तंतिग्मांशुर्व्रजसहचरीनीडमधुना सुखंप्रातः
सुप्यास्सुजनसदृशं वायसकृतम् । मयिस्नेहाद्वाप्पस्थगित
जडदृष्टौसकरुणं रुदत्यांयोयातस्त्वयिसविलपत्येप्यतिकथम् ॥

यथा वा—

जाताभीमरथीतटद्रुमरजःकूलंकषानिम्नगा वान्त्युत्फुल्लकदम्ब
सौरभधरामेघङ्करावायवः । एतच्चाभिनभोनवाम्बुगुरुभिर्नीतं
घनैश्श्यामतामद्याप्येवविरौतिकिंसखिवृथावीतत्रपोवायसः ॥

पथश्रुतिर्यथा—

तरलयसिदृशंकिमुत्सुकामकलुषमानसवासलालिते ।
अवतरकलहंसिवापिकां पुनरपियास्यसि पङ्कजालयम् ॥

यथा वा—

करभकरभीपश्चान्मुक्तेत्यनाहृतसौष्टवः किमपिवलितग्रीवं
पश्यन्मुहुर्मुहुराकुलः । व्रजतियदपि स्तोकं गत्वा निवृत्यततो
ध्रुवं पुनरपिभवान्नूनं लप्स्यानयासह सङ्गमम् ॥

मानसप्रत्यक्षेणप्रियजनावलोकः, दुःस्वप्नदर्शनम्, सम्यगवभासो, मिथ्यावभासः, संक्षिप्ताकारो, विक्षिप्ताकारः पर्याप्तरूपोऽपर्याप्तरूपश्च, तेषु सम्यगवभासो यथा—

सुधाधाराकारा निशि निशि कुतश्चन्द्रकिरणाः कुतः कान्तानेत्रद्युति
कुवलयं वा प्रतिसरः । कुतः श्राव्यावाचः प्रतिवचनमच्छिद्ररचना
प्रतिस्वप्नंचेतो विरम कुत एवप्रियतमा ॥

मिथ्यावभासो यथा—

क्वेयं ज्योत्स्नाम्भो वदनबिसवल्लीसरणिभिः मृणालीतन्तुभ्यः
सिचयरचना कुत्र भवतु । क्वापारीमेयो वतवकुलदाम्नां
परिमलः कथंस्वप्नःसाक्षात्कुवलयदृशं कल्पयतुताम् ॥

संक्षिप्ताकारो यथा—

सदृष्टःस्वप्नेच प्रणयकुपितोमांप्रतिजन स्ततःक्षीणा रात्रिर्नच-
चरणयोरस्मिपतिता । कृतंकल्याणाना मनभिलषिता
सावधिवयः प्रसन्नंतद्वक्त्रं नकृतमिति चेतोदहतिमाम् ॥

विक्षिप्तरूपो यथा—

जानेकोपपराङ्मुखी प्रियतमास्वप्नेऽद्यदृष्टामया मामासंस्पृश
पाणिनेतिरुदतीगन्तुंप्रवृत्तातततः । नो यावत्परिरम्य चाटुकशतै-
राश्वासयामिक्षणं प्रातस्तावदहं शठेन विधिनानिद्रादरिद्रीकृतः ॥

पर्याप्तरूपो यथा—

अद्यापि तां स्मरनिकेत महापताकां लम्बालकां चिरवियोग-
कृशाङ्गयष्टिम् । स्वप्नेविलोलनयनां क्षणदृष्टनष्टां विद्यांप्रमाद
गलितामिव संस्मरामि ॥

अपर्याप्तरूपो यथा—

सिविण अखण मुत्तुट्ठि आए पुणरुत्तदंसणमणाए ।
वालाएणिमीलि अलो अणाए दिवसोवि वोलीणो ॥

प्रवासिनः शुभसूचकचक्षुरादिस्फुरणं शुभनिमित्तानुभवः तन्मनोरथोपगमे दयितोपगमेच ।
तत्रमनोरथोपगमो यथा—

फुरीअंवामच्छितुए जइएहिइइमहपिओति तासुइरं ।
मीलिअदाहिणण अणंतुइ एनिइहलंपुलोइस्सं ॥
जेणठिअविअलि अघवलवल अपडिरुहणेक्करसिआहिं ।
वाहाहिं कहणुतुएचि मामिपहिअपुरंतीहिं ॥

दूतोपगमो यथा—

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं प्रत्यादेशादपि च
मधुनो विस्मृतभ्रूविलासम् । त्वय्यासन्ने नयनमुपरिस्पन्दि-
शङ्केमृगाक्ष्या मीनक्षोभ्कुलकुवलयश्री तुलामेष्यतीति ॥

यथवा—

वामश्चास्याः कररुहपदैर्मुच्यमानोमदीयैः क्रीडायोगंचिरपरिचितं
त्याजितोदैवगत्या । सम्भोगान्ते ममसमुचितो हस्तसंवाहनानां
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वं ॥

दयितोपगमे यथा—

अज्जमइ इमं सहिदाहिणापरप्पिअअमागमणदूअं ।
अवणिसखे अंबद्धावि आसि पुप्पंदए अहिं ॥

यथावा—

वामेनैवविलोचनेन भवती दिष्ट्या चिरं वर्धिता प्रायःप्राप्स्यसि
पारितोषिकमिमं धृष्टोजनोमादृशः । अस्मिन्प्राङ्गण पीलुकुञ्ज-
विटपेकृत्वापदं दृश्यतां चञ्चत्केसरकन्धरेणकरभेणायंवनेवल्लभः ॥

प्रवासतोगृहागमनं, प्रियप्रत्यागमः, स उदात्तादिनायिकानिमित्तभेदाद्बहुधा-तेपूदात्तादि-
निमित्तो यथा—

आयातेदयिते मरुस्थलभुवां संचिन्त्यदुर्लङ्घयतां गेहिन्या
परितोषवाप्पतरलामासज्यदृष्टिंमुखे । दत्वापीलुशमीकरीरकवलं
चेलाञ्चलेनादरात उन्मृष्टं करभस्यकेसरसटाभाराग्रलग्नंरजः ॥

उद्धतानिमित्तो यथा—

यद्दत्वालवणाञ्जलिंस्वयमसावुच्छूनताम्रेक्षणा त्वामभ्युद्गतबाप्प-
मर्पितवती भूयोऽपिमत्संगमः । तत्किं निर्घृणविस्मृतंकरभहे
येनाद्यपूर्णेऽवधौ तस्याःक्रीडसि जीवितेन विजहद्गङ्गोपकण्ठेजलम् ॥

ललितानिमित्तो यथा—

दृष्टिर्वन्दनमालिकास्तनयुगंलावण्यपूर्णौघटौ शुभ्राणांप्रकरः
स्मितं सुमनसां दन्तप्रभादर्पणः । रोमाञ्चोद्गम एव सर्षपकणाः
पाणीतथापल्लवौ स्वाङ्गैरेव गृहं प्रियस्य विशतस्तन्व्याकृतंमङ्गलम् ॥

शान्तनिमित्तो यथा—

गर्जत्युन्नत एप नीलजलदःक्रूरःकदंबानिलो मार्गा . . . .
विनोवनानिहरितस्निग्धानिपूर्णोऽवधिः । आयत्तंतवजीवितं करभहे
खिन्नोऽपिगच्छद्रुतं कान्तायद्यपितेनकुप्यतितथाप्यस्त्येवमेसङ्गमः ॥

धीरानिमित्तो यथा—

मंगलवलअं जीअं थरक्खिअं जंपउत्थएइआए।
सहसत्तिदंसणूससि अबाहलउ्आएतं भिण्णं ॥

अधीरानिमित्तो यथा—

आसीद्यस्यमुहुर्मुहुर्विगलितो बाष्पैःसमंदुर्धरैः दौर्बल्याद्वलयस्य हाटकभुवःपर्याकुलाधारणा। दिष्ट्या वृद्धिकरायदातुमधुना- तस्यैवचार्पणे नान्यानाह्वयते पुनःपुनरसौनागच्छति प्रेयसि ॥

मुग्धानिमित्तो यथा—

पुलिइअमणुञ्जुअच्छं सेओअंगेसुपहरिसोहिअए।
मुद्दाएविजाअंणव वहुएजामाउएआए ॥

मध्यानिमित्तो यथा—

अत्यक्कागअदिट्ठे वहुआजामाउअम्मिगुरुपुरओ।
जूरइणिविडंताणं हरिसविसंठाणवळआणं ॥

प्रगल्भानिमित्तो यथा—

अवरण्हागअजामाउअस्स विउणेइमोणुक्कंठं।
वहुआएघरपरोहड मज्जणमुहळोवळअसद्दे ॥

उत्तमानिमित्तो यथा—

पुळउव्वेउपसाहइ दरकुंमाणघणपहरिसबाहुविहूसइ
णिक्कज्जळणअणअरसुजत्रोहघिरो। हइ खामकगलेमुहे-
मुद्दहेकाइण्ण मंदणु दइआगमणसुहे ॥

मध्यमानिमित्तो यथा—

पिएसहसत्तिपहत्तितहेविहविअवळअ पुळउत्तंभिअगत्तहेसोहहिमहिहिंगळ।
तरुखणमुक्कहोसोअहोणंवेषणकउअणाइपणट्ठहोविरहहोतरळतुरंगअए ॥

कनिष्ठानिमित्तो यथा—

वाहजलोल्लिअलोअणपणइण उघुसिअणविदहिअवक्खओ ।
लइणंवेदणमाणकिअहरिसारंभ विअंहिअपुलइकंपहरा ॥
पेक्खेवि किंतुपहत्तउलग्गेकठेपर ॥

उक्तासमातिरकन्धेसा उदाहरणपद्धतिः ।
दिशानयानुसर्तव्यमनुक्तमपिसूरिभिः ॥
सैवप्रवासशङ्कादिचतुर्विंशतिकन्दलः ।
स्मृतोऽनङ्गविहङ्गस्यप्रवासोवसतिद्रुमः ॥
समासव्यासाभ्यां कुसुमधनुषोजीवितामिति
प्रवासोनिर्णीतःप्रियजनमनोहेमनिकषः ।
अथ प्रेमोद्यानप्रणयतरु विस्रम्भसुमनो
निवासैकस्थानीसुरभिरभिधीयेतकरणः ॥

इति श्रीमहाराजाधिराज श्रीभोजदेव विरचिते शृङ्गारप्रकाशे
प्रवासोपवर्णनो नाम एकत्रिंशः प्रकाशः समाप्तः ॥



॥ श्रीः ॥

# महाराजाधिराज श्रीभोजदेवविरचिते

# शृङ्गारप्रकाशे

## ॥ द्वात्रिंशः प्रकाशः ॥



अथातः क्रमप्राप्तं करुणविप्रलम्भमुपदेक्ष्यामः । तस्य च प्रथमानुरागादिभ्यो रागवर्धनत्वादन्तेऽभिधानमित्यभिहितं पुरस्तात्, भूयश्च विशेषतोऽभिधीयते । विभावानुभावव्यभिचारिसंयोगात्प्रकर्षमापद्यमानः प्रधानभावो रतिर्नाम कामशृङ्गाराख्यां लभते । स तु नित्यनैमित्तिकादिभेदादष्टधोच्यते । तत्र रागवर्धनत्वापेक्षायां नित्यान्नैमित्तिकः, सामान्याद्विशेषः, प्रकाशात्प्रच्छन्नः, कृत्रिमादकृत्रिमो बलीयान्, भूयोऽपि नैमित्तिकाद्वैशेषिकौ, वैशेषिकात्प्रच्छन्नः, प्रच्छन्नादकृत्रिम इति सर्वतोऽप्यकृत्रिम एवोत्कृष्यते । स चाहार्यो, यौवनजः, सहजो, विस्रम्भजश्चेति चतुर्धा । तत्राहार्याद्यौवनजो, यौवनजात्सहजः, सहजाद्विस्रम्भजो बलीयान् । कामशृङ्गारश्च द्वेधा । सम्भोगो विप्रलम्भश्च । तत्राभिलषणीयानामवाप्तौ सम्भोगः । विपर्यये विप्रलम्भः, सम्भोगश्च विप्रलम्भमन्तरेण न प्रकर्षमधिरोहतीति विप्रलम्भस्य सम्भोगात्प्रथममभिधानम् । विप्रलम्भोऽपि कामशृङ्गारस्य भणितम् । स प्रथमानुरागेऽङ्कुरितो, माने पल्लवितः, प्रवासे कुसुमितः, करुणे फलितः, प्रथमानुरागानन्तरादिषु प्रकर्षमापन्नः सम्यगुपयोग्यो भवति । पदात्पदं च प्रतिपद्यमानो विशेषतः स्वदते ।

> यथादुग्धाद्दधिस्वादु यथादध्नोऽम्लपाडवः ।
>
> यथाम्लपाडवात्स्वादुरामिक्षैव रसोदयः ॥

ते च प्रथमानुरागादयो विप्रलम्भास्तदनन्तरास्तु सम्भोगाः । अनुरागस्तु न तथा इङ्गिताकारादिभिः प्रथमानुरागेणेर्ष्यायितमन्यायितादिभिर्मानेनोत्कण्ठावेशकार्श्यादिभिः प्रवासे यथाव्यसनाभिघातसम्मीलनादिभिरनुभावैः करुणविप्रलम्भे प्रकर्षमापन्नो निष्प्रकम्पतां प्राप्नोति ।' अतः प्रथमानु-

रागादीनां विप्रलम्भभेदानां त्रयाणामप्यनन्तरं रागवर्धनतमः करुणविप्रलम्भोऽभिधीयते इति । कः पुनरयं करुणो नाम । यत्रास्मिन्मिथ्याभिनिवेश इव गुर्वायासकारकेऽपि मूर्खाणां, सर्वाङ्गपरित्याग इवालौकिकेऽपि प्रज्ञाविदां, रजःकर्दमक्रीडाविनोद इव वेपथूपकेऽपि पौरपौगण्डानां, महाहवमहाविहार इव बीभत्सभीषणेऽपि शूरसाहसिकानां, प्रियसुहृन्नर्मनिर्भर्त्सन इवातिग्राम्येऽपि परिहासिकानां, कुपितकामिनीपार्ष्णिप्रहार इव सुकुमारेऽपि रागिणां, तिमिराभिसारिकावेष इव मलीमसेऽपि चौर्यरतरुचीनां, विलासिनीकिलिकिञ्चितप्रपञ्च इव दीनप्रदर्शनेऽपि नागरिकाणां, मतीवानुरज्यते । मनः प्रेमसामयिकानामुच्यते, प्ररूढस्नेहयोरन्यतरविनाशे अन्यस्य दुःखाभिनिवेशो हृदयदारुणः, स कथं शोकाद्भिद्यत इति चेत् हेतुफलविषयस्वरूपभेदात्, तथाहि रत्येकहेतुः करुणः । प्रीतिदयाद्यनेकहेतुः शोकः । पुनरसङ्गमफलः करुणः, अपुनस्सङ्गमफलः शोकः । स्त्रीपुंसविषयः करुणः, नस्त्रीपुंसविषयः शोकः । सप्रत्याशरूपः करुणः, निष्प्रत्याशस्वरूपः शोक इत्यन्य एव शोकान्नयश्च करुण इति, सतायेण दैवाश्रयः, पौरुषाश्रयः, देशाश्रयः, कालाश्रयः, स्वरूपाश्रयः, परिमाणाश्रयः, प्रमाणाश्रयः, अनुरागाश्रयः, सम्भोगाश्रयः, विप्रलम्भाश्रयः, नायकाश्रयो नायिकाश्रय इति द्वादशधा । तेषु दैवाश्रयः स्त्रीनिमित्तः, पुरुषनिमित्तः, सहायनिमित्तः, गुरुनिमित्त इति । पौरुषाश्रयः पुरुषकृतः स्त्रीविषये स्त्रीकृतः पुरुषविषये पुरुषकृतः पुरुषविषये स्त्रीकृत स्त्रीविषय इति । देशाश्रयो दिव्योमानुषो नदिव्योऽमानुष इति । कालाश्रयः इहजन्मसङ्गमः, अन्यजन्मसङ्गमः, इहान्यजन्मसङ्गमः, उभयजन्मसङ्गम इति । स्वरूपाश्रयो विचिन्तितः, आकस्मिकः, पारमार्थिकोऽपारमार्थिक इति । परिमाणाश्रयो महानणुर्दीर्घो ह्रस्व इति । प्रमाणाश्रयः दृष्टः श्रुतोऽनुमितः शङ्कित इति । अनुरागाश्रयः श्रेयान्मध्यमोऽवरः प्रवर इति । सम्भोगाश्रयः प्रथमानुरागानन्तर्यो, मानानन्तर्यः, प्रवासानन्तर्यः, करुणानन्तर्य इति । विप्रलम्भाश्रयः प्रथमानुरागजो मानजः प्रवासजः करुणज इति । नायकाश्रयो गुणकृतः प्रकृतिकृतः प्रवृत्तिकृतः, परिग्रहकृत इति । नायिकाश्रयो गुणकृतः वयस्कृतश्चेष्टाकृतो धैर्यकृत इति । तेषु दैवाश्रयः स्त्रीनिमित्तः पुरुषे यथा—

अयि पापे महाश्वेते नतुष्टास्यक्षमालया ।
हतामे सुहृदोऽमुष्य प्राणवृत्तिरपित्वया ॥

पुरुषनिमित्तः स्त्रियां यथा—

विचिन्वती मामियमद्रिकुक्षौ विकुक्षिनाम्ना भुजगेन दष्टा ।
गतासुरास्ते मृगशावनेत्रा मृगावती हा विधिना हतोऽस्मि ॥

सहायनिमित्तः पुरुषे यथा—

इति श्रुत्वा भिन्नः प्रसभमिव शूलाग्रशिखया कदात्वांपश्येयं
कमलमुखि कादम्बरि पुनः। वदन्नेवं शोकस्फुटितहृदयः
तत्क्षणमसून् जहत् चन्द्रापीडस्तरुरिव पपात क्षितितले ॥

गुणनिमित्तः स्त्रियां यथा—

एषा प्रयासं कथमप्यतीत्य याता पुनः संशयमन्यथैव ।
कोनाम पाकाभिमुखस्य जन्तोः द्वाराणि दैवस्य पिधातुमीष्टे ॥

पौरुषाश्रयः पुरुषकृतः स्त्रीविषयो यथा—

सा वक्षःपरिवर्तनैकललिता विश्वासभूमिं प्रिया बालानिष्करुणेन
मुग्धतपसा दग्धा वराकी मया। भर्तुर्भक्तिरपेक्षिता ननु पुनः
स्त्रीदाहदोषो महान् जातं सच्चरितैषिणो बत मम म्लेच्छस्य यन्नोचितम् ॥

स्त्रीकृतः पुरुषविषये यथा—

शापेन तेन महता मदनाग्निना वा जन्मान्तरोपचितदुष्कृतकर्मणा वा ।
चित्रेण वा भगवतश्चरितेन धातुः प्राणानसावुदसृजन्निपपातचोर्व्याम् ॥

पुरुषकृतः पुरुषविषये यथा—

आत्मीयः पर इत्ययं खलुकृतः सत्यं ननामकमः किं रक्षामि
बहून्किमेकमितिवा चिन्तानजाताकथम्। अक्ष्युन्नातुं स्वजी-
वितपरित्यागं त्वया कुर्वता यच्चात्मा पितरो वधूरिति हतं निश्शेषमेतत्कुलम् ॥

स्त्रीकृतः स्त्रीविषये यथा—

यदैव पूर्वे जनने शरीरं सा दक्षदोषात्सुदती ससर्ज ।
तदाप्रभृत्येव विमुक्तसङ्गः पतिःपशूनामपरिग्रहोऽभूत् ॥

देवाश्रयभेदेषु दिव्यो यथा—

विबुधैरपि यस्य दारुणैरसमाप्ते परिकर्मणि स्मृतः ।
तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेवमे ॥

मानुषो यथा—

रिपुर्यातु परां वृद्धिं धिग्राज्यमनयोऽस्तु नः ।
दैवमेवंविधं दृष्ट्वा दाने प्रत्यर्पयामि ताम् ॥

दिव्यमानुषो यथा—

क्रथकैशिकवंशसम्भवा तव भूता महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥

अदिव्यामानुषो यथा—

आलोइएविसण्णा उअणिज्जंतऽमिवेविउं आढत्ता ।
सीआरअणिअरेहिंरामसीरंति भणिएगअ०चिअमोहं ॥

(सेतुबन्धे ११-५३)

कालाध्ययप्रभेदेषु इहजन्मसङ्गमो यथा—

स्वप्नः स्यात्किमयं न जातुजगतिस्वप्नो भवेज्जाग्रतः किंकेनापिहि
वञ्चितोऽसिदयिताला‌भः कुतो वञ्चना । किंनाहं शुकनन्दनः
कथमसावन्यं समाभापति केनायं रचितो विधिः मुकृतिना सिद्धेनते कर्मणा ॥

अन्यजन्मसङ्गो यथा—

माशोचस्त्वशुचिस्मितेकृतजपा तप्यस्व तीव्रं तपो भूत्वावेदवती
भविष्यसि ततस्सीतेति नाम्ना भुवि । कान्तस्ते हरिरेष वामनतनुं
कृत्वा सहस्रार्जुनं जित्वा दाशरथित्वमेत्य भवतीं भूयः समुद्वक्ष्यति ॥

इहान्यजन्मसङ्गमो यथा—

तदिदं परिरक्ष शोभने भवितव्यप्रियसङ्गमं वपुः ।
रविपीतजलातपात्यये पुनरोघेन हि युज्यते नदी ॥

मेलसङ्गमो यथा—

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोः देहत्यागादमर-
गणनालेख्यमासाद्य सद्यः । पूर्वाकाराधिकतररुचा सङ्गतः
कान्तयासौ लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥

स्वरूपाश्रयभेदेषु विचिन्तितो यथा—

ममहि कुवलयाक्षीप्रत्यनिष्टैकबुद्धेः अविरतमनुबद्धोत्कम्प-
एवान्तरात्मा। स्फुरति च खलु चक्षुर्वाममेतच्च कष्टं
वचनमिह भवत्योः सर्वथा हा हतोऽस्मि॥

आकस्मिको यथा—

अथ व्यवस्थापितवाक्कथंचित् सौमित्रिरन्तर्गतबाष्पकण्ठः।
औत्पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार॥

पारमार्थिको यथा—

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत्।
ननुतैलनिषेकबिन्दुनासहदीपार्चिरुपैति मेदिनीम्॥

अपारमार्थिको यथा—

प्रत्याख्यानरुषाकृतं समुचितं क्रूरेणते रक्षसा सोढं तच्च तथा
त्वयाकुलवधूर्धृचे ययोच्चैः शिरः। व्यर्थं सम्प्रतिविभ्रता धनुरिदं
त्वद्व्यापदः साक्षिणा रामेण प्रियजीवितेनतुकृतं प्रेम्णःप्रियेणोचितम्॥

परिणामाश्रयभेदेषु महान्यथा—

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते वहति विकलः
कायोमोहं नमुञ्चति चेतना। ज्वलयति तनूमन्तर्दाहः
करोति नभस्मसात् प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्॥

अणुर्यथा—

विस्रम्भान्नविसर्पितंमयिमनो निर्यन्त्रणं मन्त्रितुं व्यावृत्तापि निवर्तिता
नशयने वाष्पं त्यजन्तीशनैः। मामुद्दिश्य तथानया व्यवसितं
तन्नोपरुद्धं मुधा कष्टं केवलमेव राजतनया दग्धा वराकी शुचा॥

दीर्घो यथा—

सर्वत्र ज्वलितेषु वेश्मसु भयादालीजने विद्रुते व्यासोत्कम्पविहस्तया
प्रतिपदं देव्यापतन्त्यातदा । हानाथेति मुहुःप्रलापपरया दग्धं
वराक्यातया शान्तेनापि वयं नु तेन दहनेनाद्यापि दह्यामहे ॥

ह्रस्वो यथा—

असमाप्तप्रतिज्ञेऽस्तंगते त्वयिमहाभुजे ।
मुक्तकेश्यैव दत्तस्ते प्रिययायंजलाञ्जलिः ॥

प्रमाणाश्रयभेदेषु दृष्टो यथा—

हाहाकथं कुमुद नीलनलाङ्गदादियूथाधिपैरतिजवादनुबध्यमानः ।
असन्मनोरथभुवंसहसैवदेवींव्यापाद्यराक्षसपतिर्नगरींप्रविष्टः ॥

श्रुतो यथा—

श्रुत्वैष विधृतबाष्पः तथास्थितोयेनवर्धिताक्रन्दैः ।
हृदयस्फुटनभयात्तैरोदितुमभ्यर्थ्यते सचिवैः ।

अनुमितो यथा—

भ्रमति हृदयं चिन्तायत्तं धनुर्गुरुतां गतं न खलुविषयं जाने
चेतस्तथापि समाकुलम् । अयमपि मुहुर्बाष्पोत्पीडो रुणद्धि
विलोचने स्फुरति च यथावामंचक्षुस्तथैष शठोविधिः ॥

शङ्कितो यथा—

किमपि किमपिशङ्के मङ्गलेभ्योयदन्यद्विरमतिपरिहासश्चण्डिपर्युत्सुकोऽसि ।
कलयसि कलितोऽहं वल्लभे देहिवाचं भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥

अनुरागाश्रयप्रभेदेषु धैर्याश्रिया । नित्योऽहत्रिमो विप्रम्भश्चेति । तेषु नित्यो यथा—

अंतो हु॰तंद॰झइजाआसुण्णेघरेहलिअउ॰तो ।
जोखिचणिहाणा इवरमिअ॰ठाणाइपे॰छंतो ॥

अन्तरतिमुखंदह्यते जायाशून्येगृहे हलिकपुत्रः । उत्खातनिधानानीव रमितस्थानानि पश्यन् ॥

अकृत्रिमो यथा—

धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥

विस्रम्भजो यथा—

कृतावानानन्दो निरतिशयविस्रम्भबहुलः कृतेऽन्योन्यं यत्र
क्व चनगहनाः कौतुकरसाः । सुखे वा दुःखे वा क्व नु खलु
तदैक्यं हृदययोस्तथाप्येष प्राणः स्फुरति न तु पापो विरमति ॥

तथा मध्यमोऽपि सहजः प्रच्छन्नो वैशेषिकश्चेति त्रिधैव । तेषु सहजो यथा—

मुखज्योत्स्नालोकप्रसरधवलाक्षं क्व नु मया पुनर्दृश्यन्तेस्मित-
मधुरमल्पाल्पवचनम् । क्व सा श्रव्यावाणी विजितकलहंसी-
कलरवा विलासाः पश्यन्त्याः क्व च सहभुवो धीरललिताः ॥

प्रच्छन्नो यथा—

दठ्ठूणचिरं रोत्तूणणिब्भरं धारिऊणहिअअम्मि ।
बंधइकंठे अडणं ठिकंठिकं ओमहप्पइणी ॥

वैशेषिको यथा—

विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम् ।
अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥

एवमधमोऽपि त्रिधा, नैमित्तकः सामान्यो यौवनजश्च । तत्र नैमित्तिको यथा—

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः ।
उत्पीड इव धूमस्य मोहः प्रागावृणोतिमाम् ॥

सामान्यो यथा—

समसोक्खदुक्खसंवड्ढियाणकालेणरूढपणआण ।
मिहुणाणमरइजंतं खुजिअइइअरं मअंहोइ ॥

समसौख्यदुःखपरिवर्धितयोः कालेनरूढप्रेम्णोः । मिथुनयोर्म्रियते यत्तत्खलु जीवति इतरन्मृतम् ॥

यौवनजो यथा—

अणुदिअहं वड्ढंतेखुक्खुरडेव्वदुक्खमुव्वहइ ।
कुलवहुआविद्दत्तणणिप्पइगणगोरवेथणए ॥

प्रत्ययरोऽपि त्रिधैव । प्रकाश आहार्यः कृत्रिमश्चेति । तेषु प्रकाशो यथा—

अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तयापुनः ।
ददृशे पुरुषाकृतिः क्षितौ हरकोपानलभस्म केवलम् ॥

आहार्यो यथा—

किं देव्याश्चपि चुम्बितोऽस्मि बहुशोमिथ्याप्रसुप्तस्तया कोपे सत्यपि किं
निरीक्ष्यहसितानोमन्मुखं भामिनी । विस्रम्भात्कलिता लतेव हृदये
किंवा चिरं नस्मि . . कान्तिर्यास्यविनापि वाच्यमसवो यत्र प्रयाताः स्वयम् ॥

कृत्रिमो यथा—

तहअइअणाएरुण्णं पइमरणे वाहरुद्धकंठीए ।
अणुमरणसंकिणोजह जारस्स विसंकिअं हिअअं ॥

सम्भोगविप्रलम्भाश्रयभेदेषु प्रथमानुरागानन्तर्यादयोऽष्टावपि प्रत्येकं त्रिधा, तज्जातास्तदुल्लेखिनस्तदन्तरङ्गाश्च, तत्र सम्भोगाश्रयेषु प्रथमानुरागानन्तरङ्गो यथा—

नैराश्यकातरधियो हरिणेक्षणायाः श्रुत्वा निकामकरुणं च मनोहरं च ।
मात्सर्यमोहपरिदेवितमुद्वहामि चिन्ताविषादविपदं च महोत्सवं च ॥

मानानन्तरीयेषु मानानन्तरजो यथा—

जानेकोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टामया-मामा संस्पृश
पाणिनेति रुदती गन्तुं प्रवृत्ता ततः । नो यावत्परिरभ्य चाटुक-
शतैराश्वासयामिक्षणं भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥

तदुल्लेखी यथा—

कृतवत्यसि नावधीरणामपराद्धेपि यथा चिरंमयि ।
कथमेकपदे निरागसं जनमाभाष्यमयुं न मन्यसे ॥

तदन्तरङ्गो यथा—

तटस्थंनैराश्यादपिचकलुषंविप्रियवशाद्वियोगे दीर्घेऽस्मिन्
झटिति घटनास्तम्भितमिव । प्रसन्नं सौजन्यादपि च
करुणैर्गाढकरुणं द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षणइव ॥

प्रवासानन्तरेषु तज्जातो यथा—

धौतोऽमलः श्लाघ्यतरैः सहायैः पराभवः शत्रुकृतो भवद्भिः ।
यत्साम्प्रतं सम्प्रति राघवानां त्यागेन देव्यास्तदहं करोमि ॥

तदुल्लेखी यथा—

विरहरचितां गाढां वेणीं तवोद्ग्रथयञ्छनैः विरहगुणितास्तास्ताः
कुर्वन्कथाः समयोचिताः । . . . . . . त्वामाश्लिष्यत्यजेयमहं
शुचं यदिति गुणितं तन्मेधात्रा शठेन नसह्यते ॥

तदन्तरङ्गो यथा—

तत्कालप्रियजनविप्रयोगजन्मा तीव्रोऽपि प्रतिकृतिवाञ्छयाविसोढः ।
दुःखाग्निर्मनसि मुहुर्निवर्तमानो हृन्मर्मग्रहमिववेदनां करोति ॥

करुणानन्तर्येषुतज्जातो यथा—

हाहाधिक्परगृहवासदूषणं यद्वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
सातत्तत्पुनरपि दैवदुर्विपाकादालर्कं विषमिव सर्वतः प्रसृतम् ॥

तदुल्लेखी यथा—

मयिविगमितप्रत्याशत्वाद्विवाहविधेःपुरो विकलकरणैर्मर्मच्छे-
दव्यथाविधुरैरिव । स्मरसि रुदितैः स्नेहाकूतं तयाव्यतनो-
दसावहमपि यथाभूवं पीडातरङ्गितसम्मदः ॥

तदन्तरङ्गो यथा—

येनात्मम्भरिणानिरस्यकरुणामुत्सृज्यलज्जामपि प्रश्वासोपचयाहि-
नाधिकधृतिस्स्नेहोऽपिनापेक्षितः । सोऽहं सुभ्रु विलोकयामि वदने
ब्रूयांप्रसीदेतिवा चण्डालस्तव चण्डि दारुणतरं तत्कर्मकृत्वा कथम् ॥

विप्रलम्भाश्रयप्रभेदेषु प्रथमानुरागजो यथा—

न्यस्तालक्तकरक्तमाल्यवसना पाषण्डिचण्डालयोः पापारम्भवतोर्मृगीव
वृकयोर्भीरुर्गता गोचरम्। सेयं भूरिवसो र्वसोखिसुता मृत्योर्मुखेवर्तते
ह्याधिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः ॥

प्रथमानुरागोल्लेखी यथा—

सरसकुसुमक्षामैरङ्गैरनङ्गमहाज्वर श्चिरमविरतोन्माथीसोढः
प्रतिक्षणदारुणः। तृणमिवततःप्राणान्मोक्तुं मनोविधृतं
त्वया किमपरमतो निर्व्यूढं यत्करार्पणसाहसम् ॥

प्रथमानुरागान्तरजो यथा—

नादस्तावद्विकलकुररीकूजितस्निग्धतारः चित्ताकर्षी परिचित
इव श्रोत्रसंवादमेति। अन्तर्भिन्नं भ्रमतिहृदयं विह्वलत्यङ्गमङ्गं
स्नेहस्तम्भः स्खलयतिगतिं कः प्रकारःकिमेतत् ॥

मानजो यथा—

सदृष्टः स्वप्नेऽद्य प्रणयकुपितो मांप्रतिजनः ततः क्षीणारात्रिर्ननु
चरणयोरस्मिपतिता। कृतं कल्याणनामनभिलषिता एवहि
वयं प्रसन्नं तद्वक्त्रं न कृतमिति चेतोदहतिमाम् ॥

मानोल्लेखी यथा—

स्मरसि स्मरमेखलागुणैः उतगोत्रस्खलितेषु बन्धनम्।
च्युतकेसरधूसरेक्षणाघवतंसोत्पलताडनानिवा ॥

मानान्तरजो यथा—

मूर्च्छान्धकारपटलावृतदिग्विभागा राहूपरागमलिनेवशशाङ्कलेखा।
गर्भालसा चतुरगेहगुणोद्गृणन्ती पाशं निधायगलके मरणोन्मुखाभूत् ॥

प्रवासजो यथा—

चिरमनुचितस्थाने स्थित्वा मदीक्षणवाञ्छया किमिव दयिते
तत्स्याद्दुःखंनयद्दिदितंतया । कतिपयदिनं व्याप्यं सम्प्रत्यपास्य
वृथैव मां कठिनहृदये किंत्वं याता कएष तवक्रमः ॥

प्रवासोल्लेखी यथा—

उपायानांभावादविरतविनोदव्यतिकरैः विमर्दैर्वीराणां
जनितजगदत्यद्भुतरसः । वियोगो मुग्धाक्ष्याः स खलु
रिपुघातावधिरभूत् कथंतूष्णींसह्योनिरवधिरयं तु प्रविलयः ॥

प्रवासान्तरङ्गो यथा—

प्रिये हाहा क्वापि प्रकिर मधुरां वाचमधुना पराभूतैरित्थं
विलपनविनोदोऽप्यसुलभः । अनिन्द्यः पौलस्त्यो व्रजतु
परिवादो मयिजरां यतो रूढेवैरे बहुगुणमनेन प्रतिकृतः ॥

करुणजो यथा—

द्वितीयेप्यहमेवास्य जाताजन्मनिमृत्यवे ।
शप्तोमदनुरक्तोऽसौमयेतिविललापसा ॥

करुणोल्लेखी यथा—

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता ततस्तिष्ठेत्युच्चैर्वदति
गुरुशिष्ये गुरुसमे । पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यंदहति माम् ॥

करुणान्तरङ्गो यथा—

हाहादेवि स्फुटति हृदयं स्रंसते देहबन्धः शून्यंमन्ये
जगदविरतज्वालमन्तर्ज्वलामि । सीदन्नन्धेतमसि विधुरो
मज्जतीवान्तरात्मा विश्वं मोहः स्थगयतिकथंमन्दभाग्यःकरोमि ॥

नायकाश्रयप्रभेदेषु गुणत्रिधा, उत्तमाश्रयो मध्यमाश्रयः कनिष्ठाश्रयश्च। तत्रोत्तमाश्रयो यथा—

अन्तराविर्भवन्मृत्युर्निरोधविधुरात्मना।
कष्टं प्रसह्यरामेण बाष्पमोक्षो निगृह्यते॥

मध्यमाश्रयो यथा—

प्रमदामनुसंस्थितःशुचानृपतिःसन्निति वाच्यदर्शनात्।
नचकारशरीरमग्निसात्सहदेव्या नतुजीविताशया॥

कनिष्ठाश्रयो यथा—

सततदयितविप्रयोगताशात वरमिहकालकलैववह्निनाभः।
उपशममुपनेतुमात्मपीडां दहनमहं प्रविशामि न प्रियार्थम्॥

प्रकृतिकृतोऽपि त्रिधैव सात्त्विको राजस तामस इति। तेषु सात्त्विको यथा—

दह्यमानेन मनसा दैवाद्दत्तां विहाय सः।
लोकोत्तरेण धैर्येण प्रजापुण्यैश्च जीवति॥

राजसो यथा—

विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति।
अकरोत्पृथिवीरुहानपि स्रुतशाखारसबाष्पदूषितान्॥

तामसो यथा—

तां लोकोऽयं वाञ्छितार्थप्रसिध्यै नित्यं द्रव्यैः पूतहव्यैर्धिनोति।
तन्मे प्रीतः पूतहव्येन वह्ने कुर्यात्कान्तासङ्गमं यत्रतत्र॥

प्रवृत्तिकृतश्चतुर्धा धीरोदात्ताश्रयादिभेदात्, तेषु धीरोदात्ताश्रयो यथा—

अनिर्भिन्नोगभीरत्वादन्तर्गूढगुरुव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः॥

धीरोद्धताश्रयो यथा—

पितावामातावाप्रभवति न तावत्प्रसुरपि व्यपेक्षा यावत्स्युर्दयिषु
यदिवा भोगवसुषु। सहैसश्चक्रेदनतृपुगतायामुपशमः
पुमानेकः कृत्स्नं जगदिदमसमस्तंव्यचरति॥

धीरललिताश्रयो यथा—

विललाप सबाष्पगद्गदः सहजामप्यपहाय धीरताम् ।
अमिततप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥

धीरप्रशान्ताश्रयो यथा—

उग्रा क्रिया नो सहसैव कार्या दृष्टं फलं तत्परिवेष्टितस्य ।
प्रियामटव्यांहि नलः प्रसुप्तां विहाय जीवन्पुनराप साध्वीम् ॥

परिग्रहकृतो द्विधा साधारणाश्रयोऽसाधारणाश्रयश्च । तयोः साधारणाश्रयो यथा—

कामं दुष्करमेतदेवयदहं त्यक्तस्त्वया जीवितः तन्नामास्त्वनुरोधतः
प्रणयिनां कोवा स्वतन्त्रो भवेत् । यत्तत्प्रस्तुतमन्यदेव किमपि
स्नेहस्य यन्नोचितं त्वत्प्राप्त्यै कृतमेतदित्यपि कथं प्रत्येन्यसित्वं प्रिये ॥

असाधारणाश्रयो यथा—

वियोगे प्रत्याशा घटयति मुदं सङ्गमकृता प्रसादाः
सन्नद्योरतिकलहकोपोऽपि भवति । व्यसुन्वन्तन्वङ्ग्या निरवधि-
नवोपायविषयः तदाश्वासे हेतुर्भवति मम मृत्युर्यदि परम् ॥

नायिकाश्रयेष्वपि गुणकृतस्त्रिधा उत्तमादिभेदात् , तत्रोत्तमाश्रयो यथा—

परिपाण्डुपांसुलकपोलसुन्दरं दधती विलोलकवरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी ॥

मध्यमाश्रयो यथा—

पत्रलेखापि तद्रूपचन्द्रापीडविलोकिनी ।
मुमुचे संज्ञया सद्यः प्रपतन्ती शिलातले ॥

कनिष्ठाश्रयो यथा—

अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललापविकीर्णमूर्धजा समदुःखामिव कुर्वतीस्थलीम् ॥

धयस्कृतापि त्रिधैव । मुग्धादिभेदात्, तेषुमुग्धाश्रयो यथा—

इयमवयवैः पाण्डुक्षामैरलङ्कृतमण्डना कलितकुसुमा
बालेवान्तर्लतापरिशोषिणी । वहति च वरारोहा रम्यां विवाह
महोत्सवश्रियमुदयिनीमद्भुतां च व्यनक्तिमनोरुजम् ॥

मध्यमाश्रयो यथा—

णवरिअपसारिअंगीरअभरिउव्पहपइण्णवेणीबंधा ।
पडिआउरसंदाणिअमहिअळचक्कळिइअत्थणीजणअसुआ ॥

प्रगल्भाश्रयो यथा—

तदाकर्ण्यविहायैव वैक्लव्यं स्त्रीजनोचितम् ।
लब्धसंज्ञा महाश्वेता मदलेखांचसावदत् ॥

उद्धताश्रयो यथा—

अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ ॥

ललिताश्रयो यथा—

पडिआअ ह॰घसिढिळिअणिरोहपंडुरसमूसस॰तकओला ।
पेल्लिअवामपओहरविसमुण्णअदाहिणत्थणीजणअसुआ ॥

शान्ताश्रयो यथा—

नवावदद्भर्तुरवर्ण्यमार्या निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेवस्थिरदुःखभाजं पुनःपुनर्दुष्कृतिनं निनिन्द ॥

धैर्यकृतोद्वेधा, धीराश्रयोऽधीराश्रयश्च । तयोर्धीराश्रयो यथा—

जाए परळोअगए तुम॰मिववसाअमे॰तसुहद॰ठव्वे ।
हरिस॰च्छाणेविमहं डज्झइअदि॰ठदहमुहवहं हिअअं ॥ (सेतुबन्धे)

अधीराश्रयो यथा—

णकहोवाहविमो॰खोनि॰व॰णेउंपिनवइअंदामशिरं ।
णवरिपडिब॰णमोहा गअजीविअणीसहामहिएणिसंण्णा ॥ ( „ )

अथास्यैव विभावानुभावव्यभिचारिसंयोगः प्रयोगतोऽभिधीयते। तत्रालम्बनविभावोद्दीपनविभावयोस्तादर्थ्यादर्थाद्व्यभिचारिणामपि अभिन्नार्थत्वादनुभावैरेव सर्वसङ्ग्रह इति, तथैवोदाह्रियते, उदाहरिष्यन्ते च। तेच व्यसनाभिघातादयो मुखप्रतिमुखगर्भविमर्शनिर्वहणेषु प्रत्येकं षोडशेत्येवमशीतिर्यथाक्रमं प्रतिपाद्यन्ते। तत्र व्यसनाभिघातः, अभिषङ्गाभिभवः, चेष्टासम्मीलनं, मोहसमावेशः, चेतनाप्रत्यागमः, मूर्च्छाविच्छेदः, शोकप्रत्यग्रता, शोकावेगः, दुःखनिर्यातनं, दुःखावसादः, दुःखसन्दीपनं, दुःखव्याहारः, दुःखातिवादनं, बाष्पमोक्षः, अवस्थानुभवः, अवस्थान्तरावेशः, इत्यनुभावाः, षोडश। मुखे, परिदेवनं, अनुशोचनं, गुणसंस्मरणं, स्वभावस्य गर्हणं, विलापः, प्रलापः, प्रविलापः, विप्रलापः, आत्मनिन्दा, हृदयोपलम्भः, जीवितजुगुप्सा, दैवाधिकारः, शोकोन्मादः, दुःखसम्भेदः, सहायापेक्षणं, सहायानुनीतिरित्यनुभावाः, षोडश। प्रतिमुखे, सुहृत्परिवेदनं, सुहृत्प्रलापः, परिजनानुशोचनं, परिजनाक्रन्दः, गुरुपरोधनं, गुरुजनविलापः, सहायाक्रन्दनं, सहायाभ्युपपत्तिः, सहायाभाषणं, सहायाप्रश्नः, साहसाग्रहो, मरणाभिनिवेशः, सहायाभ्यर्थनं, सहायशिक्षा, मरणोपक्रमः, मरणाध्यवसाय इत्यनुभावाः षोडश। गर्भे, समाश्वासनं, उत्सर्पणं, प्रतिबोधनं, उत्साहनं, अनुकम्पनं, विस्रम्भणं, प्रलोभनं, उपपत्तिदर्शनं, प्रश्वासनं, उत्थापनं, प्रत्यायनं, आप्यायनं, तन्मतव्याक्षेपः, भयोपदर्शनं, उपालम्भनं प्रतिकोप इत्यनुभावाः षोडश। विमर्शे, मरणाध्यवसायः, विद्रवः, शोकतिरस्कारः, शोकलाघवं, शोकविनोदः, तपस्योद्वेगः, दैवसम्प्रयोगः, त्रिकालदृष्टदर्शनं, तदुपदेशः, सहायस्वीकरणं, तदध्यवसायः, प्रत्यूहप्रशमनं, प्रत्याशानुबन्धः, समयप्रतीक्षा संविधानकप्रकारः, प्रत्युज्जीवनं पुनस्समागम इत्यनुभावाः षोडश। निर्वहणे, सैषा षोडशकपञ्चकेन अशीतिः। अथैतेषामुदाहरणानि। तत्र मुखसन्धौ व्यसनाभिघातो यथा—

कलत्रनिन्दा गुरुणाकिलैवमभ्याहतं कीर्तिविपर्ययेण।
अयोघनेनायइवाभितप्तं वैदेहिबन्धो र्हृदयं विदद्रे॥

यथावा—

कुलशैलौ प्रचलितौ सागरौ शोषमागतौ।
चन्द्रसूर्यौ गतावस्त महोशोकस्य तीव्रता॥

अभिषङ्गाभिभवो यथा—

ततोऽभिषङ्गानिलविप्रवृद्धा प्रभ्रश्यमानाभरणप्रसूना।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसाजगाम॥

यथावा—

तीव्राभिषङ्गप्रभवेन मन्युं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥

चेष्टासम्मीलनं यथा—

तहणिमिअच्चिअदि॰ट्ठीमु॰ककओळविहुरोढराच्चिअहत्थौ ।
गअजीविअणि॰चे॰ठाणवरंसामहिअळंघणहरेणगआ ॥ (सेतुबन्धे)

यथावा—

अळअंधआरिअमुहीसमुहागअक॰ठमिअवेणिबंधा ।
मोहपडिप॰णहिअआदरजंपिअणीसंहपुणोविणिस॰णा ॥ ( „ )

मोहसमावेशो यथा—

खणणि॰चळणीसासंजामोहंघआरसाम॰चाअं ।
विरळमिळिअ॰च्छीप॰तं मु॰छाहीरंततारअंतीएमुहं ॥ ( „ )

यथावा—

विअळिअविओअविअणंत॰खणपब्भट्ठरामसरणआसं ।
जणअतणआइणवरंळ॰घंमु॰छाणिमीळअ॰छीएमुहं ॥ ( „ )

चेतनाप्रत्यागमो यथा—

थणपरिणाहेत्थिइएतीएहिअअ॰मिपअणुअंपिणदिट्ठं ।
दीहंविसमूससिअंसूइजइणवरवेविरेअहरोट्ठे ॥ ( „ )

यथावा—

अवरि॰फुडणीसासातोसामोहविरमेविणीसहपडिआ ।
बद्धंतबाहगुरुइअदु॰खसमु॰ऊढतारअंउमीचा ॥ ( „ )

मूर्च्छाविच्छेदो यथा—

अथमोहपरायणासती विवशाकामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥

यथावा—

सालुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।
तस्यास्सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः ॥

शोकप्रत्यग्रता यथा—

चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः कुतश्चित्संवेगात्प्रचल
इव शल्यस्य शकलः । व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि
पुनः परावृत्तः शोको विकलयति मां नूतन इव ॥

यथावा—

इअरामपे॰मकि॰तणदूसणत॰जाभिघाअदोमिअइ ।
हिअआस॰भरिअमु॰कअंह॰ठंअ॰णमअंमरण॰छिअपिवरुण्णा ॥ (सेतुबन्धे)

शोकवेगो यथा—

हेलोल्लोलक्षुभितकरुणो जृम्भणस्तम्भनार्थं योयो यत्नत्कथमपि
समाधीयते तंतमन्तः । हित्वाहित्वा प्रसरति बलात्कोऽपि
चेतोविकारः तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥

यथावा—

तस्य प्रसह्यहृदयं किल शोकशङ्कुः प्लक्षप्ररोह इव सौधतलं बिभेद ।
प्राणान्तहेतुमपि तद्भिषजामसाध्यं लाभं प्रियानुगमनेत्वरया।समेने ॥

दुःखनिर्यातं यथा—

परिदेविउंपउत्तणिअअसरीरपडिमु॰कराहवदुक्खं ।
करमग्गुट्टिअसोणिअविवण्णउण्णअपओहराजणअसुआ ॥ (सेतुबन्धे)

यथावा—

तोजण्णिउंपउत्ता पुणोत्रिअदधैच्छउट्ठिअसमूससिआ ।
उरघोळिरवेणीमुहघणळग्गुंग्घुट्टमहिरआजणअसुआ ॥

दुःखावसादो यथा—

आवेअसमुक्खित्तं तोसे खेआगमेसि अंतावत्तं ।
पडिअंणिअउच्छंगेअप्पत्तंचिअपओ हरेकरज्जअजं ॥ (सेतुबन्धे)

यथावा—

तीएणपल्लवेणवपवराअंवविहळेण हत्थेणमुहं ।
परिमज्जिउव्णचळअं एक्कक्कओळमिळिआळअंकहविकअं ॥ ( ,, )

दुःखसन्दीपनं यथा—

तमवेक्ष्य रुरोद सा भृशं स्तनसम्वाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥

यथावा—

उपमानमभूद्विलासिनीनां करणं यत्तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां नविदीर्ये कठिनाः खलुस्त्रियः ॥

दुःखव्याहारो यथा—

इति चैनमुवाच दुःखिता सुहृदं पश्य वसन्तकं स्थितः ।
यदिदं कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् ॥

यथावा—

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विपहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥

दुःखातिवाहनं यथा—

प्रतियोजयितव्यवल्लकी समवस्थामय सत्त्वविप्लवात् ।
सनिनाय नितान्तवत्सलाः प्रतिगृह्योचितमङ्कमङ्गनाम् ॥

यथाय —

तेअगळिओवएसागओणिअत्तंतजीविअमुहिज्झंती ।
तिअडाए जणअतणआसहिसब्भवसरिसंउरम्मिणिसण्णा ॥ (सेतुबन्धे)

बाष्पमोक्षो यथा—

तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते ।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ॥

यथा वा—

न किल भवता देव्याः स्थानं गृहेऽभिमतं कृतं तृणमिव वने
शून्ये त्यक्ता न चाप्यनुशोचिता । चिरपरिचिताश्चैते भावाः
परिद्रवयन्ति मां इदमशरणैरप्यस्माभिः प्रसीदत रुद्यते ॥

अवस्थानुभवो यथा—

रोअवणवळअर॰गं तंसणिस॰णाएतिअदाएव॰छे ।
गळिअंकवोळपे॰ळण वीळ॰जंतंतुउग्गअंघाहजळं ॥ (सेतुपथे)

यथा वा—

स॰वंगणिस॰णाएणीसेसरुखविअतिवळिविभंगणिराओ ।
तीएमज्झपएसोघणजहणकराळिओणपाइवमुहं ॥ ( „ )

अवस्थान्तरावेशो यथा—

तोअडिअपेळवघणाभंगु॰गमविसमकेसव॰छ॰तरणे ।
पडिआरामोर॰धइसअणणरासहअआमहिअगे ॥ ( „ )

यथा वा—

तोमु॰छिउ॰ठिआएकिंएअंतिगअणे दिशामुआममअं ।
मुच्छपरिघोळिअ॰च्छं जाअंमूढपरिदेविअंतीएमुहं ॥ ( „ )

प्रतिमुखसन्धौ परिदेवनं यथा—

कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत् तवनेष्यामि निवापमाल्यताम् ॥

यथा वा—

क्रियतां कथमन्त्यमण्डनं परलोकोपगतस्य ते मया ।
सममेव गतोऽस्यतर्कितां गतिमङ्गेन च जीवितेन च ॥

अनुशोचनं यथा—

नयनान्यरुणानि घूर्णयन् वचनानि स्खलयन्पदेपदे ।
असति . . वारुणीमदः प्रमदानामधुना विडम्बनम् ॥

यथावा—

हरितारुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः ।
वद सम्प्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥

गुणसंस्मरणं यथा—

ऋजुतां नयतः स्मरामिते शरमुत्सङ्ग निषण्णधन्वनः ।
मधुना सह संस्थितां कथां नयनोपान्तविलोकितं मयि ॥

यथावा—

शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।
सुरतानि च तानि तेरहः स्मरसञ्चिन्त्य न शान्तिरस्तिमे ॥

स्वभाग्यगर्हणं यथा—

विरहम्मि तुज्झ धरिअंदसामिण्तिहअजीविअंकहविमए ।
तीएससि सेदिंठोपळिआविमणोरहाणपूरंतिमहिं ॥ (सेतुबन्धे)

यथावा—

पुहवीएहोहिइपईबहुपुरिसविसेसचञ्चळाराआसिरी ।
मण्णे महं चिअइमंणीसामण्णंउअवठिअंवेहव्वं ॥ ( „ )

विलापो यथा—

कृतवानसि विप्रियं न मे प्रतिकूलं च मया न ते कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये नदीयते ॥

यथावा—

मनसापि न विप्रियं मया कृतपूर्वंतवकिंजहासिमाम् ।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥

प्रलापो यथा—

हृदये वससीति मत्प्रियं यदवोचस्तदवैमिकैतवम् ।
उपचारपदं नचेदिदं त्वमनङ्गः कथमक्षता रतिः ॥

यथावा—

ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव ।
परलोकमसन्निवृत्तये यदनापृच्छ्यगतासिमामितः ॥

प्रविलापो यथा—

मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ ।
अविधाय विवाहसङ्क्रिया मनयोर्गम्यत इत्यसाम्प्रतम् ॥

यथावा—

तव निश्वसितानुवादिभिः वकुलैरर्धचितां समं मया ।
असमाप्य विलासमेखलां किमिदं किन्नरकण्ठि सुप्यते ॥

विप्रलापो यथा—

क्वनु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।
नलिनीं क्षतसेतुबन्धनो जलसङ्घात इवासि विद्रुतः ॥

यथावा—

समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापिते व्यवसाये प्रतिपत्तिनिष्ठुरः ॥

आत्मनिन्दा यथा—

आवाअभअअरंचिअणहोइदुक्खःसदारुणंणिव्वहणव्वं ।
महिळावीहच्छदिव्वं सहिंअंरक्खसवसहेदिव्वं ॥ (सेतुबन्धे)

यथावा—

तुहताहएरिसं अवसाणं अञ्जविवअणिञ्जहअं ।
. . धूमाइविअणवञ्जइमे हिअअं ॥

जीवितजुगुप्सा यथा—

दयितां यदि तावदन्वगात् विनिवृत्तं किमिदं तया विना ।
सहतां हतजीवितं मया प्रबलामात्मकृतां च वेदनाम् ॥

यथावा—

सहिओ तुज्झविओओरअणिअरीहिसमअंसहिहिवपुव्वं ।
दव्ठुंतुमव्तिहोव्तं जइएव्ताहेविजंविअंबोळंतं ॥ (सेतुबन्धे)

दैवाधिकारो यथा—

कुसुमान्यपि गात्रसङ्गमात् प्रभवन्त्यायुरपोहितुं यदि ।
नभविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥

यथावा—

विधिना कृतमर्धवैशसं ननुमां कामवधे विमुञ्चता ।
अनघापि वनेननिर्मिते द्रुमभङ्गे पतनाय वल्लरी ॥

शोकोन्मादो यथा—

रचितं यदि पण्डित त्वया ममगात्रेषु यदेतदार्तवत् ।
ध्रियते कुसुमप्रसाधनं तवतच्छायवपु र्नदृश्यते ॥

यथावा—

प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः ।
रतिदूतपदेषु कोकिलं मधुरालापनिसर्गपण्डिताम् ॥

दुःखसम्भेदो यथा—

मदनेन विनाकृता रतिः क्षणमात्रं किल जीवतीतिमे ।
वचनीयमुपस्थितं जने रमण त्वामनुयामि यद्यपि ॥

यथावा—

न्यक्कारो हृदि वज्रकील इवमे तीव्रः परिस्पन्दते घोरान्धे तमसीव
मज्जति मनः सम्मीलितं लज्जया । शोकस्तातविपत्तिजो दहति मां
नास्त्येव यस्मिन्क्रिया मर्माण्येव पुनश्छिनत्तिकरुणा सीतां वराकीं प्रति ॥

सहायापेक्षणं यथा—

कनुते हृदयङ्गमः सखा कुसुमायोजितकार्मुको मधुः ।
नखलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥

यथावा—

अयि सम्प्रति देहि दर्शनं स्मरपर्युत्सुक एष माधवः ।
प्रमदास्वनवस्थितं नृणां नखलु प्रेमजनं सुहृज्जने ॥

सहायानुनीतिर्यथा—

तदेष सर्गः करुणार्द्रचित्तैः न मे भवद्भिः प्रतिषेधनीयम् ।
यद्यर्थिता निर्हतवाच्यशल्यान्प्राणान्मया धारयताचिरं वः ॥

यथावा—

बाष्पान्धा न निरीक्षितुं विषहते दृष्टिः पुरोविद्विषः सीदत्येष च
कार्मुकप्रणयितां धत्तेनपाणिर्मम । रुन्धेतीव्रशुचा मनस्यवसरः
क्रोधस्य यातःसखे क्षन्तव्यं कृपणोऽनुयामिदयितामध्वस्तवैरोऽप्यहम् ॥

गर्भसन्धौ सुहृत्परिदेवनं यथा—

नयत्र प्रत्याशामनुपतति नो वा रहयति प्रतिक्षिप्तं चेतः
प्रविशतिच मोहान्धतमसम् । अकिञ्चित्कुर्वाणाः पशव इव
तस्यां वयमहो विधातुर्वामत्वाद्विपदिपरिवर्तामह इमे ॥

यथावा—

सुहृदि गुणनिवासे प्रेयसि प्राणनाथे कथमिह सहचर्या क्रीडनप्रौढसख्ये ।
प्रियजनविरहाधिव्याधिवेगं दधाने हतहृदय विशीर्य त्वं द्विधा न प्रयासि ॥

सुहृत्प्रलापो यथा—

अकरुण वितर स्मितोज्ज्वलां दृश मतिदारुण देहि मे गिरम् ।
सहचरमनुरक्तचेतसं प्रिय मकरन्द कथं न मन्यसे ॥

यथावा—

आपूर्णश्च कलाभिरिन्दुरमलोयातश्चराहोर्मुखं सञ्जातश्च घनाघनो
जलधरः शीर्णश्च वायोर्जलात्। संवृत्तश्च फलेग्रही द्रुमवरो
दग्धश्च दावाग्निना त्वं चूडामणितां गतश्च जगतः प्राप्तश्च मृत्योर्वशम् ॥

परिजनानुशोचनं यथा—

धारावेश्म विलोक्य दीनवदनो भ्रान्त्वा च लीलागृहा न्निश्वस्यायतमाशु
केसरलतावीथीषु कृत्वा दृशः। किंमे पार्श्वमुपैषि पुत्रक कृतैः
किंचाटुभिःक्रूरया मात्रात्वं परिवर्जितः सहमया यान्त्यातिदीर्घां भुवम् ॥

यथावा—

कुरवकतरुर्गाढाश्लेषं मुखासवलालनंबकुलविटपीरक्ताशोकस्तथा
चरणाहतिम्। तत्र सुकृतिनः सम्भाव्यैते प्रसादमहोत्सवा
ननु गतदशाः सर्वे सर्वः शठो न वयं यथा ॥

परिजनाक्रन्दो यथा—

उभयोरपि पार्श्ववर्तिनां तुमुलेनार्तरवेण वेजिताः।
विहगाः कमलाकराश्रयाः समदुःखा इव तत्र चुक्रुशुः ॥

यथावा—

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना तथावृत्तं पापे
व्यथयति यथा क्षालितमपि। जनस्थाने शून्ये विकलकरणै-
रार्यचरितैरपि ग्रावारोदि त्सपिदलति वज्रस्य हृदयम् ॥

गुरुपरोदनं यथा—

चूडामणिं चरणयोर्मम पातयता त्वया।
लोकान्तरगतेनापि नोज्झितो विनयक्रमः ॥

यथावा—

विवाहे दृष्टेयं सितकुसुममाल्याम्बरधरा सनाथा रामेण प्रथमवयसा कान्तवपुषा । पुनश्शून्येऽरण्ये प्रतिभयकरे बन्धुरहिता विमुञ्चन्तीप्राणानितरतनयैवाद्य च मया ॥

गुरुजनविलापो यथा—

अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुट्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि स्खलदसमञ्जितमञ्जुजल्पितंते ॥

यथावा—

अकारणस्मेरमनोहराननः शिखाललाटार्पितगौरसर्षपः ।
तवाङ्कशायी परिवृत्तभाग्यया मयानदृष्टःखलुस स्तनन्धयः ॥

सहायाक्रन्दनं यथा—

ततो भग्नग्रीवं मुकुलितसितापाङ्गनयनं प्रभां तन्वीं दीनामिव निदधतं दिक्षु दशनैः । क्षितौ विश्रान्ताङ्गं पतितमिममालोक्य विवशा महाश्वेता सद्यः कथमपि न यातिस्म दलशः ॥

यथावा—

अकृतकवलारम्भैर्वक्त्रैर्भयस्थगितेक्षणाः किमपि वलितग्रीवं स्थित्वामुहुर्मृगपङ्क्तयः । गगनमसकृत्पश्यन्त्येतास्तथाश्रुघनैर्मुखैः निपतति यथाश्रृङ्गाग्रेभ्यो भ्रमन्नयनोदकम् ॥

सहायाभ्युपपत्तिर्यथा—

अथतैः परिदेविताक्षरैः हृदये दिग्धशरैरिवार्पितम् ।
रतिमभ्युपपत्तुमादरान्मधुरात्मानमदर्शयत्पुरः ॥

यथावा—

तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः ।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥

सहायाभावणं यथा—

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा क्रियाशोको जीवं
कुसुममिव घर्मःकलयति । स्वयं कृत्वा त्यागं विलपनविनो-
दोऽप्यसुलभः तदद्याप्युच्छ्वासो भवतु ननु लाभोहि रुदितम् ॥

यथावा—

जागर्षिकाश्मरि निषीदसिकोविदार कुत्रासिवत्स-
कृतमाल तमाल पश्य । किंसाम्प्रतं रघुपतेरिति विक्लबाभि-
रुक्तं द्रुमौधमवलोक्य वनस्थलीभिः ॥

सहायावक्षो यथा—

तोतीद॰ठूणपुणो मरणे॰करसाएवाहिणीसार॰धं ।
आउ॰चसुमंतिकअंतिअगअभोअदाएदीणपुळइअं ॥ (सेतुबन्धे)

यथावा—

सहिअ॰मिरामविरहे दूसहलि॰जे पडि॰छिएवेह॰से ।
सअसुगअणेहळहुअं मह॰णि॰ळ॰जमरणं इमंतीवर॰णा ॥ ( ,, )

साहसाग्रहो यथा—

शून्या दिशस्तपदिवीक्ष्यशुचा वराकी मृत्योर्मुखं पाशमयं निराशा ।
एतावयस्त्वघपातकदीर्घरोषा मागच्छशीघ्रमबलां परिरक्ष यावत् ॥

यथावा—

विश्वम्भरात्मजादेवी राज्ञा त्यक्ता महावने ।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥

मरणाभिनिवेशो यथा—

परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहंतव ।
विधिना जन एष वञ्चित स्त्वदधीनं खलु देहिनां सुखम् ॥

यथावा—

शशिना सह याति कौमुदी सहमेघेन तटित्प्रलीयते ।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥

समयाभ्यर्थनं यथा—

तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
अविषह्यवियोगवेदनां ननुमां प्रापय पत्युरन्तिकम् ॥

यथावा—

कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः ।
कुरु सम्प्रति सत्वरं मया विनिपाताञ्जलियाचितां चिताम् ॥

सहायशिक्षा यथा—

तदनुज्वलनं मदर्पितं त्वरये दक्षिणवातवीजनैः ।
विदितं खलु ते यथास्मरः क्षणमप्युत्सहते न मां विना ॥

यथावा—

परलोकविधौ च माधवः स्मरमुद्दिश्य विलोलपल्लवाः ।
निपतेस्सहकारमञ्जरीं प्रियचूतप्रसयोहिते सखा ॥

मरणोपक्रमो यथा—

रतिपतिरभूद्यस्मिन्वेधासुधापरमाणुभिः यदिह घटितं यस्याकारं
विलोक्य कृतः शशी । वदनकमलं तत्पश्येयं सरोजदृशः
पुनः दहनभवनं निर्माणंमे तदेव करिष्यसि ॥

यथावा—

हंसो वा चक्रवाको वा विशालाक्ष्यानयासह ।
भवेयं मानुषीगर्भेमाभूज्जन्मपुनर्मम ॥

मरणाध्यवसायो यथा—

अणुसोळउ॰णइ॰छळणदेइअंग॰मिसामरंमिविवहरं ।
वाहंमुअळणकुंभइमरिअ॰पे॰ळ॰घप॰चअंसेहिमअं ॥

यथावा—

ळ॰खि॰जंतविसाआअ॰गहिउ॰मि॰ळणि॰चळ॰ठिअणअणा ।
रामसिरवे॰घळ॰दाघ्रु॰वइथहेणजेणसंभइदि॰ठि ॥ (सेतुबन्धे)

विमर्शसन्धौ समाख्यानं यथा—

तोविळक्षिअणि॰चामं गळंतहिअअपरुसु॰णळोअणजुमळं ।
महुरं आसासंती ह॰द्धुत्ताणिअमुहीहणइ॰ततिअडा ॥ ( „ )

यथावा—

मारुअतुत्तुसमुवाहं अवआसेऊणसुसंभरिअ॰तमुहं ।
संभरिअविरहदु॰खं रो॰तंवंते पुणोवि अ॰सविअंके ॥ ( „ )

पर्युपासनं यथा—

अइरादंतिहि सुतुमं चिरविरहोलु॰गपंमुदमुह॰छाअं ।
गअरोसरोहालोअं ओवारिअ प्पावणि॰पुअंदासरहं ॥ ( „ )

यथावा—

अइराए रहुतणओ त॰णाअंत॰गहु॰घमउविअपमहं ।
मोचिअवेवंतगुळिगु॰फंत॰खि॰तविसमभाअंवेणी ॥ ( „ )

प्रतिपादनं यथा—

तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥

यथावा—

रुदता कुत एव सा पुनः भवता नानुमृतापि लभ्यते ।
परलोकजुषां स्वकर्मभिः गतयो भिन्नपथा हि देहिनाम् ॥

उत्साहनं यथा—

उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मनस्त्वया ।
मनसस्तदुपस्थिते ज्वरे पुनरक्लीबतया प्रकाश्यताम् ॥

यथावा—

न पृथग्जनवच्छुचो वशं वशिनामुत्तम गन्तुमर्हसि ।
द्रुमसानुमतां किमन्तरं यदिवायोर्द्वितयेऽपि ते चलाः ॥

अनुकम्पनं यथा—

तमश्रुनेत्रावरणांप्रमृज्यसीताविलापाद्विरता ववन्दे ।
तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वानपत्याशिष इत्युवाच ॥

यथावा—

जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा ।
तन्माव्यथिष्ठा विषयान्तरस्थं प्राप्ताऽसि वैदेहि पितुर्निकेतम् ॥

विस्रम्भणं यथा—

पुष्पं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि ।
विनोदयिष्यन्तिनवाभिषङ्गामुदारवाचोमुनिकन्यकास्त्वाम् ॥

यथावा—

पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयो पपचेस्तनन्धयी रीतिमवाप्स्यसित्वम् ॥

प्रलोभनं यथा—

तपस्विसंसर्गविनीतसत्त्वे तपोवने बीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥

यथावा—

अशून्यतीरां मुनिसन्निवेशैः तमोऽपहन्त्रीं तमसां विगाह्य ।
तत्सैकतोत्सङ्गबलिक्रियाभिः सम्पत्स्यते ते मनसः प्रसादः ॥

उपपत्तिदर्शनं यथा—

मारुअमोडिअविडवं मअंककिरणपरिमासमउळिअकमळं ।
कहहोइ रामसरणे इविच्छाइअंदसणघरु०जाअं ॥

यथावा—

सअळाणिसाअरउरिघरपरिवाडिसमणीहरिअरु॰णरहा ।
ए॰कणकआकइणा कहहोहिअणहअर॰खसं रहुमरणं ॥

प्रश्वासनं यथा—

किंवन्नमाससिए॰वे मु॰ञ्चसि दहवअणद॰पम॰गु॰पाळं ।
पे॰छंतीवमअवणे रामाणत्तिअरपवअपत्तिघदुमं ॥ (सेतुबन्धे)

यथावा—

वाळिवहदिठ्ठसारं णगळिछिअसमुद्ददिण्णघळहं ।
रोहिळअं कामळअं माळहुअं पेछदाहयसमुअबळं ॥ ( „ )

सत्यापनं यथा—

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तेर स्त्येवमन्युर्भरताग्रजे मे ॥

यथावा—

तवेन्द्रकीर्तिश्वशुरःसखामे सतां भवोच्छेधकरःपिता ते ।
धुरिस्थितात्वंपतिदेवतानां कितन्नयेन . . ॥

प्रत्यानयनं यथा—

तहतसिकआमोहं मु॰छागमडिअणसहतिसण्णमुही ।
रखसमाएत्तिपुडं जाणंतीजहइमं अहंपिविमूढा ॥ (सेतुबन्धे)

यथावा—

तंअवळवसुधीरं संपइणासइअरुंगळाजाओ ।
इमामुणिअपरमघळहुईअवईहिअणिफळाणिसाअमाआ ॥ ( „ )

आप्यायनं यथा—

अनुग्रहप्रत्यभिनन्दिनींतां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तिमुखंनिनाय ॥

यथावा—

तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारांपितृभिर्हिमांशो रन्त्यांकलांदर्शइवौषधीषु ॥

तद्गतव्याक्षेपो यथा—

तिहुअणमूळाहारं विसण्ठमहिन्दपरिमुक्कऊद्धरणधुरं ।
जाणंतीकीसक्कुसंतुळेसिसेसपुरिसाणुमाळेणपइं ॥ (सेतुबन्धे)

यथावा—

अमिळिअसाअरसळिळा अणहत्थिअपव्वआअणुपत्तअळा ।
रामस्सछिण्णपडिअं कहपव्विअसिव्वरणीघरेइत्तिसिरं ॥ ( „ )

भयोपदर्शनं यथा—

अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवापदत्तिभिः ।
स्वजनाश्रुकिलातिसम्भृतं दहति प्रेतमिति प्रचक्षते ॥

यथावा—

उव्वेसुअं अमुसोअं पुसएअंवाअमइरिअंघणवट्टं ।
सुणसुअसुवेणवट्टइ सुमराहिमुहेपइत्तमिअसुणिवाओ ॥ (सेतुबन्धे)

उपालम्भनं यथा—

मिळिअणिसाअरपुरओसुवेळमळअंतराळणिम्मविअवहे ।
पेल्ळिअतिऊडसिहरे अज्झकिन्तुज्झराहवेअग्गहणं ॥

यथावा—

मोत्तूणअरहुणाहं ळज्जागमसेअविदुइअज्जंदमुहे ।
केणवअण्णेणकओ पाआरंतरिअळिव्वहोतहवअणो ॥ (सेतुबन्धे)

प्रतिकोपो यथा—

जाणइसेहभणिअं मारअणिअरित्तिमेज्जुगुञ्छसुवअणं ।
गुंच्छाणम्मिवणम्मिविजं सुरहिंतीळआणसेप्पइकुसुमं ॥

यथावा—

किंरजिअंतीसा मेजइअळिअंसहिणओ॰जराहवमरणं ।
अणहेउणरहुणाहे तुहमेमरणविहुरं किळ॰मइहिअअं ॥ (सेतुबन्धे)

निर्वहणसन्धौ मरणाऽध्यवसायविद्रवो यथा—

मरणव्यवसायनिश्चला कृतवत्यसि च संविधानकम् ।
निरियाय च चन्द्रमण्डलात्पुरुषः कोऽपि हिमोपमद्युतिः ॥

यथावा—

इत्थं रतेः किमपि भूतमदृश्यरूपं मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेनामाश्वासयत्सुरचितार्थपदैर्वचोभिः ॥

शोकतिरस्कारो यथा—

विरम मरणोद्योगादस्मा त्प्रियेणतवामुना पुनरपि महाश्वेते
वत्से भविष्यति सङ्गमः । इति गिरमिमां श्रुत्वातस्मात्सविस्मय-
कौतुकात् किमिदमितितच्चत्राप्रृच्छत्प्रसृत्य कपिञ्जलम् ॥

यथावा—

अस्तोकविस्मयमपरमृतपूर्ववृत्तमुद्भूतनूतनभयज्वरजर्जरं नः ।
एकक्षणत्रुटितसङ्घटितप्रमोदमानन्दशोकशबलत्वमुपैति चेतः ॥

शोकलाघवं यथा—

एतस्मिन्मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुपुण्डरीकपण्डाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले सन्दृष्टाः कुवलयिनो मयाविभागाः ॥

यथावा—

एतेतेकुहरेषु गद्गदनदद्गोदावरीवारयो मेघालङ्घितमेघनील-
शिखराः क्षोणीभृतो दक्षिणाः । अन्योन्यप्रतिघातसङ्कुलदल-
त्कल्लोलकोलाहलैरुत्तालास्तइमेगभीरपयसः पुण्याः सरित्सङ्गमाः ॥

तपस्योद्योगो यथा—

साहं तपस्सूर्यनिविष्टदृष्टिः ऊर्ध्वं प्रतीतेश्चरितुं यतिष्ये ।
तथा यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥

यथावा—

पश्यन्त्यां मयि ते त्रयोऽपि विविशुः शीतत्विषोमण्डलं तत्सम्प्रत्ययसंहृतो-
चितविधिः सास्मि श्रितेदं व्रतम् । तातेनैत्य ततः प्रभृत्यहमिहासीना न
नेतुं गृहान्यत्नेनापि हि पारितेति सुचिरं स्थित्वा गतः स्वं पुरम् ॥

दैवसम्पयोगो यथा—

दग्धैकेन हनूमता सखियथालङ्का यथाम्भोनिधौ शैलैः सेतुरकारि
भस्मनिहुतं नागास्त्रबन्धो यथा । द्वीपादन्यपथेपि निशयाऽनीतो
विशल्यौषधिः दिष्ट्या जानकि वर्धसे तव तथा जातोऽनुकूलो विधिः ॥

यथावा—

मुनेरवभृथावधिः पितुरमुष्यसिद्धःक्रतुःकृतस्त्वमपिसंस्मृतः
स्वतनुरुधतच्छासनात् । तदुज्झितमलीमसेदृशशरीरयोगौ युवां
निजेनवपुषाधुनानुभव तं प्रियासङ्गमम् ॥

त्रिकालदृश्यदर्शनं यथा—

व्यतिकर इव भीमस्तामसो वैद्युतश्च क्षणमुपहतचक्षुर्वृत्तिरुध्दूयशान्तः ।
कथमिह न वयस्यस्तत्किमेतत्किमन्यद्भिवतिहिमहिम्नास्वेनयोगेनरेयम् ॥

यथावा—

अस्याः पश्यत देवलम्बितवलीविन्यासमग्नाधरं जातं सङ्कलितद्युतेः
शशभृतः शोभोपमानं मुखम् । स्पष्टस्थूलसिरामतनुंमधुरया कान्ता
समुन्मीलिता चित्रं व्योमविलासिनी कथमियं जाताजरत्तापसी ॥

तदुपदेशो यथा—

भ्रात्रा वित्तकलत्रराज्यहरणैर्नीतोऽति कष्टां दशां अध्यास्ते गिरिमृश्य-
मूकमधुना सुग्रीवनामा कपिः। तंकृत्वा तदरिक्षयप्रणयिना मूल्येन
तस्मात्प्रियावार्तां प्राप्य करिष्यसि त्रिभुवनं विक्षिप्तरक्षोज्वरम् ॥

यथावा—

यस्याः पाणिपरिग्रहेसतिपुनर्देवी किलप्राप्यते दैवादेवतदीरितं
यदि सखे सत्यं मुनेः स्याद्वचः। तद्रक्षे किमपत्रपः कृतमिदं
तत्प्राप्तिहेतोर्मया नैतरसा हृदयेकरिष्यति यतो देवी दृढं कोपना ॥

सहायत्वाकरणं यथा—

सहत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते।
धातोःस्थान इवादेशं सुग्रीवं सन्न्यवेशयत् ॥

यथावा—

तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥

तदध्यवसायो यथा—

स्वामी शोकमयींदशामुपगतःसीताप्रवृत्तिविना दुष्प्रेक्षाजलभार-
वामनघनच्छन्नाश्च सर्वा दिशः। क्रूरास्ते पिशिताशिनः प्रकृतितो
नैवागतोमारुतिः हाजातं किमिदं विसंस्थुलमहो पापस्य मे सर्वतः ॥

यथावा—

बाष्पाम्भस्स्थगितेक्षणं क्षणमसौ मूर्च्छा विलुप्तव्यथो विन्यस्योरसि
सम्भ्रमात्करतलं भ्रात्रायदाश्वास्यते। तत्राशा मयि कारणं नचमया
क्लीबेन किञ्चित्कृतं प्राणास्तद्व्रजतायवानहिभवेदेवंप्रभुर्वञ्चितः ॥

प्रत्यूहप्रशमनं यथा—

शापादसि प्रतिहतास्मृतिलोपरूक्षे भर्तुर्व्यपेततमसि प्रभुना तवैव।
छाया न मूर्च्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा ॥

यथावा—

सा रक्षिता तनुरियं तु तव प्रियेति शापः कृशोदरि चिरांममवोपपापः।
अद्यप्रभृत्यखिलमेव हि चन्द्रलोकं शाधि स्वपादकृतमुद्रमितंजगच्च ॥

प्रत्याशानुबन्धो यथा—

किन्तु क्लेशाय येनाशालेशेन हतजीवितम्।
राजपुत्र बिभर्मीदं तदाश्चर्यं वदामिते ॥

यथावा—

दिवसेष्वथ गच्छत्सु निर्विकारशरीरताम्।
चन्द्रापीडस्य पश्यन्ती स्थिरामाशां बबन्ध सा ॥

समयप्रतीक्षा यथा—

अथमदनवधूरुपप्लवान्तां व्यसनकृशा प्रतिपालयाम्बभूव।
शशिन इव दिवाकरस्य लेखा किरणपरिक्षयधूसरा प्रदोषम् ॥

यथावा—

तेनाष्टौ परिगमिताः समाःकथंचि द्बालत्वादवितथसूनृतेन सूनोः।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥

संविधानकप्रकारो यथा—

नऽशला नचदहनो नधूमजालं काकस्मात्सिकतिलवेदिकानिपातः।
स्वप्नोऽयं किमुत महेन्द्रजालमाहो मायास्विर्त्किमिदमहो महाविचित्रम् ॥

यथावा—

चन्द्रापीडं सा च जग्राहकण्ठे कण्ठस्थानं जीवितं च प्रपेदे।
तेनापूर्वांसासमुल्लासलक्ष्मीं इन्दुस्पृष्टा सिन्धुवेलेव भेजे ॥

प्रत्युज्जीवनं यथा—

अयसा पितृनाथवर्त्मनः प्रतियाता वनमेव भामिनी।
दयितं शयितं महीतले दधतंप्राणकलामलोकयत् ॥

यथा वा—

शिलाशय्यांत्यक्त्वा तदनु चिरसुप्तोत्थित इव क्षणं स्थित्वा जृम्भालसवदनमुन्मील्य नयने। ततश्चन्द्रापीडः प्रहतमुरजध्वानपटुना स्वरेण स्वेनैव स्मितमधुरमाह प्रियतमाम्॥

पुनस्समागमो यथा—

श्रुत्वेति तस्य गतमुत्सुकतां गताऽसौ रोमाञ्चकञ्चुकमकृत्रिममुद्वहन्ती।
कादम्बरी चरणयोर्निपपात पत्युः आनन्दबाष्पकणशीकरितेक्षणश्रीः॥

यथा वा—

सख्याः पतिं पितृतपोभिरवाप्तदिव्यजीवं कपिञ्जलकरार्पितमुद्वहन्ती।
मन्मण्डलादवतरन्तमखण्डकान्ति सापाण्डुगण्डमवलोकय पुण्डरीकम्॥

इति प्रतिष्ठाः करुणामलार्चिषां अशीतिरष्टौ च विकल्पजातयः।
सहानुभावैर्द्विरशीतिसम्मितै रुपाधयो द्वादश पञ्चसन्धयः॥

तदेतदाबन्धनमात्मजन्मनो निरीतिश्रृङ्गाररसस्य जीवितम्।
पराचकाष्ठा प्रणयस्य जीवितात् प्रियेण यत्प्रेत्य पुनस्समागमः॥

भेदाः पृथक्पृथगमी प्रथमानुराग मानप्रवासकरुणात्मनि विप्रलम्भे।
उक्ता यथामति मयान्यदतोऽभियुक्तै र्युक्त्यानयैव हि बहिस्स्थितमूहनीयम्॥

इति श्रीमहाराजाधिराज श्रीभोजदेव विरचिते
शृङ्गारप्रकाशे करुणरसविनिर्णयो नाम
द्वात्रिंशः प्रकाशः समाप्तः॥



॥ श्रीः ॥

# महाराजाधिराज श्रीभोजदेवविरचिते
# शृङ्गारप्रकाशे
## ॥ त्रयस्त्रिंशः प्रकाशः ॥



अथातो विप्रलम्भापादितप्रकर्षसम्पदः सम्भोगस्य स्वरूपमुपदेक्ष्यामः । कः पुनरयंसम्भोगनाम ? ननूक्तं नायकयोः प्रागसङ्गतयोः सङ्गतवियुक्तयोर्वा मिथस्समागमे प्रागुत्पन्नः तदानीन्तनो वा रत्याख्यः स्थायीभावः अभिलषणीयालिङ्गनादीनामनाप्तौ सत्यां समुपजायमानैः हर्ष, धृति, स्मृति, मतिभिः व्यभिचारिभावैः संसृज्यमानः ऋतूद्यानोपगमनजलक्रीडापर्यन्तोपदंश प्रसाधन-ग्रहणमधुपानेन्दूदयादिभिरुद्दीपनविभावैरुद्दीप्यमानः सविभ्रमभ्रूकटाक्ष विक्षेपालापसम्भ्रमस्मितादिभि रनुभावैरभिव्यज्यमानः ईप्सितमापादयन् जिहासितंजिहासानः प्राप्तप्राप्यप्रकर्षावस्थः सम्भोग-शृङ्गाराख्यांलभते । स चतुर्धा—प्रथमानुरागानन्तरः, मानानन्तरः, प्रवासानन्तरः, करुणानन्तरः, इति । संज्ञा तु नैषापारिभाषिक्येव प्रकृति प्रत्ययोपसर्गविभागकल्पनायामन्वर्थस्यापि विद्य-मानत्वात्—तथाहि—संक्षेप, सङ्कर, सम्पूर्णत्व सम्यक्त्व द्योतक समुपसर्गपूर्वस्य पालनकौटिल्या-भ्यवहारानुभवकर्मणोभुजेः भावे कर्तृकर्तरिचकारके संज्ञायां सर्वकालेषुघञि सम्भोग इति रूपं भवति । कः पुनरिहप्रकृत्यर्थः, क उपसर्गार्थः, कः प्रत्ययार्थः, कोऽथप्रत्ययोत्पत्तिकालः इति—उच्यते—संज्ञाशब्दानांयथाकथंचित् व्युत्पत्तिरिति दर्शने संज्ञानुरोधादेवयोऽर्थोयत्रोपपद्यतेसतत्रैव व्यवह्रियत इति । तत्र प्रकृत्यर्थविभागेचत्वारो धात्वर्थाः पालनादयः । यथा—पृथिवीं भुनक्ति राजा । मूलानिविभुजतिरथः । ओदनंभुङ्क्तेमाणवकः, सुखमुपभुङ्क्ते नागरिक इति । चत्वार-श्चोपसर्गार्थाः । संक्षेपार्थादयः । यथा सम्प्रीयते कथा 'गायकेन, संसृज्यते सूपोलवणेन, संह्रियंते यागउपकरणैः, सम्प्रयुज्यते दयितःकान्तयेति । प्रत्ययार्थविभागेषु पुनरष्टौ प्रत्ययार्थाः । भावोहेतुः षट्चकारकाणि । यथा विलसनं, विलासः, विशतः मनुष्क इतिवेशः, सरति कालान्तरमिति सारः, प्रास्यतेऽसाविति प्रासः, दीर्यन्ते एभिरितिदाराः, दासन्त्यस्मा इति दासाः,

उपेत्याधीयतेऽस्मादित्युपाध्यायः, प्रसीदन्त्यस्मिन्प्रयतमनांसीति प्रसादः, इत्यत्रैव च। प्रत्ययोत्पत्तिकाला भूतो वर्तमानो भविष्यन्नव्यक्तो भूतविशेषो वर्तमानविशेषो भविष्यद्विशेषो व्यक्तविशेषो इति। यथा पाकोऽभूत्, पाको भवति, पाको भविष्यति, पाको भवेत्, पाको बभूव, पाको न भवति, पाको भविता, पाकस्तत्रभूयादिति। अथैतेषां मिथः समवायोपादानापेक्षितप्रथमानुरागाद्यानन्तर्यस्तिर्यगादिसाधारणः सामान्येनैव पालनसंक्षेपाद्यर्थविषयः सम्भोगशब्दार्थो विवक्ष्यते। तथा चतुर्णामपि भुज्यर्थानां चतुर्णामपि समुपसर्गार्थानां चतुर्ष्वपि प्रथमानुरागानन्तरादिषु सम्भोगेषु, चतसृष्वपि सम्भोगावस्थासु, सर्वैरपिप्रत्ययार्थैरविशेषेण सार्वकालिकः सम्बन्धो भवति। यदा पुनरपेक्षितप्रथमानुरागाद्यानन्तर्यं प्रकृष्टनागरिकादिनायकविषयो यथावस्थमवस्थापितसंक्षेपादिक्रमः क्रमेण पालनकौटिल्याभ्यवहारानुभवशब्दवाच्यः सम्भोगशब्दार्थो विवक्ष्यते। तथा यथाक्रमं चतुर्णामपि भुज्यर्थानां चतुर्णामपि समुपसर्गार्थानां, चतसृष्वपि प्रथमानुरागानन्तरादिषु चतसृष्वपि सम्बन्धाभिव्यक्तयनुबन्धप्रकर्षसंज्ञकसम्भोगावस्थासु चतुर्ष्वपि तदानन्तर्येषु यथायथमुपलब्धप्रकृत्यर्थविशिष्टः प्रत्ययार्थोऽभिनिविशत इति। तत्र प्रथमपक्षे सामान्येन सम्भोगार्थविवक्षायामनपेक्षितप्रथमानुरागाद्यानन्तर्यस्तिर्यगादिसाधारणः पालनकौटिल्याभ्यवहारानुभवलक्षणो भुज्यर्थः। सोपसर्गं प्रत्ययार्थोऽभ्यन्तरीकृतभूतादिप्रत्ययोत्पत्तिकाल उपसर्गार्थानुप्रविष्ट चतुरवस्थ उदाह्रियते, तद्यथा—

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः।
ददौ सरःपङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः।
अर्धोपयुक्तेन बिसेन जायां सम्भावयामास रथाङ्गनामा।
गीतान्तरेषु श्रमवारिलेशैः किञ्चित्समुच्छ्वासितपत्रलेखम्।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किम्पुरुषश्चुचुम्ब।
पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि॥

अत्र च प्रियानुवृत्तिविषाणकण्डूयनपानोपच्छन्दनस्वाद्वाहारदानचुम्बनचाटुपरिष्वङ्गप्रीतिदायी सरीसृपमृगपशुपक्षि किंपुरुषतरुप्रविशेषाणामविशेषेण सर्वसाधारणप्रेमपालनार्थो गम्यते। अयमेव च प्रयोजयरञ्जनाय बुद्धिपूर्वकं प्रयुज्यमानः कौटिल्यार्थोऽपि प्रथते। स्वाभिप्रायनिवृत्त्यर्थ-

मुपकल्प्यमानोऽभ्यवहारार्थः सम्पद्यते। प्रेमपारवश्यात्तु स्वयमुपजायमानोऽनुभवशब्दवाच्यो भवति। उत्सर्गोऽपीह पालनार्थमुपकल्प्यमाने संक्षेपार्थमालम्ब्यते, संक्षेपेण हितावानेव प्रेमपालनार्थो भवति। प्रयोज्यरञ्जनाय बुद्धिपूर्वकं प्रयुज्यमाने सङ्करार्थः स्पृशति। अयं चेदबुद्धिसङ्करप्रयोज्याः कथमनुरज्येरन्निति बुद्धयः सङ्कीर्यन्ते। स्वाभिप्रायनिवृत्त्यर्थं प्रवर्तमाने सम्पूर्णत्वमवगाहते। अयं चेह सम्पूर्णतार्थो यदुभयेषामपीन्द्रियाणामानुकूल्येषु स्वेषुस्वेषु विषये गर्धातिशयात्प्रवृत्तिः प्रेमपारवश्यात्स्वयमुपजायमाने सम्यक्त्वार्थमभिनिविशते। इदं च तत्प्रेमवृत्तेः सम्यक्त्वं नाम। येयमालिङ्गनादिष्वनुपदेशपूर्विका स्वाभाविकी स्त्रीपुंसयोरन्योन्यमनुकूलाभ्युपपत्तिरिति। प्रथमादिश्लोकेषु च पालनादिनियमः मधुद्विरेफ इत्यादि। इयं हि सा प्रेमपालनोपनिबद्, यदन्योन्यानुपपत्त्या पकभपानभोजनमानुकूल्यतश्चपरिचर्येति। तत्र प्रथमश्लोके सहचरीचित्तानुवृत्त्या पुष्पैकचषकेमधुपिबन्मधुव्रतः प्रत्याययति। शृङ्गकोटिकण्डूयनजनितसुखनिमीलितलोचनां च वामलोचनामवगम्य परिचर्यायामपर्याप्ततृष्णः कृष्णसारो बोधयति।

अथ द्वितीयश्लोके कौटिल्यं, तद्यथा ददौसरःपङ्कजेत्यादि। इदं च तद्वृत्तेः स्वभावकुटिलत्वमभिव्यक्त्यवस्थायामुन्मिषति, यदेवं नाम प्रेमपरीक्षा प्रवर्तते यद्यहं ते प्रिया तन्मदुच्छिष्टंभुङ्क्ष्व, यद्यहं ते दयितः तद्भुक्तशेषमुपभुङ्क्ष्वेति। तयोरेकमारण्यकस्यारण्यानामशेषभोगेषुणो विशेषसम्पन्नसरोऽवगाह्य विहरतो हृदयवल्लभस्य यूथाधिपतेरनेकपस्य सरोजरेणुसम्पर्कपिञ्जरं कषायसुरभिशीतलं पुराणमैरेयानुकारि वा गण्डूषमर्पयन्ती वाशिता शिक्षयति। द्वितीयमपि द्रमिडीदन्तदारिताई क्रमुकफलपालिकोमलं कषायस्वादुविशदमिन्दुकलाखण्डपाण्डुरमृणालीकवलावशेषमात्मनः प्रियतमायै प्रयच्छन् प्रेमपक्षक्ष्मकवाकोऽध्यापयति।

तृतीयश्लोके अभ्यवहारार्थो यथा—गीतान्तरेष्वित्यादि। सोऽयं रतेरभ्यवहारो नाम। येयमिन्द्रियाणां विषयेषुगर्धातिशयात् प्रवृत्तिः सा चेहगीतध्वनिमनोहरे हर्षगद्गदालापे च श्रमजलतुषारशीतलकोमलपरिपाण्डुगण्डमण्डलाभोगे च मदवशाविघूर्णित नयनेन्दीवरे समुल्लसत्पत्रवल्लीविशेषाहरणे च सुधायमानोष्ठपल्लवास्वादे स्वादितमधुविशेषमधुरकटुकषाये च स्वेदप्रत्यार्द्रीकृत विचित्रपत्त्रवर्णकोद्गन्धौ पुष्पासवसुरभिवदनगन्धवहे च सहचरीमुखेन्दौ किम्पुरुषेणाऽप्यनुज्ञाप्यमाना सर्वेन्द्रियाह्लादमावापयन्ती यथोक्तमर्थज्ञापयति।

चतुर्थश्लोकेऽनुभवार्थो यथा—सम्प्राप्तपुष्पेत्यादि। इयमेवसा रतेरनुभवप्रकर्षसीमा यदासादितप्रकृष्टयौवना यथोक्तगुणवती युवतिरुन्मिषत्सात्त्विकभावा स्वयङ्ग्रहेण दयितमानन्दयति। तत्र च सम्प्राप्तपुष्पस्तबकस्तनीभ्य इतिपदेनरूपारूढयौवनत्वं लक्षयति। स्फुरत्प्रवालोष्ठमनोहराभ्य इत्यनेन च सात्त्विकाविर्भावमभिधत्ते। लतावधूभ्य इत्यादिकं तु यथोपवर्णितार्थानुकूलमेवेति।

अथैतेऽरेघोपसर्गार्थसंक्षेपादयः प्रतिपद्यन्ते। तेषु पालनसंक्षेपो यथा—मधुद्विरेफ इत्यादि। इयमेवच संक्षेपेण प्रतिपालनम्। यदिच्छानिवृत्त्यां सहपानमानुकूल्येन परिचर्येति, तद्येह पूर्वोत्तरार्धयोरुपलभ्यत इति।

पालनसङ्करो यथा—ददौ सरःपङ्कजेत्यादि। सचायं प्रेमपालने कामवामतासङ्करो यदन्यथा लोके प्रसिद्धमन्यथा प्रसाध्यते। तदिहोभयार्धयोः प्रियतमाभ्यामुच्छिष्टदानेन प्रतीयत इति।

पालने सम्पूर्णत्वं यथा—गीतान्तरेष्वित्यादि। सपदसम्पूर्णप्रेमपालनाभ्युपायो यत्प्रवृत्तिषु गुणाविशेषोपलब्धौ प्रयोकुरभिनन्दनम्। तद्येह गीतश्रवणभावितात्मनः किम्पुरुषस्यप्रियामुखापिस्थचाटुतानुमीयत इति।

पालने सम्यक्त्वं यथा—सम्प्राप्तपुष्पेत्यादि। इदं च तत्प्रेमपालने सम्यक्त्वं योऽयं स्वकलत्राया इययोषितः स्वयंग्राहेण पाणिग्रहोपगूहनप्रकारेष्वभिनिवेशः। तद्येह लतावधूनां लतावेष्टितवृक्षाधिरूढाद्यालिङ्गनप्रकारविधानेनानुमीयते, तत्र च लतेव सालं वेष्टयन्ती चुम्बनार्थिनी यन्मुपमयनमयेऽमन्दसीत्कृतमाश्रिताया किञ्चिद्रामणीयकं पश्येत्सलतावेष्टितकम्। चरणेन चरणमाक्रम्य द्वितीयेनोरुदेशमाक्रामयन्ती वेष्टयन्तीवपृष्ठसक्तैकबाहुर्द्वितीयेनांसमवनमयन्ती ईषत्प्रशान्तश्वसितकूजिता चुम्बनार्थमेवाधिरोढुमिच्छेदिति वृक्षाधिरूढम्। स्तनाभ्यामुरःप्रविश्यतत्रैव हारमावेशयेदिति स्तनोपगूढम्। जघनेन जघनमवपीड्यप्रकीर्यमाणकुसुमकेशहस्ता चुम्बननखदशनपदप्रयोजनायोपरिलङ्घयेत्। तज्जघनोपगूहनमिति। चुम्बनार्थित्वचेह स्फुरत्प्रवालोष्ठतयानुमीयते, स्तनभारारोपणं सुजातपुष्पस्तबकावनम्रत्वेन। प्रकीर्यमाणकुसुमकेशपाशादिकं तु लतावधूनां स्वरूपमेवेति।

कौटिल्ये संक्षेपो यथा—मधुद्विरेफ इत्यादि। अत्रचायं प्रेमकुटिलतासंक्षेपो लक्ष्यते। यत्रयत्र चञ्चरीकसहचरी मधुपिपासुः कुसुमे परिभ्रमति तत्रतत्रायमपनुदन्निवैनामनुवर्तमानः परिहासेनेव चरति। सारङ्गोऽपि मन्मथार्तिवर्तिताभिमर्शस्पर्शसुखं निर्मीलिताक्षीं प्रियामग्रेण नखमुखेनेव वल्लभामुल्लिपन्विकषमानः कामवामतां प्रकटयति।

कौटिल्ये सङ्करो यथा—ददौ सरःपङ्कजेत्यादि। अस्यैवार्थः पालनसङ्करेणैव व्याख्यातः। तेनहिपालनं कौटिल्येन सङ्कीर्णम्। इदन्तु कौटिल्यपालनेनेति। एतावांस्तु विशेषः। पालयन् शुचि स्वादु विशदमनिन्दितंचेदस्यमदास्यामीति मन्यमानः प्रियजनाय प्रयच्छति। केवलं कामवामतया तदुच्छेषयति। कुटिलस्तु माभूदशुच्यस्वादुपिच्छिलायपैरप्यनुरागभ्रंश इति तदुपस्कारे विशेषतः प्रयतमानः तथैव पपादयति।

कौटिल्ये सम्पूर्णत्वं यथा—गीतान्तरेष्वित्यादि। अत्रचायं कौटिल्यस्य सम्पूर्णभावः। यदायदासौ गीतेषु प्रयोगविशेषं कर्तुमभिलषति, सा़प्यायासादिव स्विन्नकपोलाभित्तिः पुष्पासवोपयोगघूर्णिते क्रुधेव नेत्रे घूर्णयन्ती विशेषतोऽस्याः अन्तःपुरमुदप्रमोदमुद्दीपयति।

कौटिल्ये सम्यक्त्वं यथा—सम्प्राप्तपुष्पेत्यादि, अत्रचेदं कौटिल्यस्य सम्यक्त्वं स्वभावगतभावस्यापि निष्कारणं धैर्यावलम्बिनः सुभगमानिनो जनस्य प्रियतमायां योषित्युपेक्षा नाम। सात्विह लतावधूषु प्रियतमस्वपक्षाद्दे पल्लवाधरस्फुरणशाखाभुजविनमनोसीतभावास्वपि तरुणामतिस्तब्धा तयानुमीयते तदुपक्षं चैपलौकिकः प्रवादः, यदुत—

व॰ळिवळेळअंगं सहावत॰घेवि रु॰घ॰मि॥

अभ्यवहारसंक्षेपो यथा—मधुद्विरेफ इत्यादि। कः पुनरिहेन्द्रियाभ्यवहारस्य संक्षेपार्थः। येषं अजिपस्य विषयग्राहित्वेन फलावाप्तिकारिणो जिह्वात्वगिन्द्रिययोरभीष्टविषयावाप्तिः इत्योग्रातः श्रुतोपिवा पदार्थस्तावन्नास्वदते, यावन्नास्वादितःस्पृष्टोवाभवति। स्वादनेऽप्ययं विशेषः। यदिदमनङ्गदीपनस्य मधुनः पानं, तस्य चायं सारो यदभीष्टतमया सहैकपात्रे भवति। एवं स्पर्शनेऽपि यतदेव तत्त्वम्। यदुत प्रियाङ्गेन केनचित्संस्पर्शो तत्रचायंविशेषो यदुत्तमाङ्गेन भवति। तस्य चैषा चूलिका, यदेष कण्डूयनव्याजाज्जमाजिवैतां भूयोभूयः परामृशति।

अभ्यवहारसङ्करो यथा—ददौ सरः पङ्कजेत्यादि, अत्रेदमेवाभ्यवहारस्य सङ्कीर्णत्वम्, यदन्योपभुक्तमन्येनोपभुज्यते, तत्रेह पूर्वार्धे स्त्रीप्रयुक्तंव्यत्क्रमेव प्रतीयत इति। अभ्यवहारे संपूर्णत्वं यथा—गीतान्तरेष्वित्यादि। अत्रो पुनरियं सम्पूर्णतार्थः, मुद्देहि चुम्बनमुपकल्प्यमानमोष्ठयोः कपोलयोर्नेत्रयोश्च सम्पूर्णं भवति, तत्र यथा यथोक्तगुणयुक्तेन मत्तकिन्नरीमुखेऽव्यावयवेषु निरवकाशत्वात् तत्कामिनः किम्पुरुषस्य सम्पूर्णत्वं विगाहते, नैवमन्यत्राप्यस्य प्रायेण, यदाह।

बिम्बोष्ठं बहुमनुते तुरङ्गवक्त्रश्चुम्बन्तं मुखमिह किन्नरं प्रियायाः।
श्लिष्यन्तं मुहुरितरोऽपि तन्निजस्त्री मुत्तुङ्गस्तनभरभङ्गभीरुमध्याम्॥ इति॥

अभ्यवहारे सम्यक्त्वं यथा—सम्प्राप्तपुष्पेत्यादि। इदमिहेन्द्रियाभ्यवहारस्य सम्यक्त्वंनाम। यद्याचितोपनतमिष्टवस्तु स्वेच्छयोपभुज्यत इति। तत्रेह तरुणतरुलतावधूपरिष्वङ्गाभियोगव्यतिकरेण सकलमविकलमेवोपलभ्यत इति।

अनुभवे संक्षेपो यथा—मधुद्विरेफ इत्यादि। अयं च संप्राप्यकारिस्तनस्पर्शनोपकल्पितोऽनुभवसंक्षेपविशेषः, यदनुनाथ्यात्मनोनामवल्लभः प्रियतम इव पात्रे कौसुमं मधुपिबति, बल्लभापि

प्रार्थनाप्रादुष्कारेण प्रेयसाऽभ्यर्थ्यमानेव तत्रतत्र स्पृश्यमानः स्पर्शसुखानि वेदयते, तदेह पूर्वोक्तार्थयोः परार्थरूपतया निरूप्यत इति ।

अनुभवे सङ्कीर्णत्वं यथा—दृशौ सरः पङ्कजेत्यादि । इहाभ्यवहारस्यैव मनसानुसन्धानमनुभवतस्यचेतसङ्कीर्णत्वं चेयमन्या प्रियवधूप्रयुक्तोपचारानुभवरूपता प्रियप्रसादीकृतस्योपभुक्त हार्यसम्भावनानुभवरूपता च पूर्वोक्तार्थयोरभिव्यज्यत इति ।

अनुभवे सम्पूर्णत्वं यथा—शीतान्तरेष्वित्यादि । अत्रैवं ह्यनुभवस्य सम्पूर्णता, यद्कालपुष्पाकरावतारे पुष्पितलतागृहोपगमनया पुष्पासवोपयोगमत्तया पुष्पहारपारवश्यप्रतीतया स्वलङ्कृतया च स्वाधीनपतिकया किन्नरकामिन्या एवंनामप्रियानुरागाश्लिष्टयो भूयत इति ।

अनुभवस्य सम्पक्तं यथा—सम्प्राप्तपुष्पेत्यादि । अत्रेदमनुभवस्य सम्पक्त्वं । यदुत दयिता नायकस्य रताद्यायासात्परिश्रममुपलभ्य रागस्यचाद्युपशममनुमतानेन साहाय्यं दद्यात्, तत्र च प्रकीर्यमाण केशकुसुमाभ्यामाविच्छिन्नहासिनी घनश्रसंसर्गार्थं स्तनाभ्यामुरःप्रविश्य पीडयन्ती पुनःपुनर्नमयन्ती याश्चेष्टाः पूर्वमसौ दर्शितवांस्ता एव प्रतिकुर्वती, पातिता प्रतिपातयामीति हसन्ती तर्जयन्ती प्रतिघ्नन्ती च ब्रूयात्, पुनश्च व्रीडां दर्शयेत् श्रमं विरामामीप्सां चेति । तदेह पूर्वमधोभूत्वानन्तरमुपरिवर्तिनीभिः केशायमानपरिम्लानकुसुमालिपटलाभिः, स्फुरत्प्रवालोष्ठदर्शितच्छदसत्कुसुमहासाभिः स्तबकपयोधरभरप्रवेशपीडितनामितकान्तशाखाभुजान्तराभिः मलयमारुतान्दोलितचालितकोमलविटपाभिः स्रंसमानकुसुमचालितपातितपत्रमर्मराभिः पादस्तैमित्यनिश्चलानिश्चलवसन्तवनलतावधूभिः प्रयुज्यमानमकाण्ड एव तरुणप्रकाण्डैरमृतरसवर्षायमाणमनुभूयत इति । भेदापालनकौटिल्याभ्यवहारानुभूतिभिः दर्शिता कालिदासेन प्रेमप्रस्थानपद्धतिः ।

अथ द्वितीयपक्षे विशेषेण सम्भोगार्थविवक्षायामपेक्षितप्रथमानुरागाद्यानन्तर्यः प्रकृष्टनागरिकादि नायकविषयः पालनकौटिल्याभ्यवहारानुभवलक्षणोपभुज्यार्थः स्वोपसर्गप्रत्ययार्थोऽभ्यन्तरीकृतभूतादिप्रत्ययोपासिकालः कालविशेषोऽनुप्रविष्टचतुरस्य उदाह्रियते ।

तत्र च चतुर्धोदाहृतिप्रविभागो भवति । प्रकृत्यर्थः, प्रकृत्यर्थविशेषणं च, प्रत्ययार्थः, प्रत्ययार्थविशेषणं च । प्रकृति प्रत्ययार्थः प्रकृतिप्रत्ययार्थविशेषणं च, आनन्तर्यार्थः आनन्तर्यार्थविशेषणं चेति । तत्र प्रकृत्यर्थविभागे प्रथमानुरागानन्तरे भुजिः पालनार्थः । प्रकृत्यर्थविशेषणं समुपसर्गः संक्षेपार्थः । तत्रहि नायकाभ्यां परस्परालम्बनविभावेभ्यः समुत्पन्नरतिः संक्षिप्तैरेव शयनोपक्रमादिभिरुपचारैः व्यलीकविप्रियादिपरिहारैश्च पाल्यते, न तत्रालिङ्गनादीन् समुच्चयेन प्रयुञ्जीत । न च प्रसह्यकाञ्चिदाचरेत् । कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमैस्तास्त्वनधि-

गतविश्वासैः प्रसभमुपक्रम्यमाणाः स्त्रियः सम्प्रयोगविद्वेषिण्यो भवन्ति । तदुक्तम् ।

सहसा चाप्युपक्रान्ता बाला चित्तमजानता ।
पुरुषद्वेषिणी वास्याद्विरक्तावा ततोऽन्यथा ॥

न चैतामुपेक्षेत—

अतिलज्जान्वितेत्येवं यस्तु कन्यामुपेक्षते ।
सोऽनभिप्रायवेदीति पशुवत्परिभूयते ॥

सर्वा एव हि कन्या पुरुषेण प्रयुज्यमानमभियोगं विषहन्ते, किन्तु लज्जया परिलघुमिथ्यामपि वाचं न मिथयन्ति । किञ्च—

अत्यौत्सुक्ये महतिदयितप्रार्थनाभिः प्रयाताः कांक्षन्त्योऽपि व्यतिकरसुखं
कातराः स्वाङ्गदाने । आबाधन्ते न खलु मदनेनैव लज्जास्पदत्वात्
आबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः ॥

तत्र च—

हरति रुचिरं गाढाश्लेषे यदङ्गकमाकुला स्थगयति तथा
यत्पाणिभ्यां मुखं परिचुम्बितम् । यदपि बहुशः पृष्टा
किञ्चिद्ब्रवीत्यपरिस्फुटं रमयतिरतान्तेनैवासौमनोऽभिनवा वधूः ॥

मानानन्तरे भुजिः कौटिल्यार्थस्तद्विशेषकः, समुपसर्गः सङ्करार्थः । तत्र हि प्रणिपातोपसान्त्वनादिदृदयाकर्षणप्रकारकौशलोद्ग्रथिते बलवदुत्कण्ठावेशवशाद्विधूते वा मानग्रन्थावमन्थरमुन्मिषन्ती तत्तद्वासनाविशेषदोषानुवृत्त्युपजनितैर्व्यलीकविप्रियादिस्मरणैः सपत्नीनामग्रहणगोत्रस्खलनादिभिश्च प्रतिहतारतिः पुनःपुनः कुटिलतामापद्यते । यदाह, श्वसितकम्पितपयोधरा सकषायैरेव वाक्यैर्नायिका नायकं निस्तुदन्ती शयनीयं गच्छेत् । तत्रचालिङ्गनादीनामुपचाराणामुपालम्भादिभिः सङ्कीर्णः प्रयोगो भवति । यथा—

मुहुरविशदा विस्रम्भार्द्राःमुहुर्मुहुरस्थिराः मुहुरसरलाः प्रेमप्रह्वा
मुहुः स्मृतमन्यवः । वितथशपथोपालम्भाङ्का मुहुः
कृतसन्धयः परिववृधिरे निष्पर्यन्ता मिथो मिथुनोक्तयः ॥

यद्यपि कार्यगौरवाद्व्यलीकमप्युपलभ्य नोपालभते तदापि सुप्रकाशमानापकालुष्योद्भूतनूतनाच्छविभाजा सव्याजाकारगूहनोपगूहनादयः सङ्कीर्यन्ते । रतिश्चान्तराशयेन कुटिलीभवति ।

कथमपिकृतप्रत्यापत्तौ प्रियेस्खलितोत्तरे विरहकृशया कृत्वा
व्याजं प्रकल्पितमश्रुतम् । असहनसखीश्रोत्रप्राप्तिप्रमोदससम्भ्रमं
विवलितदृशा शून्येगेहे समुच्छ्वसितं ततः ॥

प्रवासानन्तरे भुजिरभ्यवहारार्थः उपसर्गः सम्पूर्णार्थः, तत्र हि चिरकालमनुपभोगादत्यन्त-मुपचिते प्रेमराशौ चक्षुरादीनां स्वेषु स्वेषु विषयेषु गर्धातिशयात्सम्पूर्णं एवाभ्यवहारो भवति, समुच्चयेन चालिङ्गनादयः प्रयुज्यन्ते ।

वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥

यथा च—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ मासानन्यान् गमय
चतुरो लोचने मीलयित्वा । पश्चादावां विरहगुणितं तंतमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासुक्षपासु ।

करुणानन्तरो धातुरनुभवार्थः । उपसर्गश्च सम्यगर्थः । तत्र हि तैस्तैर्व्यतीतसंविधान-कविशेषैरसमुत्पन्नपरमविस्रम्भावाप्तिप्रकर्षा रतिः परप्रकर्षमारोहन्ती सम्यगनुभूयते, यथा—

मृतेति प्रेत्य सङ्गन्तुं यथा मे मरणं मतम् ।
सैवावन्ती मया लब्धा कथमत्रैव जन्मनि ॥

यथा च—

कण्ठे हारलतायोग्ये येन पाशस्तवार्पितः ।
गृहीतः सापराधोऽयं मुच्यतेस कथं करः ॥

ननु याऽयस्यावस्थादेरेकस्यापि प्रथमानुरागानन्तरादेः सम्भोगस्यायमर्थो भवति । प्रथमानन्तरो हि प्रथमं रतिरुत्पद्यते । उत्पन्ना च नायकाभ्यां प्रियाचरणविप्रियाकरणाभ्यां पाल्यते । तत्र च संक्षिप्तानामेवालिङ्गनादीनां विकल्पतः प्रयोगो भवति । ततः प्रेमगतेः स्वभावकुटिलत्वाद्द्वितीयाव-स्थायां रतिः कुटिलतामालम्बते । सङ्कीर्णश्च तत्रोपचाराणां प्रयोगः सङ्कीर्णाश्चानुभावा भवन्ति ।

तत्रोद्गूनायां कामधामतायां सुलभामवमन्यते दुर्लभामाकाङ्क्षतीति प्रायोवादात् परंप्रकर्षमारोहन्ती रतिस्तृतीयावस्थामभ्यवह्रियते, समुच्चयेन चालिङ्गनादयः प्रयुज्यन्ते, एवं च सासम्पूर्णत्वमासादयति। चतुर्थावस्थायां तु विस्रम्भोत्पत्तेः परं प्रकर्षमापन्नानुभूयत एव। नतत्रोपचारः कश्चिदप्याद्रियते। एवमस्याः सम्यक्त्वं भवति। एवं मानानन्तरादिष्वपि संक्षिप्ता पाल्यते। सङ्कीर्णाकुटिली भवति। सम्पूर्णाभ्यवह्रियते। सम्यग्भूतानुभूयत इति। ततः कथमुच्यते, संक्षेपपालनोपसर्गाद्यातूप्रथमानुरागानन्तरे सङ्करकौटिल्यार्थौ मानानन्तरे सम्पूर्णताभ्यवहारार्थौ प्रवासानन्तरे सम्यक्त्वानुभवार्थौ करुणानन्तर इति। उच्यते। यद्यपि संक्षेपतः पालनमन्यत्रापि भवति, तथापि यदा प्रथमानुरागानन्तरे मुग्धा वधूर्विस्रम्भणादाने तदुपयुज्यते नैवमन्येषु, यद्यपि च वारितवामत्वारकामस्य कौटिल्यमन्यत्रापि जायते तथापि यथाव्यलीकप्रियादिस्मरणैर्मानानन्तरेणैवमन्येषु, अभ्यवहारोऽपि यथास्वमिन्द्रियाणामुभयेषामपि विषयेषु गर्धातिशयात्प्रवृत्तिः, स यथा परस्परमुत्कण्ठितयोः प्रवासानन्तरे सम्पूर्णो भवति नैवमन्येषु। अभ्यवहारस्यैवतु मनसानुसन्धानमनुभवः यथा—समुत्पन्नपरमविस्रम्भयोः करुणानन्तरे सम्यग्भवति। नैवमन्येष्वभिप्रायेणोक्तम्। यथाक्रमं चतुर्णामपि धात्वर्थानां चतुर्णामपि चोपसर्गार्थानां चतुर्ष्वपि प्रथमानुरागानन्तरादिषु सम्भोगेषु सर्वैरपि प्रत्ययार्थैः सार्वकालिकः सम्बन्धो भवतीति।

किञ्च बहूनां सम्भवेर्थानां सर्वे यथोपकारिणः। संसर्गे कश्चिदेषां तु प्राधान्येन प्रतीयते। तेन प्रथमानुरागानन्तरादिषु धातूपसर्गार्थसम्प्लवसद्व्यवस्थाया न विरुध्यत इति।

ननु च भुजपालनाभ्यवहारयोः। भुजिः कौटिल्य इति भिन्नेवार्थेषु भुजिः स्मर्यते स कथमनुभवार्थोऽपि भवतीति प्रायेत। आचार्यप्रवृत्तिर्ज्ञापयति। यदयं भुजोऽनवन इत्यनवनार्थे वृत्तेरस्यात्मनेपदंनिवर्त्यानवनार्थवृत्तेर्यथाप्राप्तमुभयपदमेवाभ्यनुजानाति। तेन मन्यामहे, सर्वेष्वयमवस्थार्थेषु वर्तत इति। केपुनरवस्थार्थाः। येष्वेते गणकाराः पठन्ति, अवरक्षणगतिकान्तिप्रीतितृप्त्यवगमनप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति, स एवमपि भुजेरनुभवार्थ इति। कुतएतदुच्यते। य एव ते षोडशास्यर्थरक्षणादयः तेषां चत्वारः पालनं चत्वारः कौटिल्यं चत्वारोऽभ्यवहारं चत्वारोऽनुभवमभिनिविशन्ति। तत्र रक्षणं क्रियेच्छास्वाम्यर्थः प्रार्थनमिति। पालने हिंसादीप्तिनिहनं भारभृत्य इति, कौटिल्ये श्रवणमालिङ्गनं प्रीतिस्तृप्तिरिति, अभ्यवहारेऽवगमः प्रवेशो गतिरवाप्त इत्यनुभवेऽन्तः षोडशाप्यवस्थार्थाश्चतुर्ष्वपि भुज्यर्थेषु पालनादिषु समाविशन्ति। तथाहि। लब्धपरिरक्षणं रक्षितविवर्धनं विसृष्टोपयोगः अलब्धप्रतीक्षा चेति, पालनानि, यथा पृथिवीपालयति प्रजाःपरिपालयति राज्यमनुपालयति फलं प्रतिपालयतीति। तानि च रक्षणं क्रियेच्छा स्वाम्यर्थः प्रार्थनमित्येव भवंति, तथाहि। लब्धाऽविनाशार्थीरक्षति रक्षितोपचयार्थी कर्तुमभिलषति यथावदुपयोगार्थी स्वीकरोति, अलब्धलाभार्थी

याचत इति । वैपरीत्यं वैयात्यं वैदग्ध्यं वैचित्र्यंचेति । कौटिल्यानि यथा—कुटिलं दैवं, कुटिला दासी, कुटिल आलापः, कुटिलं पत्रमिति । एतानि च हिंसा दीप्तिः नहनं भावबृद्धिरित्येव भवन्ति । तथाहि, वैपरीत्येन हिनस्ति, वैयात्येन दीप्यते, वैदग्ध्येन दहति, वैचित्र्येण भावं वर्धयतीति । श्रद्धान्वितयोर्नितान्तमासक्तिरपर्याप्तता कृतार्थत्वमित्यभ्यवहारार्थाः, यथा सतृणमभ्यवहरति, प्रस्थमपहरति, सैन्यान्यपहरति । एते च श्रवणमालिङ्गनं प्रीतिस्तृप्तिरित्येव भवंति । तथाहि । श्रद्धालुः शृणोति, आसक्तिमानालिङ्गति, अपर्याप्तः प्रीयते, कृतार्थस्तृप्यतीति । सम्यग्ज्ञानं क्रियाध्यवसायः कार्यानुष्ठानं फलाधिगमश्चेत्यनुभावाः । यथा प्रियमनुभवति, प्रियार्थमनुभवति, प्रेमानुभवति, प्रेमार्थमनुभवतीति । एते चावगमप्रवेशागत्यवाप्तय एव भवन्ति । तथाहि । सम्यग्जिज्ञासुरवगच्छति । अध्यवसायार्थी प्रविशति । अनुतिष्ठासुः क्रमते । फलाधिकमार्थीतमवाप्नोतीति । चतुर्षु चतुर्षु वा रक्षणादिषु अवस्थेषु क्रमेण वर्तमानाः पालनादयो वर्तन्ते ।

ननु रक्षणं तावत्पालनमेव । रक्षपालनमिति वचनात् । क्रियेच्छा कौटिल्यं कुटिलं हि कृतमकृतमिदं . . . से यथा कृती कृतहस्तः कृतास्त्रः कृतास्त्रमिति । स्वाम्यर्थोऽभ्यवहारः यतो यद्दाति तदेवास्य स्वमिष्यते याचितमनुभवः, याचितं खलु पश्चाद्भवतीति प्रथमा आवृत्तिः । एवं हिंसा पालनं दीप्तिः कौटिल्यं दहनमभ्यवहारः भाववृद्धिरनुभव इति । कथं हिंसापालनं, वामत्वात्कामस्य कलहरूपं सुरतमाचक्षते, कथं दीप्तिः कौटिल्यं, कुटिलो लोकेदीप्त इत्युच्यते ऋजुः प्रशान्त इति । कथं दहनमभ्यवहारः, दहन् लोकेऽभ्यवहरतीत्युच्यते, यथा जगज्जिघत्सन्तमिवान्तर्वह्निमिति । कथं वा वृद्धिरनुभवः, साक्षादनुभूयमानत्वादिति द्वितीया आवृत्तिः । एवं श्रवणं पालनमालिङ्गनं के . . . प्रीतिरभ्यवहारस्तृप्तिरनुभव इति । पालयिता हि शुश्रूषते, कुटिल आमर्दं करोति । अभ्यवजिहीर्षुः प्रीयते, अनुबुभूषुस्तृप्यतीति तृतीया आवृत्तिः । एवमवगमः पालनं प्रवेशः कौटिल्यं गतिरभ्यवहार इति । यतोऽवगच्छेत्पालयति प्रवेशकामो मज्जीभवति अन्तराकाममभ्यवहरतीति । अवाप्नुवन्ननुभवतीति चतुर्थ्यावृत्तिः । यथा चैतद्रक्षणादयः पालनादीनां विशेषास्तथा रक्षणादीनामपि निरोधादयः सम्भवन्ति । यथाश्रेर्माणवकं रक्षतीति संक्षेपसङ्करादयश्चोपसर्गार्थाः सर्वेष्वपि प्रत्येकमवगन्तव्या इति । एवं च पालनादिवदनुभवार्थोऽपि भुजेः सिद्धो भवति, यदर्था अपि च धातवो भवन्ति । तद्यथा—इणः अनवस्थाने दृष्टः, अवस्थानेऽपि . . . ध्रियते । यावदेकोऽपि रिपुस्तावत्कुतः सुखमिति पुभिभणे दृष्टः, अभिभणेऽपि दृश्यते । अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवाय इति । जृष्वयोर्हानौ दृष्टः स्तुतावपि दृश्यते, मृदाजरित्रेवद्रस्तवान इति । वपिः करणे दृष्टः, छेदनेऽपि दृश्यते । मन्यन्ते असन्निवपन्तु सेना इति । ईड स्तुतौ दृष्टः, प्रेरणेऽपि दृश्यते । वायुर्वा इतो वर्षमीड इति । करोतिरभूतप्रादुर्भावे दृष्टः । गतोऽन्यत्रापि दृश्यते । "घटे कुर्व

कटे कुरु अश्मानमितः कुरु पादौ कुरु पृष्ठं कुरु माकुरु उदरं खेदोऽहीयत इति। एवं भुजिरनुभवार्थोऽपि भविष्यति। को वा न धातुरनुभवार्थः, यतो व्रजति पचत्यास्ते शेत इत्यप्युक्तव्रज्यादयोऽनुभूयत इति प्रतीयन्ते। कथं भुजिरवत्यर्थ इत्येव नोक्तम्, यथैवोक्तः परस्मैपदात्मनेपदविप्रयोगो यथा स्यात्, अवनातिरिक्ताश्चार्या यथा प्रतीयेरन्। के पुनस्ते। पालनं यतः पातेर्णिचि लुगागमे च पालनमिति भवति। अवनमित्यवतेः अण्यन्तस्य। कथं तर्हि ब्रैड्पालने रक्षपालन इति क्वचिदयं विवक्षितण्यर्थो नियच्छति नियमयतीतिवत् कर्तृव्यापारमात्रं भूते, तत्र हेतुव्यापारविवक्षायां भुजिः पालनार्थो भवति। लक्षणाद्यवस्थाविशेषेण कर्तृव्यापारविवक्षायामपि पालनार्थ एव। यदा तु रक्षणक्रियेच्छा स्वाम्यर्थः प्रार्थनेषु रक्षणादिविशेषेण वर्तते तदा कर्तृव्यापारमात्रविवक्षायामवनार्थो भवति। एवं मूर्तिमतां दिङ्निमित्तकः संस्थानविशेषः कौटिल्यं तदुपचारादमूर्तेष्वपि व्यवह्रियते। तत्र यथोभयरूपे भुजिर्वर्तते तदा कौटिल्यार्थः, यदापि हिंसादिष्वविशेषेण तदापि कौटिल्यार्थ एव। यदापि हिंसादीनिरहनभावबुद्धिषु तद्विशेषेषु पात्यपहरणातिप्ररोचनादिषु विशेषेण वर्तते तदा अवनार्थो भवति। मुखेन खाद्यादेः कोष्ठान्तः प्रवेशनमभ्यवहारः। स उपचाराच्चक्षुरादीनां रूपादिग्रहणेऽपि वर्तते। तत्र यत्र भुजेरशित . . . खादिषु वृत्तिस्तदायमभ्यवहारार्थो भवति। इन्द्रियार्थसन्निकर्षोत्पन्नस्य ज्ञानसुखदुःखादेः संवित्तिरनुभवः। स उपचारादर्थज्ञानादपि व्यपदिश्यते। तत्र यदोभयरूपेऽपि भुजेर्वृत्तिस्तदायमनुभवार्थो भवति, यदाप्यवगमादिष्वविशेषेण वर्तते तदाप्यनुभवार्थ एव। यदा त्वधगमप्रवेशगत्यवाप्तिषु तद्विशेषेष्वपि परामर्शादिषु विशेषेणास्य प्रवृत्तिस्तदावनार्थो भवति। कथं तर्हि भुजिः पालन कौटिल्याभ्यवहारानुभवेष्विति पठ्यते, भुज्यर्थस्य तन्त्रावाप एवविभागो न स्यात्, द्विविधं हि सम्भोगशास्त्रं तन्त्रमावापश्च। तन्त्र्यन्ते जन्यन्ते रतिप्रीतिविशेषा येन तन्त्रमभ्यवहारः। आसमन्तादवाप्यन्ते लभ्यन्ते रतिप्रीतिप्रकर्षहेतवः आलिङ्गनादयो येन स आवापः, पालनमनुभवकौटिल्ययोस्त्वनिष्पादितत्वादेतयोरेवानुप्रविशतः। अभ्यवहरतो ह्यवश्यमनुभवतो भवति। पाल्यमानस्य तु कौटिल्यं यदा अनुभवोऽप्यभ्यवहार एव। यदाहाराभ्यवहारस्यैव मनसानुसन्धानमनुभवः, कथं तर्ह्यसौ फलभूतो रतिप्रीतिविशेषाणामुत्पत्तिहेतुर्भवति। लब्धास्वादस्य प्रीतिहेतावनेनैव प्रवर्त्स्यमानत्वात्पारम्पर्येणापि च कारणं कारणमेव। उक्तं च।

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥

एवं कौटिल्यमपि पालनमेव। कथं पुनः कौटिल्यं पालनं भवति। यतो वैपरीत्यं वैपाल्यं वैदग्ध्यं वैचित्र्यं चेति कौटिल्यानि। तत्र वामशीलत्वात्कामस्य वैपरीत्येनैव वर्धते।

तथा हि। सुलभामवमन्यते दुर्लभामाकांक्षतीति। प्रायोवादः कलहरूपं च सुरतमाचक्षते, वैयात्यमपि धर्मयत्येव। यदाह

अन्यदा भूषणं पुंसां शमो लज्जेव योषिताम्।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥

वैदग्ध्यात्तु रागवृद्धेर्हेतुरेव, यदाह, वैचक्षण्ययुक्ताश्च गणिकास्तत्कामिनश्च परस्परस्य प्रार्थनीया भवन्ति। तेन वैचित्र्यमपि व्याख्यातम्, आह च, भवति हि रागेऽपि वैचित्र्यापेक्षा, वैचित्र्येण च परस्परस्य रागो जनयितव्यः। अन्येष्वपि धनुर्वेदादिषु वैचित्र्यमपेक्षते, किंपुनरिहेति। तदेवं भुजपालनाभ्यवहारयोः . . . अनेनैवासिद्धे भुजेः कौटिल्य इत्यपि विकरणानुबन्धोपग्रहादि-प्रयोजनार्थमेवेति प्रतिपत्तव्यम्। किंपुनरमीषु सर्वेष्वप्यर्थेषु भुजेः प्रयोगो दृश्यते, बाढम्, तत्र हेतुव्यापारपालने भुजिर्यथा—

शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः।
अम्बरीषश्च नाभागो बुभुजाते चिरं महीम् ॥

रक्षणाद्यविशेषेण कर्तृव्यापारो यथा—

पौत्रः कुशस्यापि कुशेशयाक्षः ससागरां सागरधीरचित्तः।
एकातपत्रां भुवमेकवीरः पुरार्गलादीर्घभुजो बुभोज ॥

भवनविशेषेषु रक्षणं यथा—

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां
नगरपरिघप्रांशुबाहुर्भुनक्ति। आशंसन्ते सुरयुवतयः
सक्तवैरा हि दैत्यैरस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥

क्रियेच्छायां यथा—

इदमुपनतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं
स्यान्नवेत्यव्यवस्यन्। भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥

स्वाम्यर्थे यथा—

विपुलमतिभिः कैरप्येतज्जगज्जनितं पुरा विधृतमपरैर्दत्तं
चान्यैर्विजित्य तृणं यथा। इहहि भुवनान्यन्ये धीराश्चतुर्दश
भुञ्जते कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः॥

याचने यथा—

लब्धपालनविधौ न तत्सुतः खेदमाप गुरुणा हि मेदिनी।
भोक्तुमेवभुजनिर्जितश्रिया न प्रसादयितुमस्य कल्पिता॥

कौटिल्ये यथा—

अस्मिन्नीषद्वलितविषमस्तोकविच्छिन्नमुग्नः किञ्चिल्लीनोपचितविनतः
पुञ्जितश्चोत्थितश्च। धूमोद्गार स्तरुणिमहिषस्कन्धनीलो दवाग्नेः
स्वैरं सर्पन् सृजति गगने गत्वरान्पत्रभङ्गान्॥

हिंसाद्यविशेषो यथा—

श्लिष्टचन्दनविशेषकभक्तिर्भ्रष्टभूषणकदर्थितमाल्यः।
सापराधइव मुण्डनमासीदात्मनैव सुदृशामुपभोगः॥

अवनार्थेषु हिंसायां यथा—

प्रातरेत्य परिभोगशोभिना दर्शनेन कृतखण्डनव्यथः।
प्राञ्जलिः प्रणयिनीं प्रसादयन् सोढुनोद्ग्रहणमन्थरः पुनः॥

दीप्तौ यथा—

प्रेक्ष्य दर्पणतलस्थमात्मनो राजवेषमतिशक्रशोभिनम्।
विप्रियेण स तथा यथा युवा व्यक्तलक्ष्मपरिभोगमण्डनम्॥

दहने यथा—

आबद्धव्रणमिन्दुबिम्बविशदे राधाकपोलोदरे दंशः कृष्णमहा-
भुजङ्गजनितो दीर्घां मुदं वः क्रियात्। यं दृष्ट्वैव विसूत्रसन्धिभि-
रभिग्लानैः क्षणादङ्के रामुह्यन्विषवैशसीवदृदशे सर्वोऽपि गोपीजनः॥

भाववृद्धौ यथा—

मुग्धेऽस्मिन्परिणाहिनि स्तनयुगे मुक्ताकलापो वशां दिष्ट्या न स्मरति स्वजन्मवसतिं कुम्भस्थलीलालनः । इत्थं केलिभुजङ्गनर्मवचसासाचि-स्मितज्योत्स्नया सव्रीडं मुखमावृणोति सुतनुश्चीनांशुकस्वच्छया ॥

अभ्यवहारे यथा —

किं मौर्ख्यमश्रेयसिकार्यबुद्धि र्ज्ञानस्यकिंलक्षणमप्रसादः ।
कोऽत्यन्तबन्धुःपुरुषस्यबन्धुः किंस्वादुभुङ्क्ते सहयत्सुहृद्भिः ॥

श्रवणाद्यविशेषो यथा—

अनाघ्रातंपुष्पं किसलमलूनंकररुहै रनाविद्धंरत्नं मधु
नवमनास्वादितरसम् । अखण्डं पुण्यानां फलमिव च
तद्रूपमनघं न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

श्रवनार्थेषु श्रवणो यथा—

वीणयाच निनदेनचवेणोः केकयाच कलकण्ठगिरा च ।
सीत्कृतैश्च मणितैश्च वधूनां भुञ्जते श्रुतिसुखानि युवानः ॥

आलिङ्गने यथा—

तत्तस्यरेजेऽरिगदासहिष्णुवक्षः प्रियारत्युपभोगसाक्षि ।
शिलातलं श्रीमदिव द्विपेन्द्रै र्दन्ताभिघातोल्लिखितं महाद्रेः ॥

प्रीतौ यथा—

दिग्दन्तिनः शैलतटायतेषु येषां प्रियालिङ्गनलालितेषु ।
युद्धापदेशेन भवन्तिवक्षस्स्ववासवप्रप्रणयोपभोगाः ॥

तृप्तौ यथा—

जयतियदुपतेरनेककान्तास्तनपरिभोगरसज्ञकण्ठमालम् ।
मुरनरकगदाभिघातबन्धु प्रविसृतकौस्तुभरश्मिशोभि वक्षः ॥

अनुभवे यथा—

गुणेष्वरागो व्यसनेष्वनादरो रतिः सुनीतेषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकां सितातपत्राभरणां नृपश्रियम् ॥

अवगमाद्यविशेषे यथा—

अन्यां युवतिमगत्वा सुभग न विज्ञायते विशेषोऽस्याः ।
येन न भुक्तं निम्बं द्राक्षागुणवित्कथं स स्यात् ॥

अवनार्थेऽप्यवगमे यथा—

असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः ।
दिवापि जालान्तर चन्द्रिकाणां नारीसुखस्पर्शनखानि भुङ्क्ते ॥

प्रवेशे यथा—

तथात्मसम्पन्नमनिन्दितात्मा कृत्वा युवानं युवराजमेव ।
सुखानिसोभुङ्क्तसुखोपरोधिवार्तं हिराज्ञामवरुन्धिवृत्तम् ॥

गतौ यथा—

अङ्काद्ययावङ्कमुदीरिताशीरसा मण्डनान्मण्डनमन्वभुङ्क्त ।
सम्बन्धभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं जगाम ॥

अप्राप्तौ यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोलाद्विसंश्रयां प्रीतिमवाप लक्ष्मीः ।

एवं पालनादिविशेषेष्वपि । तत्र हेतुपालनविशेषापेक्षणं यथा—

स विसृष्टस्तयेत्युक्त्वा भ्राता नैवाविशत्पुरम् ।
नन्दिग्रामगतस्तस्य राज्यन्यासमिवाभुनक् ॥

रक्षणाद्यविशेषविशेषः करग्रहणं यथा—

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ।
तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा ॥

रक्षणविशेषे निरोधो यथा—

अकालसन्ध्यापरिभोगपाण्डुरः क्षपाक्षयक्षामकपोलचन्द्रमाः ।
रतोत्सवायासविशेषशोभिनो वधूमुखस्यानुचकार विभ्रमम् ॥

क्रियेच्छाविशेषोऽभ्यासनं यथा—

असूत सा नागवधूपभोग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि गोत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥

स्वाम्यर्थविशेषो दास्यं यथा—

अथाङ्गदश्लिष्टभुजं भुजिष्या हेमाङ्गदं नाम कलिङ्गनाथम् ।
आसेदुषी सा जितशत्रुपक्षं बालामबालेन्दुमुखीं बभाषे ॥

याचनविशेषोऽभिलषणं यथा—

तं रागबन्धेष्ववितृष्णमेव भोगेषु सौभाग्यविशेषभोग्यम् ।
विलासिनीनामरतिक्षमापि जरा वृथा मत्सरिणी जहार ॥

प्रकटकौटिल्यविशेषो वलनं यथा—

अस्यान्तिकमुपयान्ती शिशुना स्तनपायिना मृगी रुद्धा ।
तामयमनन्यदृष्टिर्भुग्नग्रीवो विलोकयति ॥

गौणकौटिल्यविशेषो विश्वसनं यथा—

पद्भ्यामूरुयुगं विभज्य भुजयोर्मध्यं निपीड्योरसा पार्श्वावभ्यधिकं
विदार्य नखरैर्दन्तैर्विलूयाधरम् । सुप्तानप्यवबोध्य युष्मदहिता भूयोऽपि
भुङ्क्ते वने किं कान्तासुरतैषिणी नहि नहि व्याघ्री करालानना ॥

हिंसाविशेषो वैपरीत्यं यथा—

दशनपदमतिस्फुटं विभाति स्फुरति तनुः श्रमवारिसिक्तमास्यम् ।
अवितथमभिधत्स्व कामिनि त्वां कुटिलगतिर्ननु दष्टवान् भुजङ्गः ॥

दीप्तिविशेषो वैयात्यं यथा—

महाभुजङ्गश्चैवेष शेषादिभ्यो विशिष्यते ।
पश्यत्यन्यान् दशत्यन्यानन्यान्जीवाद्विमुञ्चति ॥

दहनविशेषो वैदग्ध्यं यथा—

नीलकण्ठपरिमुक्तयौवनां तां विलोक्य जननी समाश्वसीत् ।
भर्तृवल्लभतया हि मानसीं मातुरस्यति शुचं वधूजनः ॥

भावबृत्तिविशेषो वैचित्र्यं यथा—

विपुलतरनितम्बाभोगरुद्धे रमण्याः शयितुमनधिगच्छन्
जीवितेशोऽवकाशम् । रतिपरिचयनश्यन्नैवतन्त्रः कथं
चिद्गमयति शयनीये शर्वरीं किं करोमि ॥

अभ्यवहारविशेषः फलवैयधिकरण्यं यथा—

विजयस्त्वयि शयनायाः साक्षीभूते च दृश्यताम् ।
फलभाजि समक्षोक्ते बुद्धेर्भोग इवात्मनि ॥

गौणोऽभ्यवहारविशेषो निधुवनं यथा—

तस्य सावरणदृष्टसन्धयः कामवस्तुषु नवेषु सङ्गिनः ।
वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः समागमाः ॥

श्रवणविषयो घ्राणदर्शनं यथा—

मुदितयुवमनस्काः तुल्यमेव प्रदोषे मुदमददुरहयः कल्पिता भूषिताश्च ।
परिमलरुचिराभिर्न्यक्कृतास्तु प्रभाते युवतिभिरुपभोगान्नीरुचः पुष्पमालाः ॥

आलिङ्गनविशेषश्चुम्बनं यथा—

ताम्बूलबहलरक्तः प्रियमुक्तो धूसरः सपर्यन्तः ।
बालाधरोऽधिरोहति कुसुमरुचं काञ्चनारस्य ॥

प्रीतिविशेषः प्रकाशाभिलषणं यथा—

जननयनमधुव्रतोऽपभोग्या भवतु विलासिनिते मुखाम्बुलक्ष्मीः ।
इदमिह दयितद्विजद्वयाहं दशनरुचाधरपल्लवं पिधेहि ॥

प्रीतिविशेषः सर्वेन्द्रियाप्यायनं यथा—

कान्ताजनं सुरतखेदनिमीलिताक्षं संवाहितुं समुपयानिव मन्दमन्दम् ।
हर्म्येषु माल्यमदिरापरिभोगगन्धानाविश्चकार रजनीपरिवृत्तिवायुः ॥

अनुभवविशेषो दृष्टिविषयज्ञानं यथा—

जगाद चैनामयमङ्गनाथः सुराङ्गनाप्रार्थितयौवनश्रीः ।
विनीतनागः किल सूत्रकारै रैन्द्रंपदंभूमिगतो नियुङ्क्ते ॥

गौणानुभवविशेषः प्रमाणान्तरग्रहणं यथा—

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानिकानि न चकार लज्जया ॥

अवगमविशेषोऽपि परामर्शो यथा—

मधुकुसुमविलेपनादिभागग्रहणनिदर्शितसौहृदस्य वृत्त्या ।
अयमपि सखि किं स्वयं कृतस्ते प्रियपरिभोगसुखस्य संविभागः ॥

प्रवेशविशेषो चर्वणं यथा—

सङ्क्रान्तचन्दनरसाहितवर्णभेदं विच्छिन्नभूषणमणिप्रकरांशुचित्रम् ।
बद्धोर्मि नाकवनितापरिभुक्तमुक्तं सिन्धोर्बभार सलिलं शयनीयलक्ष्मीम् ॥

गतिविशेषो निषेवणं यथा—

स्थित्वा तस्मिन्वनचरवधूभुक्तकुञ्जे मुहूर्तं तोयोत्सर्गं द्रुततरगति-
स्तत्परं वर्त्म तीर्णः । रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिवविरचितां भूतिमङ्गेगजस्य ॥

प्राप्तिविशेषः फलाधिगमो यथा—

सामोदाः कुसुमतरुश्रियो विविक्ता सम्पत्तिः किसलयशालिनी लतानाम् ।
साफल्यं ययुरमराङ्गनोपभुक्ताः सा लक्ष्मीरुपकुरुते यया परेषाम् ॥

अथेहोपासर्गार्थाः संक्षेपादय उदाह्रियन्ते। तेषु पालन संक्षेपो यथा—

अनिर्दयोपभोग्यस्य रूपस्य मृदुनः कथम्।
दारुणं सखि ते चेतः शिरीषस्येव बन्धनम्॥

पालनसङ्करो यथा—

कृतसीतापरित्यागः स रत्नाकरमेखलाम्।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्॥

पालने सम्पूर्णत्वं यथा—

यथेच्छाभोग्यं वो वनमिदमयं मे सुदिवसः सतां सद्भिः सङ्गः
कथमपि हि पुण्येन भवति। तरुच्छाया तोयं तदपि तपसां
योग्यमशनं फलं वा मूलं वा तदपि न पराधीनमिह्वः॥

पालने सम्पदर्वं यथा—

स पौरकार्याणि विचिन्त्य काले रेमे विदेहाधिपतेर्दुहित्रा।
उपस्थिताचारुवपुस्तदीयं कृतोपभोगोत्सुकयेव लक्ष्म्या॥

कौटिल्यसंक्षेपो यथा—

लोलां दृष्टिमितस्ततोऽपि भजते सभ्रूलताविभ्रमामासुम्नेन विचेष्टतेव
त्रिमना मध्येन कम्पस्तनी। हस्ताग्रं विधुनोति पल्लवनिभं
किङ्कारखिन्नाधरा जातेयं भ्रमराभिलङ्घनभयाद्वाद्यंविना नर्तकी॥

कौटिल्यसङ्कीर्णत्वं यथा—

आतङ्कश्रमसाध्वसव्यतिकरोत्कम्पः कथं सह्यतामङ्गैर्मुग्धमधूक-
पुष्परुचिभिर्लावण्यसारैरयम्। उन्नद्धस्तनकुम्भकुट्मलगुरुग्रा-
सावभुग्नस्य ते मध्यस्य त्रिवलीतरङ्गकजुषो भङ्गः प्रिये मा च भूत्॥

कौटिल्ये सम्पूर्णत्वं यथा—

कामिनामसकलानि विभुग्नैः स्वेदवारिमृदुभिःकरजाग्रैः।
अक्रियन्त कठिनेपुकथंचि त्कामिनीकुचतटेषु पदानि॥

कौटिल्ये सम्पदत्वं यथा—

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरतापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥

अभ्यवहारे संक्षेपो यथा—

व्यथितमपि भृशंमनोहरन्ती परिणतजम्बुरसोपभोगदृष्टा ।
परभृतयुवतिः स्वनंविचक्रे नवनवयोजिकण्ठरागरम्यम् ॥

अभ्यवहारे सङ्करो यथा—

सरगुःपयःपपु रनेनिजुरम्बराणि जक्षुर्विसं धृतविकासिबिसप्रसूनाः ।
सैन्याः श्रितामनुपभोगनिरर्थकत्वदोषप्रवादममृजन्वननिम्नगानाम् ॥

अभ्यवहारे सम्पूर्णत्वं यथा—

पश्य पार्वति नवेन्दुरश्मिभिः सामिभिन्नतिमिरं नभस्स्थलम् ।
लक्ष्यते द्विरदभोगदूषितं सम्प्रसन्नमिव मानसं सरः ॥

अभ्यवहारे सम्पत्वं यथा—

शिरसि द्विषतां निवेश्य पादं यदनायासितकार्मुकं नरेन्द्रः ।
इदमेकपदेनभुज्यतेश्रीरतिदारिद्र्यमिदंतदाश्रितानाम् ॥

अनुभवे संक्षेपो यथा—

मृदुव्यवहितं तेजो भोक्तुमर्थान्प्रकल्पते ।
प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया ॥

अनुभवे सङ्कीर्णत्वं यथा—

संसर्पिभिः पयसि गैरिकरेणुजालैरम्भोजरेणुरजसाङ्गविषङ्गिणा च ।
कामोपभोगमनुभूय मरिन्महेभावन्योन्यवस्तुपरिवर्तमिव व्यधत्त ॥

अनुभवे सम्पूर्णत्वं यथा—

दर्पणेषु परिभोगदर्शिनीं नर्मपूर्वमनुपृष्ठसंश्रयः ।
छायया स्मितमनोज्ञया वधूं ह्रीनिमीलितमुखीं चकार सः ॥

अनुभवेस्रयपरत्वं यथा—

कार्तिकेषु सवितानहर्म्यभा ग्यामिनीपुललिताङ्गनासखः ।
अन्वभुङ्क्तसुरतश्रमा रहा मेघमुक्तविशदाश्च चन्द्रिकाः ॥

साक्षादुपसर्गयोगे संक्षेपार्थो यथा—

शिरस्यहो जाम्बवतोकरग्रहः प्रकारसम्भोगसुखामृतद्रवे ।
मया विसृष्टानुभवत्ववारिता विधूननादुर्ललितोत्सवङ्गमाः ॥

सङ्गार्थो यथा—

संक्षोभक्षमगहनामथोपगङ्गं बिभ्राणां स्वलितमणीनि सैकतानि ।
अध्यूषुश्च्युतकुसुमाचितां सहायाः वृत्तारेरविरलशाद्वलां धरित्रीम् ॥

सम्पूर्णतार्थो यथा—

वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयैः क्रीडायोगश्चिरपरिचितं
त्याजितो दैवगत्या । संभोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुःसरसकदलीस्तम्भगौरश्चलत्वम् ॥

सम्यक्त्वार्थो यथा—

गतवति नखरेखालक्ष्यमातङ्गरागे समतदयितपीताताम्रबिम्बाधरोष्ठ्याः ।
विरहविधुरमिष्टा सत्सखीवाङ्गनाया हृदयमवललम्बे रात्रिसम्भोगलक्ष्मीः ॥

अधिकारार्थयोगे सम्बन्धार्थो यथा—

अकार्योच्चारणे मूकाः पैशुन्यपरिपन्थिनि ।
विनिवृत्तानृतप्रेमां सत्ससम्भोगलालिताम् ॥

सहतार्थो यथा—

किमन्यासंलक्ष्म्या किमशुचि किमाश्चर्यरहितं किमस्वच्छंवाब्धेः
किमथ न हितं वास्य जगतः । अहो नष्टौपम्या गुणकुसुम-
सम्भोगसुभगा भ्रमत्यन्या सिद्धा दिवि भुवि च कीर्तिर्जलनिधेः ॥

मर्यादार्थो यथा—

रेवतीस्तनसम्भोगलालिते यस्य वक्षसि ।
· · मालापदेशेन देव्या स्थानमथाश्रिता ॥

अभिषिक्तार्थो यथा—

भुजमुद्यम्य दृसारिवधविद्यासु पण्डितम् ।
कान्ताकचग्रहामन्दप्रीतिसम्भोगलालितम् ॥ इति ॥

एवं रक्षणनिरोधादिषु पालनानि चोपसर्गार्थो यथालक्षणमुदाहर्तव्य इति । सोऽयमुपसर्गार्थविशिष्टः प्रकृत्यर्थ उक्तः । अथोपसर्गार्थविशिष्ट एव प्रत्ययार्थ उच्यते । तत्र संक्षेपाद्यर्थभेदतः कनिष्ठादयो नायकभेदा भवन्ति । तत्र संक्षेपतः कनिष्ठ स्तामसः शठो धीरप्रशान्त इति । ऐश्वर्यगुणसम्पद्योगात्कनिष्ठः, स यथा—

वि॰किणइ माहमासंमिपामरोपाइरंवइ॰ळेण ।
णि॰धूमम्मु॰मुरञ्विअसामलीअथणोपरिच्छत्तो ॥

विक्रीणीते माघमासेपामरः प्रावरणं बलीवर्दन ।
निर्धूम मुर्मुर निभौ श्यामल्याः स्तनौपश्यन् ॥

मोहादिप्रधानस्तामसः, स यथा—

पु॰फवइअमिवाळअ माछिअमुअदीहराउसो होसि ।
अ॰जं चेअमरिज्ज उमिअछि किंकाळहरणेण ॥

पुष्पवत्यसि बालकमास्पृशादीर्घतरायुष्यो भवसि । अद्यैवम्रियतां मृगाक्षि किंकालहरणेन ॥

प्रतिकूलवृत्तिः शठः, स यथा—

घरसामिअरसवञ्चिअविआणणावडइसं मुहेदि॰ठि ।
ळीळं बहु॰पआरं सकोविहारे इकाम॰स ॥

सत्त्वोद्रेकादुपशमादिप्रधानो धीरप्रशान्तः, यथा—

अतिथिभिर्गतमेव दिवागतै रथिकागमनाचनिशीथिनी ।
तदधुना प्रतिजागृहि पुत्रकान्प्रविशवेश्म कुटुम्बिनि शेमहे ॥

एतेषां च प्रयोजनादिवैदग्ध्यासहिष्णुतादनार्जवानतिरागाच्च संक्षिप्त एव रत्युपचारो भवति । सङ्कराम्मध्यमः साधारणो धृष्टो धीरोदात्त इति । तेषु पादोनगुणसम्पद्योगान्मध्यमः, यथा—

व्रीहिःस्तम्बकरः प्रभूतपयसःप्रत्यागताधेनवः प्रत्युज्जीवितमिक्षुणा
भृशमितिध्यायन्नयेत्तानघीः । सान्द्रोशीरकुटुम्बिनीस्तनभरव्या-
लुप्तघर्मक्लमो देवे नीरमुदारमुज्झति सुखं शेते निशि ग्रामणीः ॥

अनेकजातिसाधारणं यथा—

यांयां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव ।
निश्शङ्कमन्यास्समभाहितेर्ष्या स्तत्रान्तरेजघ्नुरमुंकटाक्षैः ॥

प्रकाशविप्रियोऽप्यविलक्षो धृष्टः, यथा—

शतंवारानुक्तः प्रियसखि वचोभिस्सुपरुषैः सहस्रंनिर्धूतः
पदनिपतिनः पार्ष्णिहतिभिः । कियत्कृत्वोबद्धाःपुनरिह
नवेक्षिभ्रुकुट्यः तथापि क्लिश्नन्मां क्षणमपि नधृष्टो विरमति ॥

अहङ्कारप्रधानो धीरोद्धतो यथा—

इतः परानर्भकहार्यशस्त्रान्वैदेहि पश्यानुमता मयासि ।
एवंविधेनाहवचेष्टितेन त्वंप्रार्थ्यसे हस्तगता ममैभिः ॥

तेषां च प्रायः प्रयोजनान्तरव्यासङ्गादन्यत्रापिचासक्तेर्व्यलीकापह्नवसदहङ्कारित्वाद्य सङ्कीर्ण एव रत्युपचारो भवति । सम्पूर्णत्वादसाधारणः धीरललित इति । तेष्वनन्यजानिरसाधारणः, यथा—

आविवाहसमयाद्गृहे वने शैशवे तदनुयौवने पुनः ।
स्वापहेतुरनुपासितोऽन्यथा रामबाहुरुपधानमेष ते ॥

रजःप्रधानो राजसः यथा—

सामन्तमौलिमणिरञ्जितशासनाङ्क मेकातपत्रमवनेर्नतथा प्रभुत्वम् ।
अस्यास्सखे चरणयोरधिगम्य सम्यगाज्ञाकरत्वमहमद्य यथा कृतार्थः ॥

अन्यमना अपि गौरवादेरनपहारी दक्षिणो यथा—

प्रत्यग्रोज्झितगोकुलस्य शयनादुत्स्वप्नमूढस्य मामागोत्रस्खलनादुपैतु
यदिवा राधेति भीरोरिति । रात्रावस्वपतो दिने च विजने लक्ष्मीति
चाभ्यस्यतो राधांसंस्मरतः कथं रमयतः खेदो हरेः पातु वः ॥

विलासप्रधानो धीरललितो यथा—

मधु च विकसितोत्पलावतंसं शशिकरपल्लवितं च हर्म्यपृष्ठम् ।
मदनजनितविभ्रमा च कान्ता सुखमिदमर्थवतां विभूतयोऽन्याः ॥

एतेषां च प्रायोऽनन्यचित्तत्वेन रागभूयिष्ठतया स्थितानतिक्रमेण विलासितया च सम्पूर्ण एव त्युपचारो भवति। सम्पन्नत्वादुत्तमः सात्त्विको ऽनुकूलो धीरोदात्त इति। तेषु सर्व-गुणसम्पद्योगादुत्तमो यथा—

इतो गमिष्याम्यथवेति वादिनी चचाल सा च स्तनभिन्नवल्कला।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः॥

सत्त्वप्रधानः सात्त्विको यथा—

पूर्वानुभूतं स्मरता च रात्रौ कम्पोत्तरं भीरु तवोपगूढम्।
गुहाविसारीण्यतिवाहितानि मया कथंचिद्घनगर्जितानि॥

धर्मपदोऽनुकूलो यथा—

मुञ्च कोपमनिमित्तकोपने सन्ध्यया प्रणमितोऽहमन्यथा।
किं न वेत्सि सहधर्मचारिणः चक्रवाकसमवृत्तिमात्मनः॥

उदारचरितो धीरोदात्तो यथा—

कपोले जानक्याः करिकलभदन्तद्युतिमुषि स्मरस्मेरं गण्डोड्ड-
मरपुलकं वक्त्रकमलम्। मुहुः पश्यञ्छृण्वन्रजनिचरसेना
कलकलं जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः॥

एतेषां च प्रायः समस्तगुणसम्पद्योगेन महासत्त्वतया धर्मधनत्वेन अत्युदारतया च सम्यगेव त्युपचारो भवति। तेऽमी संक्षेपसङ्करसम्पूर्णत्वसम्पन्नत्वैः प्रत्यर्थविशेषणे षोडशनायकविशेषा भवन्ति। तथैवमेव संक्षेपादिषूपसर्गादिभेदेषु नायिकाभेदाः कनिष्ठादयो गीयन्ते। तत्र संक्षेपे कनिष्ठा मुग्धा अधीरा शान्ता अनूढा परकीया अभिसारिका कलहान्तरितेति। तास्वर्थ गुणसम्पद्योगिनी कनिष्ठा यथा—

तंकिरखणान्त्रिर०जसितंकिरउवह ससि सअलमहिळाओ।
एहेयारवालिइअंसूमइलंमुञ्चुसिमो॥

त्वंकिलक्षणान्निरजयसे त्वंकिलोपहससि सकलमहिलाः।
यदि वारवालिके अश्रुमलिनं समुत्पोच्छामः॥

अप्रगल्भा यथा—

चुम्बनेऽपि परिवर्तिताधरं हस्तरोधिरशनाविघट्टने।
विनिर्नेच्छमपि तस्य सत्त्वतो मन्मथेन्धनमभूद्वधूरतम्॥

कालहरणासहिष्णुर्धीरा यथा—

पाअपडणाणमु०धे रभसवणाओडिचुंबिअव्वाणं ।
दंसणमे०तपसण्णिरिचु०कादहुआणसो०खाण ॥

पादपतनानां मुग्धे रभस बलात्कारचुंबितव्यानां । दर्शनमात्र प्रसन्नेश्वरयासि सुखानां बहुकानां ॥

निरहङ्कारा शान्ता यथा—

सितांशुका मङ्गलमात्रभूषणा विविक्तदूर्वाङ्कुरलाञ्छितालका ।
व्रतोपवासोज्झितगर्ववृत्तिना मम प्रसन्ना वपुषैव लक्ष्यते ॥

कुमार्यनूढा यथा—

ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं पर्यग्रहीत्संवरणस्रजेव ॥

अन्यपरिग्रहः परकीया यथा—

मुहविज्झविअपईवंणिरु०धसासंससङ्किओल्लावं ।
सवहशअर०खिओ०ठं चोरिअरमिअं सुहावेइ ॥

मुखविध्मापित प्रदीपं निरुद्धश्वासंसशङ्कितोल्लापं । शपथशतरक्षितोष्ठं चोरिकारमितंसुखयति ॥

स्वयमुपगताभिसारिका यथा—

अलिअपसु०तअविणिमीलिअ०च्छे सुहअम०झओआसं ।
गंडपरिउंवणापुळइअंगणरणोचिराइ०सं ॥

अलीकप्रसुप्तविनिमीलिताक्षे सुभग मम नवकाशं । गण्डपरिचुम्बनपुलकिताङ्ग न पुनश्चिरयिष्ये ॥

पश्चात्तापवती कलहान्तरिता यथा—

सव्यलीकमवधीरितखिन्नं प्रस्थितं सपदि कोपपदेन ।
योषितः सुहृदिवस्मरुणद्धि प्राणनाथमश्रुबाष्पनिपातः ॥

एतासु हि प्रायेणाप्रतिष्ठितत्वादप्रागल्भ्यादधैर्याद्‌दुपशमाल्लज्जातो भयादौत्सुक्याद्‌तिशयरागवृद्धेश्च संक्षिप्ता विकल्पेनचालिङ्गनाद्य उपचारा भवन्ति । तद्वद् मध्यमामध्यतोद्धतपुनर्भुवो-सामान्याखण्डितावप्रलब्धेति, तासु या दानगुणसम्पद्युक्ता मध्यमा यथा—

हुंहुंदे भणसुपुणोण सुअंतिकरेइ काळवि०खेवं ।
घरिणीहिअअसुहाइं पइणो क०णे फणंत०स ॥

किञ्चिदुपारूढयौवना मध्या यथा—

सङ्गमेच्छुरभिधातुमनीशा संमुखी न च बभूवदिदृक्षुः ।
स्पर्शनेचदयितस्यनतभ्रूरङ्गसङ्गचपलापिचकम्पे ॥

मदङ्गारवत्युद्धता यथा—

ह॰ळपळ॰णपसाहिराणंछणवासरेसव॰तीणं ।
अ॰झाए मंडणाणा अरेणकहिअंवसोह॰गं ॥

हरसाहृतरळत्व ज्ञातप्रसाधितानां क्षणवासरे सपत्नीनां ।
आर्यया मज्जनानादरेण कथितमिव सौभाग्यं ॥

पुरुषात्पुरुषान्तरं माता पुनर्भूर्यथा—

यामूढयानूढवराहमूर्तिं मुहूर्तमादौ पुरुषः पुराणः ।
तेनोह्यते साम्प्रतमक्षतैव क्षतारिणा सम्यगसौ पुनर्भूः ॥

पण्याङ्गनावेश्या यथा—

साम॰णसुंदरीणं वि॰भममावहइविणओ॰छेअ ।
धूतुच्चिअप॰जळिआणं बहुमओसुरभिदारुणं ॥

सामान्यसुंदरीणां विभ्रममावहत्यविनय एव । धूम एव प्रज्वलितानां बहुमतः सुरभिदारूणां ।

अनेकपतिका सामान्या यथा—

पइपुरुओच्चिअरहसेणचुंविओदेअरोअढअणाए ।
महवअणं मदिरागंधिअंतिबाआ तुहभणाइ ॥

पत्युः पुरत एव रभसेन चुंबितो देवरोऽसत्या । मेघदनं मदिरागन्धमिति ज्ञातात्वमणति ॥

खण्डितप्रथमप्रेमाखण्डिता यथा—

प॰चूसागअरंजितदेहपिआलोअळोमणाणंद ।
अ॰ण॰मखविअस॰वरिणहऊसणदिणवइणमोदे ॥

प्रत्यूषागत रक्तदेहप्रिया लोकलोचनानन्द । अन्यत्र क्षपितशर्वरीक नभोभूषण नमस्ते ॥

सङ्केतभ्रष्टाविप्रलब्धा यथा—

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं वञ्चयन्प्रणयिनीरवाप सः ॥

एतासु हि प्रायेण नात्युत्कर्षोऽनातिप्रगल्भाशाल्याद्राज्ञातिविस्रम्भाद्रतिकौटिल्यादनल्पासङ्गादल्प-पक्षातोऽतिरोषाच्च सङ्कीर्णएव विकल्पसमुच्चयाभ्यामालिङ्गनादय उपचारा भवन्ति। सम्पूर्णत्वे ज्येष्ठा प्रगल्भा धीरललिता स्वैरिणी गणिका वासकसज्जा विरहोत्कण्ठितेति। तासु प्रथमोढा ज्येष्ठा यथा—

आताम्रतामपनयामि विलक्ष एष लाक्षाकृतांचरणयोस्तव देविमूर्ध्ना।
कोपोपरागजनितांतु मुखेन्दुविम्बे हर्तुं क्षमा यदि परं करुणा मयिस्यात्॥

रत्युपचारचतुरा प्रगल्भा यथा—

खि॰ण॰सउरेपइणो गिंह्मावरह्णरमिअस्स।
ओल्लंगलंतकुसुमंण्हाणसुअन्धंचिउरभारं॥

खिन्नस्योरसि पत्युःस्थापयति ग्रीष्मापराह्णरमितस्य। आर्द्रंगलत्कुसुमं स्नानसुगन्धं चिकुरभारं॥

कालासहिष्णुर्धीरा यथा—

चुंपइसह॰सहु॰तं मुहणमोहरिअंमए जूए।
माणोइणमु॰चळसामळंगळह्माणइ॰तीए॥

नातिचिरमन्युर्ललिता यथा—

म्हरिमोसेसअणपरंमुहीए विअळंतमाणपसराए।
कइअवसु॰तु॰व॰तणथणकळसप्पेल्लणसुहे॰ल्लिं॥

स्मरामस्तस्याः शयनपराङ्मुख्या विगलन्मानप्रसरायाः।
कैतवसुप्तोद्वर्तनस्तनकलश प्रेरणसुखकेलीं॥

आत्मच्छन्दा स्वैरिणी यथा—

तहसाजाणइजायळोएपच्छण्णमविणअं काउं।
जहपढमंचिअलि॰खइम॰ज्झे चारि॰तइ॰धीणं॥

कलाचतुष्षष्टिर्गणिका यथा—

स॰चंदरमणदंसण संव॰ढिअगरुअव॰महविळासं।
सुविअड्ढवेसरिळिआरमिअंकोवण्णिउव्तरइ॥

स्वच्छंदरमणदर्शनसंवर्धित गुरुमन्मथविलासं।
सुविदग्धवेश्यवनितारमितं को वर्णितुं शक्नोति॥

गृह एव प्रगुणितोपकरणा वासकसज्जा यथा—

सद्मनां विरचनाहितशोभैरागतप्रियकथैरपि दौत्यम्।
सन्निकृष्टरतिभिः सुरदारैर्भूषितैरपि विभूषणमीषे॥

वियोगादौत्सुक्यवती विरहोत्कण्ठिता यथा—

केयूरीकृतकङ्कणावलिरसौ कर्णावतंसीकृतव्यालोलालकपद्धतिः
पतिपुरो बद्धाञ्जलिः पृच्छति। यावत्किञ्चिदुदन्तमात्मकमितुस्ता-
वत्सएवेत्यथ व्रीडावक्रितकण्ठनालमबला कैःकैर्नभिन्नारसैः॥

एतासु हि प्रायः प्रणयवृत्तेः सुरतचातुर्यारकाठ्यापनाद्रागबाहुल्यादभिप्रायसिद्धेः कलाकौशलात् उपकरणसन्निधेरभीष्टसङ्गमादासेव्य सम्पूर्णाः समुच्चयेनचालिङ्गनादय उपचारा भवन्ति, सम्प्रत्ये उत्तमा उदात्ता ऊढा स्वीया कनिष्ठा रूपाजीवा स्वाधीनपतिका प्रोषितभर्तृकेति। तासु सर्वगुणसम्प्रयोगिनी उत्तमा यथा—

हसिआइसमाळसकोमळाइवीसंभकोमळं भणिअं।
सब्भावकोमळं पुळइअं वणमिमोसुमहिळाणं॥

उदारचेष्टा उदात्ता यथा—

अथ विश्वात्मने गौरी सन्दिदेश मिथःसखीम्।
पिता मे भूभृतांनाथः प्रमाणीक्रियतामिति॥

पाणिग्रहिण्यूढा यथा—

ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन।
सादृष्टइत्याननमुन्नमय्य ह्रीसन्नकण्ठं कथमप्युवाच॥

अनन्यपरिग्रहस्वकीया यथा—

किंतव्स पावरेणं किमग्गिणा किंवगब्भरहएण।
जव्सउरम्मिणिसज्जइवहाअंतव्वणीजाए॥

किंतस्यप्रावरणेन किमग्निना किंवागर्भगृहेण। यस्योरसि निषीदति ऊष्मायमाणस्तनीजाया॥

पश्चादूढा कनिष्ठा यथा—

पणअंपढमपिआए रक्खिउकामोवि महुरमहुरेहिं ।
छेअवरोविणदिज्जइ अहिणववहुआविळासेहिं ॥

प्रणयं प्रथमप्रियायाः रक्षितुकामोपि मधुरमधुरैः ।
छेकवरस्सुखायते अभिनव वधुधाविलासैः ॥

रूपातिशयिनी रूपाजीवा यथा—

अयमेव दह्यमानस्मरनिर्गतधूमवर्तिकाकारः ।
चिकुरभरस्तव सुन्दरि कामिजनं किङ्करीकुरुते ॥

आयत्तभर्तृका स्वाधीनपतिका यथा—

साळोअच्चिअसूरेघरिणी घरसामिअस्सघेत्तूण ।
णेच्चं तस्सविपाएधुअइहसन्ती हसंतस्स ॥

साळोकेपि सूर्ये गृहिणी गृहस्वामिनो गृहीत्वा । अनिच्छतोपि पादौ प्रक्षाळयति हसतीहसतः ॥

प्रियवियोगवती प्रोषितभर्तृका यथा—

विलुलितमतिदूरैर्बाष्पमानन्दशोकप्रभवमवसृजन्ती पक्ष्मलोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनीतेमधुरधवलमुग्धा दुग्धकुल्येव दृष्टिः ॥

एतासु हि प्रायो गुणोत्कर्षादौदार्यादुपयमादात्मीयबुद्धेर्वयोविशेषाद्रूपातिशयादहृदयत्वादुत्कण्ठितत्वाच्च सम्भोगेष विकल्पसमुच्चयाभ्यामालिङ्गनादय उपचारा भवन्ति । तेऽमी संक्षेपसङ्करसम्पूर्णत्वसम्पन्नत्वैः प्रत्ययार्थविशेषणे द्वात्रिंशन्नायिकाविशेषा भवन्ति । यदा तूपसर्गः प्रकृतिप्रत्ययार्थौ विशेषयति तदा प्रकृतिप्रत्ययौ प्रत्ययार्थं सहब्रूत इति न्यायादेतेषामपि नायकः प्रतिनायक उपनायक इति, नायिका प्रतिनायिका उपनायिका अनुनायिकेति च प्रत्येकं विशेषाः सम्भवन्ति । उपसर्गस्य चान्येऽपि सम्बन्धादयोऽधिकार्था विद्यन्ते । तद्योगादमीषां सम्बन्धः संसिद्धः संनिभः संक्षिप्त इति प्रत्येकं विशेषा जायन्ते । तत्रेतिहासपुराणादिसम्बन्धिनः सम्बन्धाः । तेषु कथाशरीरव्यापी नायको यथा—

तस्यां रघोः सूनुरुपस्थितायां वृणीतवा नेति समाकुलोऽभूत् ।
वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद ॥

तत्प्रतियोगी प्रतिनायको यथा—

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

नायकात्किञ्चिदूनः समो वा गौरवायतनमुपनायको यथा—

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥

एवं विधएव तत्सिदेशवर्ती उपनायको यथा—

कथयति त्वयि सस्मितमालतीवलितलोलकटाक्षपराहतम् ।
नयनपङ्कजमुल्लसितत्रपाविधुरदृष्टि सखीं नमयिष्यति ॥

एवं कथाशरीरव्यापिका नायिका यथा—

तासां माधवपत्नीनां सर्वासां चन्द्रवर्चसाम् ।
शब्दविद्येव विद्यानां मध्ये जज्वाल रुक्मिणी ॥

तत्प्रतियोगिनी प्रतिनायिका यथा—

कुविआअसच्चभामा समेविपहुईणणवरमाणसळणे ।
पाअपडिअहिअअ प०नासंघसरिं सोवअ०गइमंतू ॥

नायिकायाःकिञ्चिदूना समा वा गौरवायतनमुपनायिका यथा—

देवीस्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे तद्गोत्रग्रहणादियं
सुवदना यायात्कथं न व्यथाम् । इत्थं यन्त्रणया कथंकथमपि क्षीणां
निशां जाग्रतोः दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता ॥

नायिकायाः कनीयस्यनुनायिका यथा—

हेलोदस्तमहीधरस्य तनुतामालोक्य दोष्णो हरेः स्नेहादंसतटेऽवलम्ब्य
चरणावारोप्य तत्पादयोः । शैलोद्धारसहायतां जिगमिषोरप्राप्त-
गोवर्धना राधायाः सुचिरं जयन्ति गगने वन्ध्याःकरभ्रान्तयः ॥

लोके प्रतीतवृत्तयः संसिद्धाः । तत्र सार्ववर्णिकः कनिष्ठादिनायकस्य, स यथा—

जंवहइपीअखंडं म॰झमुओए॰कपहरङ्गिणवाअं ।
तंकुळदूसणिसु॰णोघणाणतुहम॰घएवहउ ॥

नायकोपगामिफलविरोधोऽर्थिप्रतिनायको यथा—

जहजह वड्ढंति थणा तहतह झिज्जंति वच्चवाहीए ।
मज्झं पिओदकुडुंगोपल्लिजुआणोसवत्तीओ ॥

यथायथा वर्धेते स्तनौ तथातथा क्षीयन्ते पंचव्याधयः ।
मध्यः पतिः कोदण्डः पल्लियुवानः सपत्न्यश्च ॥

उपपतिरुपनायको यथा—

अज्ज मए गंतव्वं घणंधआरेवि तस्स सुहअस्स ।
अज्जाणिमीलिअच्छी पअपरिवाडिं घरे कुणई ॥

अद्यमया गन्तव्यं घनान्धकारेऽपि तस्य सुभगस्य । आर्यानिमीलिताक्षी पदपरिपाटींगृहेकरोति ॥

पशुः कनीयाननुनायको यथा—

ठाणे ठाणे वलिआ वळणेवळणे सवेअसकुडुंगाणगओसि ।
अद्धगामंदिअरण दिट्ठाकहंतुतए मुरळा ॥

एवं सार्वलौकिकयुवमादिनायिका यथा—

घरिणीए महाणसकम्मलग्गमसिमइलिएण हत्थेण ।
छित्तंमुहं हसिज्जइ चंदावत्थंगअं पइणा ॥

गृहिण्या महानसकर्मलग्नमषीमलिनितेन । स्पृष्टं मुखं हस्यते चन्द्रावस्थांगतं पत्या ॥

नायिकाप्रतिपक्षः प्रतिनायिका यथा—

सिहिपेहुणावअंसा वहुआवाहस्स गव्विरी भमइ ।
गअमोत्तिअरइअ पसाहणाण मज्झे सवत्तीणं ॥

शिखिपिच्छावतंसावधूर्व्याधस्य गर्विताभ्रमति । गजमौक्तिक रचितप्रसाधनानां मध्ये सपत्नीनां ॥

नायिकायास्समीपमुपनायिका यथा—

णिअदइअदंसणुक्खित्तपहिअअण्णेण पच्च सुपहेण ।
गहपइधूआडुल्लं पवावुराइ अहम॰गामे ॥

नायिकायाः कनीयस्यनुनायिका यथा—

घरसामिअस्सवच्चिअ विआणणावडइसहंमुहेदिट्ठी ।
ळीळं वहुप्पआरं स को विआरेइ कामरस ॥

एत एवोपचरितवृत्तयः सचिमाः । तेषु नायको यथा—

अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः ।
कुट्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥

प्रतिनायको यथा—

कहविरहपडिक्कुळाओ हाहीसमुहट्ठिआ पहुम्मिउंपगए ।
णेच्छइ हराविसर्सि किं पुणदिट्ठम्मि दिणअरम्मि कमळिणी ॥

उपनायको यथा—

वहळम्मिवितमणिवहे णिञ्चाकोऊणसच्चविअरुआओ ।
अणुवंधंति ससिअरा खेतुंणचअंति पाअवच्छाआओ ॥

अनुनायको यथा—

विअसत्तेण मुणिज्जइ सिसिरोअग्गण वठद्दणिअच्छाआ ।
कमळमुहेण सुरभिणा आधिअमहुमास संगमंतिकमळिणीण ॥

नायिका यथा—

अवऊहिअपुव्वदीसे समअं जुह्लाइसेपिअपओसमुखे ।
माइरझिञ्झवुरअणी अवरदिसाहुत्त पत्थिअम्मिमिअंके ॥

प्रतिनायिका यथा—

दूरपडिबद्धराए आळिंगंतम्मि दिअअवरदिसं ।
असहंतिमकिळम्मइ पिअमपच्चवस्सदूमणद्दिणळच्छि ॥

उपनायिका यथा—

ओरत्तपंरुअमुहिं पम्महणडिअव्वसळिलसअणणिसण्णं ।
अव्लिअइ तीरणळिणी पाआए गमेइ सहअरी चक्काओ ॥

अनुनायिका यथा—

नवकुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशेषामप्युषां जागरित्वा ।
अयमपरदिशोऽङ्के मुञ्चतीस्रस्तहस्तःशिशयिषुरिवपाण्डुग्लानमात्मानमिन्दुः ॥

शब्दस्य सामर्थ्योपजातयः गुणसङ्क्रान्तयः सङ्कलताः । तेषु नायको यथा—

इअरो जणोण पावइ तुहजहणारुहण संगमसुहेळिं ।
अणुहवउकणअडोरो रोहुअवहवरुणाणमाहप्पं ॥

इतरोजनो नमाप्नोतु तवजघनारोहणसंगमसुखं ।
अनुभवतुकनककांची हुतवहवरुणयोर्माहात्म्यं ॥

प्रतिनायको यथा—

मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयःसुतरां क्षिणोतिखलुतां मदनः ॥

. . . जोकहविमहसहीहिं विमच्छिदळहिऊण पेसिओहिअए ।
सोमाणो चोरिअ कामुअव्वदिट्ठे पिएणट्ठो ॥

अनुनायको यथा—

कहमाइिज्झउमज्झो इमीए कंदोट्ठ दलसरिच्छेहिं ।
अछीहिंजोणदीसइ घणघणहररुद्धपसरेहिं ॥

कथंमाक्षीयतां मध्योस्याः कुवलयदळसदृक्षाभ्यां ।
नयनाभ्यां यानदृश्यते घनस्तनभर रुद्धप्रसराभ्यां ॥

नायिकाया यथा—

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्तितुं वा ।
अनुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति लक्ष्मीः ॥

दिनेदिने गाढमुपोढरागा यथायथा श्रीरुपगाहते त्वाम् ।
महीपते नूनमुपाहितेर्ष्या तथातथा दूरमुपैति कीर्तिः ॥

उपनायिकाया यथा—

. . . . . . . . . . . . . वबद्धभावा ।
चलस्वभावा दयितेव यूनः सन्तापमिन्द्रस्य करोति लक्ष्मीः ॥

अनुनायिका यथा—

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेवकेवलाम् ॥

. . . विशेषो विवक्षावशात् भावहेतुकर्त्रादिरूप प्रत्ययार्थतां प्रतिपद्यन्ते । तत्र नायिकाया भावरूपता यथा—

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्यमे ।
समुद्ररशना चोर्वी सखी च युवयोरियम् ॥

तासामेव हेतुत्वं यथा—

शिञ्जानमञ्जुमञ्जीरकाञ्चीसञ्चारचारवः ।
रमयन्ति मनः कान्ता नितान्तं योगिनामपि ॥

अथयन्तारमादिश्य धुर्यान्विश्रामयेतिसः ।
तामवारोहयत्पत्नींरथादवततार च ॥

कर्तृत्वं यथा—

अयं तया रथक्षोभादंसादंसो निपीडितः ।
एकः कृती शरीरेऽस्मिन् शेषमङ्गं भुवो भरः ॥

कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥

सम्प्रदानत्वं यथा—

तत्रद्रुमिपतिः पत्न्यै दर्शयन् प्रियदर्शनः ।
अपिलंघितमध्वानंबुबुधे न बुधोपमः ॥

अपादानत्वं यथा—

प्रसीद विश्राम्यतु वीर वज्रं शरैर्मदीयैः कतमः सुरारिः ।
बिभेतु मोघीकृतबाहुवीर्यस्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥

तस्मिन्विधानातिशये विधातुः कन्यामये नेत्रशतैकलक्ष्ये ।
निपेतुरन्तःकरणैर्नरेन्द्राः देहैः स्थिताः केवलमासनेषु ॥

एते च नायकस्यापि ज्ञातव्याः । तत्रास्य . . .

. . . . . .

रन्तीं तत्कृताक्षेपमीशः । अपि शयनसखीभ्यो दत्तवाचं
कथंचित्प्रथममुखविकारैर्हासयामास गूढम् ॥

कर्तृत्वं यथा—

इतिगच्छ . . . क्वगलत्कलकाञ्चिदरलाः ।

. . . . . . . . . . . .

उभयोः कर्तृत्वं यथा—

प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकाशे ।
मेरोरुपान्तेष्विव वर्तमान मन्योन्यसंसक्तमहस्त्रियामम् ॥

उभयोः कर्मत्वं यथा—

तौ क्षणं शिथिलितोपगूहनौ दम्पती रचितमानसोर्मयः ।
पद्मभेदपिशुनाः सिषेविरे गन्धमादनवनान्त मद्भुतम् ॥

अभूद्धरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिस्संववृतेकुमारी ।
तस्मिन्द्वये तत्क्षणमात्मवृत्ति स्समंविभक्तेव मनोभवस्य ॥

द्वयोः प्र . . . —

परस्परेणस्पृहणीयशोभं नचेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वयेरूपविधानयत्नः पत्युःप्रजानां विफलोऽभविष्यत् ॥

द्वयोर्भावसन्धिर्यथा—

काप्यभिख्यातयोरासीद्व्रजतोरशुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥

द्वयोर्द्रव्यसंबन्धित्वं यथा—

तयोरसमापत्तिशुकातराणि किञ्चिद्व्यवस्थापित . . ।
. . . . ॥

कुतःपुनरेते यदेकदा स्त्रियकर्तृत्वादयः पुरुषेष्वमथयन्ति। अन्यदास्तु योषिति। कदाचित्पुनरुभयोरपीति।—

उक्तमत्रोपसर्गार्थं प्रत्ययार्थोपकल्पितः ।
उक्तःसम्भोगशब्दार्थो व्यक्तकालश्चतद्गतः ॥

सामान्यविषयोयश्च विशेषविषयश्चयः ।
सोयंसम्भोगशृङ्गारः प्राणितंपुष्पधन्वनः ॥

अथोच्यतेसाम्प्रतमानुपूर्व्या पूर्वानुरागादिविशेषितानाम् ।
अनन्तराणामखिलस्वरूपं विस्रम्भणादिप्रतिपादनेन ॥

इति श्रीमहाराजाधिराज श्रीभोजदेव विरचिते
शृङ्गारप्रकाशे सम्भोगशब्दार्थप्रकाशो नाम
त्रयस्त्रिंशः प्रकाशः समाप्तः ॥



॥ श्रीः ॥

# महाराजाधिराज श्रीभोजदेवविरचिते

# शृङ्गारप्रकाशे

## ॥ चतुस्त्रिंशः प्रकाशः ॥



अथानन्तर्यार्थः आनन्तर्यार्थविशेषणञ्च उच्यते—तत्रानन्तरः प्रथमानुरागादि । पश्चात्काल-भाविनश्चत्वारः प्रथमानुरागानन्तरादयः । सम्भोगा अनन्तरा एव ।

आनन्तर्यं यथा—षडेव गुणाः षाड्गुण्यं, चत्वार एव वर्णाः चातुर्वर्ण्यं, इति । तत्यन्तार्थो हेतुफलभावेनायतिष्ठमानो रतिप्रकर्षणपर्यन्तः कान्ताविस्रम्भण मानशैथिल्य प्रियागमनवार्ता प्रिय दर्शनादिर्वक्ष्यमाणलक्षणः क्रियाकलापः । कथं पुनः क्रियायाः साध्यैकस्वभावायाः साधनत्वं, नेदमतीर्थान्तर दर्शनानुरोधीपारमार्थिकमेव, साध्यसाधनव्यवहारोपि पारमार्थिको लोकव्यवस्थानु विधायी, लोकश्च क्रियामपि पदार्थान्तरोपजनने व्यापारवतींकरोति । क्रियाहिद्रव्यं विनयति— (इत्यादि) क्रिया हि द्रव्यं विनयतिनाद्रव्यमिति पूर्वाच क्रियोत्तरस्याः साधन तथा चैतस्यं सन्दर्शनस्य, दर्शनं प्रार्थनायाः, प्रार्थनाध्यवसायस्य, अध्यवसायः प्रारम्भस्य, प्रारम्भः समागमस्य, समागमः सम्भोगस्य, सम्भोगः सुखाधाप्तेरिति । किं विशेषणं अव्युच्छिन्न रत्युत्पत्तिसन्तानाय च्छेदे हेतुविस्रम्भवत् विस्रम्भणादिशब्दाभिधेय एव प्रारब्धसाध्यसिद्ध्यवसानः कालविशेषः, तस्य च क्रियारम्भेऽपि क्रियावच्छेदकत्वं क्रियावच्छेद्यमेव वा कालात्मानमनाश्रित्य व्यवहर्तुं न शक्यत इति । तत्र प्रथमानुरागानन्तरे रतिप्रकर्षनिमित्ताभिलषणीयाधालिङ्गनाव्यवासितहेतवो विस्रम्भशय-नोपक्रमादयः समाननायकयोः परिजनादेश्च चेष्टाविशेषाः सम्भोगशब्दवाच्या भवन्ति । कः पुनरत्र समासः । षष्ठीलक्षणस्तत्पुरुषः । प्रथमानुरागस्यानन्तरः प्रथमानुरागानन्तर इति काल-वृत्तिरनुत्सृष्टस्वार्थो, नायिकानायकौ मिथः सक्तावपि प्रथमानुरागमुत्सृजतः । युक्त पुनर्यदनु-त्सृष्टस्वार्थपरार्थाभिधानरूपा वृत्तिः स्यात् । अवश्यं ह्यनेन परस्यार्थमभिदधता स्वार्थं उत्स्रष्टव्यः । बाढं युक्तं । एवं हि दृश्यते लोकेभिक्षुको यद्द्वितीयां भिक्षामासाद्य पूर्वां नोत्सृजति । सञ्चयायैव यतते । एवंतर्हि द्वयोर्द्विर्वचनं प्राप्नोति । कस्या विभक्तेः ? षष्ठ्याः । 'नषष्ठीसमर्थो नान्तरः,

तर्हि प्रथमाया न प्रथमासमर्थः प्रथमानुरागः । सम्बन्धाधिक्यात् । अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति, सामर्थ्यं भविष्यति, नैवम् । प्रथमानुरागानन्तर इत्येतस्मात् सर्वदा पद्विभक्त्योरुपलब्धेः । न च समुदायेनैकोऽर्थपिण्डो मृत्पिण्ड इवाविभागापन्नपांसुकविभागोऽवय-वार्थेष्वनुगृहीतं पृथग्व्यपदेश्यावयवशक्तिरभिधीयते । तस्मिंश्च समुदायार्थे एकत्वं समवेततो विद्यमानायामप्यवयवसङ्ख्यायां तदाश्रयासुवुत्पत्तिर्भवति ।

के पुनर्विस्रम्भणादयः, विस्रम्भः प्रेक्षोदीक्षणं, परिहारः, परिहारविलासाः, कन्दुकक्रीडा, केलिद्यूतानि, ऋतूपयम . चारः, समावासः, कालावस्थानुभवाः, पूर्वाह्णिकं, माध्याह्निकं, अपराह्णिकं, अस्तमयः, सन्ध्या, तमः, चन्द्रोदयः, ज्योत्स्ना, प्रादोषिकं, निशीथः, रात्रिपराद्धतिः, प्राभातिकं, वन उद्यानगमनं, वनविहारः, पुष्पावचयः, श्रमानुभवः, प्रच्छायादिसेवा । जलक्रीडा, नेपथ्ययोगाः, क्रीडापर्वतविहारः, एकशाल्मली, नवलतिका, पञ्चालानुयानं, नवपत्रिका, कदम्बयुद्धानि, बिसखादिका, इन्द्रोत्सवः, कौमुदीप्रचारः, यक्षरात्रिः, अष्टमीचन्द्रकः, कुन्दचतुर्थी, सुवसन्तः, सहकारभञ्जिका, दोलाविलासः, उदकक्ष्वेडिका, मदनोत्सवः, एकस्यागमनं, सहायव्यापारः, प्रसाधनग्रहणं, गोष्ठीविहारः, वासगृहोपगमनं, अभिसारिकाप्रतीक्षणं, दूतीविसर्जनं, स्वयं वा गमनं, आगतोपचारः, परिचरणं, विसर्जनं, कञ्चुकादिमोक्षः, रतारम्भः, रतं, रतावसानं, निद्रानुभव इति चतुष्षष्टिः ।

तत्र समागतायाः सम्प्रयोगार्थं अभ्यासनापूर्वको विस्रम्भणं यथा—

कस्य नो कुरुते बाले पिपासाकुलितं मनः ।
अयं ते विद्रुमच्छायो मरुमार्ग इवाधरः ॥

अक्षि ते पुष्परजसा वातोद्धूतेन दूषितम् ।
मुखानिलस्य मे तन्वि तदर्पयितुमर्हसि ॥

निश्च्योतन्ते सुतनु कबरीबिन्दवो यावदेते यावन्मध्यस्तन-
मुकुलयोरार्द्रभावं जहाति । यावत्सान्द्रस्वतनुपुलकोद्भेद-
वत्यङ्गयष्टिः तावद्गाढं वितर सकृदप्यङ्कपालिं प्रसीद ॥

दग्धं चिराय मलयानिलचन्द्रपाते सन्तर्पितं तु परिरभ्य वपुस्त्वयामे ।
आमत्तकोकिलरुतव्यथिता तु ह्यामद्य श्रुतिः पिबतु किन्नरकण्ठि वाचम् ॥

विस्रब्धायाः सम्प्रयोगार्थमभियोगातिशयतोपक्रमो यथा—

जीवयन्निव समूढसाध्वसस्वेदबिन्दुरधिकण्ठमर्प्यताम् ।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहार विभ्रमः ॥

अपरिक्षतकोमलस्य यावत्कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽस्य ॥

नाभिदेशनिहितः सकम्पया शङ्करस्य रुरुधे तया करः ।
तदुकूलमथ चाभवत्स्वयं दूरनिश्वसितनीविबन्धनम् ॥

शिष्यतां निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया ।
शिक्षितं युवतिनैपुणं तया यत्तदेव गुरुदक्षिणीकृतम् ॥

परिचयाभ्यासात्साध्वसापगमो विस्रम्भो यथा—

वासराणि कतिचित्कथंचन स्थाणुना पदमकार्यत प्रिया ।
जातमन्मथरसा शनैः शनैः सा मुमोच रतिदुःखशीलताम् ॥

सस्वजे प्रियमुरोजपीडिता प्रार्थितं मुखमनेन नाहरत् ।
मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥

रात्रिवृत्तमनु योक्तुमुद्यमं सा विभातसमये सखीजनम् ।
नाकरोदपकुतूहलं प्रिया शंसितुं च हृदयेन तत्वरे ॥

भावसूचितरहस्यविक्रियं चाटुमत्क्षणवियोगकातरम् ।
. . . . दिवसैस्तयोस्तया प्रेमरूढमितरेतराश्रयम् ॥

विस्रम्भानुरागयोर्दार्ढ्यार्थं रमणीयपदार्थानां प्रदर्शनमवलोकनं वा प्रेक्षोदीक्षणम् । यथा—

तत्र काञ्चनशिलातलाश्रयो . . . . भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां व्याजहार सहधर्मचारिणीम् ॥

नीलपीतकपिशाः पयोमुचां कोटयः कुटिलकेशि भान्त्यमूः ।
द्रक्ष्यसि त्वमिति सान्ध्यवेलया वर्तिकाभिरिव साधुवर्तिताः ॥

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्यबिम्बमनुबिम्बमात्मनः कानि कानि न चकार लज्जया ॥

तौ सन्धिषुव्यञ्जित वृत्तिभेदं रसान्तरेषु प्रतिभिन्नरागम् ।
अपश्यतामप्सरसांमुहूर्तं प्रयोगमाद्यं वनिताङ्गहारम् ॥

नवोढायाः कामप्रौढिपिशुनमार्तवदर्शनं परिहारः, यथा—

सोहइविसद्दसिन्दूरयकोअदंतरम्मिस्दूसीमंतो ।
उप्फिअसिणिद्धदरपसिढिलालअकेसविण्णासो ॥

बंधुरिअद्धुद्धविहअंदमंदसीदुदिअहासत्तुहिआहिं ।
सहिअणमुहेसुळज्जाकसाइंपोळत्तिअच्छीइं ॥

मज्झिमरेहागअगाढमसुरसीभंतिओसुहावेइ ।
उग्गीणहासधोओहरेअहरोट्ठअसोहळग्गिअसं ॥

देसविमगणामित्तविरइअविणेओ - - -
आरूढपढमपरिहारमंगळोणवगहूसद्दो ॥

ऋतुमतीनामनुरागाभिव्यञ्जकलिनम्वेषाविशेषवेषादयः परिहारविलासाः, यथा—

रेहकपिअपडिरंभणपसारिअंसुरअमंदरंदारे ।
हेकाहळळाविअथोरथणहरंसुअआजुअवंजणाइ ॥

णच्छिवसिपुप्फवइं पुरओताकिं सद्यारिओमासि ।
चिक्कोसि चुळुचुळुंतेहिंपहाविऊणह्म हत्थेहिं ।

पसिअमअणक्कवासे तुहपअंतेदासिसुवासिअच्छिवंती ।
पुप्फवइआणपत्तिअरअणीसुणहोइपरिहारो ॥

. . . लइअपडिचदिसपद्धिअकअवमवसवमवर अणगेणघणु गपणिमिअकचकणो थासाव-
मविदसवीअवमणिपदेवे आरूढोपअञ्जणंमो पागोर्हि वहुरागुणेहिअणंगो मदमच्छिमदळ्ळापापि-
माणइदराजिरयरचिअगमणं ।

णवरमएण अ . . . . . . .
. . . धवळाणळोअणाणवळइओ ॥

मध्याह्नादिकृतदुःखोपलब्धिः कालावस्थानुभवः, यथा—

उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी निर्भिद्योपरि कर्णिकार-
कुसुमान्याशेरते पट्पदाः । तप्तं वारि विहाय तीरनलिनीं कारण्डवः
सेवते क्रीडावेश्मनिवेशिपञ्जरशुकः क्लान्तोजलंयाचते ॥

काश्मर्याः कृतमालमुद्गतदलत्कोयष्टिकष्टीकते तीराश्मन्तकचिम्बि-
चुम्बनमुचो धावन्त्यपः पूर्णकाः । दात्यूहैस्तिमिशस्यकोटरनतिस्कन्धे
निलीयस्थितं वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यतः कुक्कुटाः ॥

कामिना पूर्वाह्णकरणीयं पौर्वाह्णिकं यथा—

ओसिअइक्ष्णिणपडिवक्खवेअणपसिढिल्लेहि अंगेहिं ।
णिव्वत्तिअसुरअरसाणुबंधसुहणिब्भरं सुह्ला ॥

सहिआहिभणमाणाघणथळगांकुसुंभपुप्फंति ।
मुद्धवहूआहसिज्जइपप्फोडंतिणहपआइं ॥

सखीभिर्भण्यमाना स्तनेलग्नंकुसुमपुष्पमिति । मुग्धवधूर्हस्यते प्रस्फोटद्दन्तनखपदानि ॥

प्रेम्णा भावपरिग्रहेण गुरुणा दत्तोपदेशापि सा नाधातुंवदनं
प्रियस्य वदने ह्रीमाध्वसेन क्षमा । सुप्राते विहितस्य मण्डनविधे-
रालोकनच्छद्मना बालास्याननमेव दर्पणतले तं चुम्बितुं चुम्बति ॥

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वचः तत्प्रातर्गुरुसन्निधौ
निगदतस्तस्यातिमात्रंवधूः । कर्णालंबितपद्मरागशकलंविन्यस्य
चंचूपुटे व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम् ॥

मध्याह्नकरणीयं माध्याह्निकं यथा—

णीसेसपसुत्तजणम्मिअद्धरतम्मिग्गिहामज्झह्ले ।
अभिसारेहिजइपच्छंतरुणिअणोवल्लहजआणे ॥

दइअस्स गिम्मवम्महसंतावंदोविसरित्तिअवणेइ ।
मज्जणजळददचंदणसिसिराआलिंगणेणवहू ॥

थोअंपिणणीसरईमज्झण्णेउअसरीरतललुका ।
आअवभएणछाही विपहिअ तांकिणवीसमसि ॥

स्तोकमपिननिस्सरतिमध्याह्ने पश्यशरीरतललीना ।
आतपभयेन छायापि पथिक तत्किनविश्राम्यसि ॥

खुज्जंबएण कहआहत्थाहत्थिवंउव्वणिआतरस ।
मज्झणिअमूळळग्गत्थो अच्छाहिंकुणंतेयाण ॥

अपराह्णकरणीयमापराह्णिकं यथा—

आअंच ळोअणाणं ओव्लंसुअपाअडोरुजहणाण ।
अवरह्णमज्जरीणं कएणकामो धणुं वहइ ॥

आताम्रलोचनानां आर्द्रांशुक प्रकटितोरुयुगलानां ।
अपराह्ण मज्जनशीलानांकृतेकामोवहतिचापं ॥

अवरह्णगअजामाउअस्सउअणेइमोहणुक्कंठं ।
वहुआएघरपरोहुअमज्जणमुहलोवळअसद्दो ॥

अपराह्णागतजामातुर्द्विगुणयति मोहनोत्कंठां । वध्वागृहपश्चान्मज्जनपिशुनो वलयशब्दः ॥

खिण्णस्सउवेइउरेपइणोगिह्मावरह्णरमिअस्स ।
ओव्लंगळंतपुप्फंह्णाणसुअंधंचिहुरहारं ॥

खिन्नस्योरसिपत्युःस्थापयति ग्रीष्मापराह्णरमितस्य । आर्द्रंगलत्कुसुमंस्नानसुगन्धं चिकुरभारं ॥

सालोएच्चिअसूरे घरिणीघरसामिअस्सघेत्तूण ।
णेच्छंं तस्सविपाए धुअइहसंती हसंतस्स ॥

सालोकएवसूर्ये गृहिणीगृहस्वामिनोगृहीत्वा । अनिच्छतोपिपादौ धावतिहसतीहसतः ॥

सवितुरस्ताचलोपगमनमस्तः। यथा—

गवांगच्छन्तीनां प्रतिवसतिपूतेन रजसा दिशः श्यामायन्ते
तनुतिमिरपीतातपतृपः। निरस्तं तेजोभिर्जरठकमठक्रोडकपिलं
गिरेरस्तस्याङ्के पततिसवितुर्बिम्बवलयम् ॥

इदं भासां भर्तुर्द्रुतकनकगोलप्रतिकृति क्रमान्मन्दज्योतिर्गलति
नभसो बिम्बवलयम्। अथैनं प्राचीनः सरतिमुरलीगण्डमलिनः
तरुच्छायाचक्रैस्तबकित इवध्वान्तनिचयः ॥

अहर्विभावर्योः सन्धिः सन्ध्या, यथा—

उत्कीर्णा इववासयष्टिषु निशानिद्रालसाबर्हिणो धूमैर्जालविनिस्सृतै-
र्वलभयस्सन्दिग्धपारावताः। आचारप्रयतः सपुष्पबलिषुस्थानेषु
चार्चिष्मतीः सन्ध्यामङ्गलवर्तिका विभजते शुद्धान्तवृद्धोजनः ॥

सन्ध्याकान्तिकषायितेन नभसा प्रत्यक्षसन्दंशनैर्लीलावेश्मनि-
दीपरश्मिजटिलं नीलं तमोजृम्भते। वेल्लद्बाहुलताविलोलवलयं-
स्वानैरितः सूचितव्यापाराःप्रतियोजयन्ति विविधान्वाराङ्गनावर्णकान् ॥

निशागमान्धकारस्तमो यथा—

तावअतमालकसणोकंचणकडअंबबहळसंझाराअं। (सेतुबन्धे)
पडिपेल्लिऊणअतमो हिअकद्दमम्मुरगइंदणिहसोव्वठिओ ॥ १०–३५
आसण्णम्मिपविरळंबहळंयोओअंतरंमिदूरंमि घणं। ( ,, )
ओहग्गादिट्ठिपसरं सव्वत्थसमट्ठिअंपिदीसइतिमिरं ॥ १०–३६
घउइगाअणंमिमहीवग्गम्मिवणिसम्मळणहाहोळो।
घडिअणह्मेळइणिआलेअच्छाअग्गहळंघआरंमिजअं ॥
कुवळअदळउच्चंसिहिंणीसहिंसिअंसणिहिम्मरगअगज्जा।
कंतिएळसिदसअणीतिमिरुग्गमभरेमि गमअमंडण ॥
घारिअहिप्पगणेतावगआगमकिअअभिसारिआहिं ॥

इन्दोरुद्गमश्चन्द्रः, यथा—

तावग्गुलेअअधराहरकडअतडंतरिअससिअरपारीगहिआ ।
दीसइथोअथिताअंसमारुहंतिव्वणविअळंपुव्वदिसा ॥

विद्दुमवळअच्छणिहारहिरोग्गिअपरादाढासुहआ ।
साहइअसोअणम्मिअवम्महचावतणुई मिअंकरसकळा ॥

जोह्लारसचुण्णइअंकरभिच्छुढतिमिराइअपरिवखेवं ।
रइअमअपत्तळेहं मुहंवरआणीएदाविअं ससिबिंवं ॥

पढमं विद्दुमअंपोपच्छाहोहिसविसेधयळच्छाओ ।
मअपल्लविअविकासिणि मुहपडिमामुक्कदप्पणोव्वमिअंको ॥

चन्द्रातपोज्योत्स्ना यथा—

चंदाअवंमि जाअइमारुअविहुअविहपंतरसामोवइए ।
कुमुउप्पवापीणपरूअंधवळकसणंदुमच्छाआणं ॥

भिण्णतमद्दुद्दिणाइं विडवंतरविरळपडिअचंदकराइं । (सेतुबन्धे)
थोअमुहोलौअइंपअडतिवमुद्धपल्लवाइंवणाइं ॥ १०–४४

दीपाअवपिंजरिआकामिणिहसिअव्वहा परिग्गहसुआ ।
होंति गवक्खोवळआ कालाअरुधूसरासस्रिकिरणा ॥
गोरंगउतरुणीअणोजोह्लहिअहिसरइ सिअणेवच्छपडिच्छे ।
ओविअव्वलहधरइ तच्छाआहिंपुणवण्णिउ ॥
सामलगत्तोमाइगंतिअहिंतीलउवेसुवहंतहमअणुमंत्तिअहिं ॥

निशाप्रथमयामकर्म प्रादोषिकं यथा—

सिज्जुज्जइ उवआरो रोरइअंविपुणो रइज्जइसअणं ।
संहरिअपाणिअव्वआअप्पाहिअपच्चिआविरुब्भइदूई ॥
पिज्जइपिअंपि मुहं दीसइदिट्ठोवि दप्पणे अप्पाणो ।
अणुआणरागपसरा अच्छिज्जइपुच्छिआपुणोविपिअकहा ॥

अज्जेउल्लोअणाइं वंघइरासणंरएइतिलआलोक्खं ।
जाओहोंतसमागमसुहंकरसिओविन्नाउळोअणुइजओ ॥
एत्तहि उच्चहेजंतहितोरणवंतिअहिंदूइ । तणुवेसंतिहिं पथुणिअंतिहिंअत्तिहिं ॥
वेसविसेसुमुअंतीहिंवाळिअहिं । परिअणुकिउविहउंपडंमुत्तालिअहिं ॥

अर्धरात्रं निशीथः, यथा—

क्व प्रस्थितासि करभोरु घनेनिशीथे प्राणेश्वरोवसति यत्रजनःप्रियोमे ।
एकाकिनी वद कथं न बिभेषि बाले नन्वस्ति पुङ्खितशरो मदनः सहायः ॥
सखि सविजितो वीणाद्यूते कयापि परस्त्रिया पणितमभवत्ताभ्यां
तस्मिन्निशाललितं ध्रुवम् । कथमितरथा शेफालीषु स्खलत्कुसुमास्वपि
स्थितवति नभोमध्येऽपीन्दौ प्रियेण विलम्ब्यते ॥

अपररात्रं रात्रिपरावृत्तिर्यथा—

अन्योन्यरक्तमनसामथ बिभ्रतीनांचेतोभुवःसुरसखाप्सरसांनिदेशम् ।
वैबोधिकध्वनिविबोधितपश्चिमार्धा सा संहतेव परिवृत्तिमियाय रात्रिः ॥
कान्ताजनं सुरतखेदनिमीलिताक्षं संवाहितुं समुपयानिव मन्दमन्दम् ।
हर्म्येषु माल्यमदिरापरिभोगगन्धानाविश्चकार रजनीपरिवृत्तिवायुः ॥
प्रातः प्रियेषु सुरतश्रमगाढनिद्रासीदद्भुजोच्छ्वसितपीनपयोधराणि ।
आलिङ्गनानि घटयन्ति विलासिनीनां प्रत्यग्रबोधबहुलाः कृकवाकुवाचः ॥
नाधन्यैः क्षणदाविराममधुराः किञ्चिद्विनिद्रालसस्तोत्रैः मन्मणमुग्ध-
च्चारणवधूदन्तच्छदायासिनः । श्रूयन्ते मृदुपीतमुक्तमरुतः पौराल-
रोतिक्रमव्यालोलाङ्गुलिरुद्धमुक्तसुषिरश्रेणीरवा वेणवः ॥

प्रत्यूषकालकर्म प्राभातिकं, यथा—

तावआरअणिवहूएपरिमत्तंतीएमल्लिमताग ।
कुसुरोजाउपरिमळपीसुणोअणद्धंतोव्वपाअडो पच्चूसो ॥

भूमिणिमिअंकचळणं पिअअपहुत्तपरिअत्तिआणणकमळं ।
सोहइ पेम्मणिअळिअंजअणद्धंतदरपत्थिअंजुअईणं ॥

गतवति नखलेखालक्ष्यतामङ्गरागे समददयितपीताताम्रबिम्बाधरोष्ठ्याः ।
विरहविधुरमिष्टा सत्सखीवाङ्गनाया हृदयमवलम्बे रात्रिसंभोगलक्ष्मीः ॥

एता घूर्णितचूर्णकुन्तलभृतः क्षुण्णस्रगामोदिनीः बिभ्राणाः कबरीः कुरङ्गकदृशो विस्रंसिबन्धाकुलाः । केलिप्रौढिविलुप्तवर्णकतया बिम्बैकशेषैः पुरो पत्रालीतिलकैर्दिशन्ति विजयं सौभाग्यवैदग्ध्ययोः ॥

क्रीडार्थं काननविहारागमनं यथा—

अनुगिरमृतुभिर्वितायमानामथ स विलोकयितुं वनान्तलक्ष्मीम् ।
निरगमदभिराद्धुमादृतानां भवति महत्सु न निष्फलं प्रयासः ॥

कलशैरधिगम्य तं हरन्त्यो हृदयमयत्नकृतोज्ज्वलस्वरूपाः ।
अवनिषु पदमङ्गनास्तदानींव्यदधत विभ्रमसम्पदोऽङ्गनासु ॥

नखरुचिरचितेषु चारलीनं ललितगतेषु गतागतं दधाना ।
मुखरितवलयं पृथौ नितम्बे भुजलतिका मुहुरुत्स्खलत्तरुण्याः ॥

अविरलपुलकस्सहव्रजन्त्या प्रतिपदमेकतरः स्तनस्तरुण्याः ।
घटितविघटितः प्रियस्य वक्षस्तटभुवि कन्दुकविभ्रमं बभार ॥

वने विविक्तालोकजनः कामिनां चेष्टाविशेषो वनविहारः—

व्रततिविततिभिस्तिरोहितायां प्रतियुवतौ वदनं प्रियः प्रियायाः ।
यदधयदधरावलोपनृत्यत्करवलयस्वनितेन तद्विवव्रे ॥

मुखकमलकमुन्नमय्य यूना यदभिनवोढवधूर्बलादचुम्बि ।
तदपि न किल बालपल्लवाग्रग्रहपरया विविदे विदग्धसख्या ॥

इदमिदमिति भूरुहां प्रसूनैर्मुहुरभिलोभयता पुरः प्रकोष्ठ्या ।
अनुरहसमनायि वल्लभेन त्वरयति रन्तुमहो जनं मनोभूः ॥

विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहोवधूर्लतायाः ।
रमणमृजुतया पुरस्सखीनां अकलितचापलदोषमालिलिङ्ग ॥

कामिनामन्योन्यानुरागहेतुः कुसुमपल्लवादिग्रहणविभ्रमः पुष्पापचयः, यथा—

प्रिये परायच्छति वाचमुन्मुखी निबद्धदृष्टिः शिथिलाकुलोच्चया ।
समादधे नांशुकमाहितं वृथा विवेद पुष्पेषु न पाणिपल्लवम् ॥

विलम्बमानाकुलकेशपाशया कयाचिदाविष्कृतबाहुमूलया ।
तरुप्रसूनान्यपदिश्य सादरं मनोऽधिनाथस्य मनः समाददे ॥

व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किलपुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥

सलीलमामुक्तलतान्तभूषणं समासजन्त्या कुसुमावतंसकम् ।
स्तनोपपीडं नुनुदे नितम्बिना घनेन कश्चिज्जघनेन कान्तया ॥

वनविहारायासमूचकोऽवस्थाविशेषः श्रमानुभवः । यथा—

प्रथममलघुमौक्तिकाभमासीच्छ्रमजलमुज्ज्वलगण्डमण्डलेखम् ।
कठिनकुचतटाग्रपातिपश्चादथशतशर्करतां जगाम तासाम् ॥

अविरतकुसुमापचायखेदान्निहितभुजलतयैकयोपकण्ठम् ।
विपुलतरनिरन्तरावलग्नस्तननिहितप्रियवक्षसाललम्बे ॥

अभिमतमभितः कृताङ्गभङ्गा कुचयुगमुन्नतिवित्तमुन्नमय्य ।
तनुरभिलषितुं क्लमच्छलेन व्यवृणुत वेल्लितबाहुवल्लरीकाः ॥

हिमलवसदृशश्रमोदबिन्दूनपनयता किल नूतनोढयष्याः ।
कुचकलशकिशोरके कथंचित्तरलतया तरुणेन पस्पृशाते ॥

श्रमातपादिविगमहेतुर्लतागृहातपत्राद्याश्रयः प्रच्छायादिकसेवा यथा—

नीरन्ध्रद्रुमशिशिरां भुवं सहन्ती साशङ्कं मुहुरिव कौतुकात्परैस्ताः ।
पस्पर्श क्षणमनिलाकुलीकृतानां शाखानामतुहिनरश्मिरन्तरालैः ॥

एकस्यास्तपनकरैःकरालिताया बिभ्राणाः सपदि सितोष्णवारणत्वम् ।
सेवायै वदनसरोजनिर्जितश्रीरागत्यप्रियमिवचन्द्रमाश्चकार ॥

स्वंरागाविपरिवितन्वतोत्तरीयं कान्तेन प्रतिपथधारितातपायाः ।
सच्छत्रादपरविलासिनीसमूहाच्छायासीदधिकतरा तदापरस्याः ॥

संक्षोभक्षमगहनामथोपगङ्गं बिभ्राणंज्वलितमणीनिसैकतानि ।
अध्यूषुश्च्युतकुसुमाचितांसहाया वृत्तारेरविरलशाद्वलां धरित्रीम् ॥

नद्यादौ मज्जनविलासो जलक्रीडा यथा—

शुभाननाः साम्बुरुहेषु भीरवो विलोलहाराश्चलफेनपङ्क्तिषु ।
नितान्तगौर्योहतकुङ्कुमेष्वलं नलेभिरेताःपरभागमूर्मिषु ॥

प्रियैरसलीलंकरवारिवारितः प्रवृद्धनिश्वासविकम्पितस्तनः ।
सविभ्रमाधूतकराग्रपल्लवो यथार्थतामाप विलासिनीजनः ॥

ह्रदाम्भसि न्यस्तवधूकराहते रवं मृदङ्गध्वनिधीरमुज्झति ।
मुहुःस्तनैस्तालसमंसमाददे मनोरमंनृत्तमिवप्रवेपितम् ॥

श्रिया हसद्भिःकमलानिसस्मितैरलङ्कृताम्बुप्रतिमागतैर्मुखैः ।
कृतानुकूलासुरराजयोषितां प्रसादसाफल्यमवाप जाह्नवी ॥

स्नानादनन्तरं वस्त्राभरणमाल्यानुलेपनादिग्रहणं नैपथ्यप्रयोगो यथा—

किं भूषणैस्तव विभूषितमात्मनैव दिग्धंरुचैव मलिनैरलमङ्गरागैः ।
स्वच्छाम्बरं वपुरुपाहितरूपगर्वं स्नानार्द्रमेव सुभगे मुदमादधाति ॥

आलिख्यपत्रमसिता गुरुणाभिरामं रामामुखे क्षणविभासितचन्द्रबिम्बे ।
जातश्रिराद्विकसनाद्वसरोऽयमस्येत्युक्त्वा सखी कुवलयं श्रवणे चकार ॥

दोलायमानपटुकान्तिलतंललाटपट्टंललामललितश्रियमुद्वहन्त्या ।
एकीभवत्सुरशनासनशीतरश्मिखण्डाहतामनुचकारदिवंनभःश्रीः ॥

श्लाघ्यात्मना दशनकोटिकृतच्छेदेन सम्प्राप्य चुम्बनसुखानुभवं तदानीम्।
रागात्कुशेशयदृशामधरेषु नागवल्लीदलेनयदकारि किमद्भुतं तव ॥

सम्भोगविशेषार्थमाक्रीडशैलसेवाक्रीडापर्वतविहारः, यथा—

मेरुमेत्य मरुदाशुवाहनः पार्वतीस्तनपुरस्कृतः कृती ।
हेमपल्लवविहङ्गसंस्तरानन्वभूत्सुरतमर्दनक्षमान् ॥

पद्मनाभवलयाङ्कितारमसु प्रासवत्स्वमृतविप्रुषोनवाः ।
मन्दरस्य कटकेषु चावसत्स प्रियावदनपद्मषट्पदः ॥

रावणध्वनितभीतया तया कण्ठसक्तमृदुबाहुबन्धनः ।
एकपिङ्गलगिरौ जगद्गुरुर्निर्विवेश विशदाः शशिप्रभाः ॥

तस्य जातमलयस्थलीरते धूतचन्दनरतः प्रियाक्लमम् ।
आचचाम सलवङ्गकेसरश्चाटुकार इव दक्षिणानिलः ॥

समारूढप्रौढविस्रम्भानुरागोद्दीपनापरेश्यामहिम्नि विविधक्रीडाः प्रवर्तयेत्, तास्वेकमेव कुसुम-
निर्भरं शाल्मलीवृक्षमाभित्य सुनिमीलितकादिभिः खेलन क्रीडा, एकशाल्मली यथा—

को एसोच्चिपलत्तंसामलिवलिअंपियं परिक्खसइ ।
हलिमसुअंसुद्धवहू सेभजलोल्लेण हत्थेण ॥

क एव इतिप्रस्तावार्तितं शाल्मलिवलितं प्रियं परिपातयति ।
हालिकसुतं मुग्धवधूः स्वेदजलार्द्रेण हस्तेन ॥

जोविणपुच्छइतरसयिक्कहेइ भंगाइतेणवळआइं ।
हअउज्जहमासअहवपिओमोपराईए ॥

यत्र कस्ते प्रिय इति पृच्छद्भिः पलाशादिनवलताभिः प्रियजनो हन्यते सा नवलतिका, यथा—

वाडेइविदिअं गम्मिज्जं मिविदिण . . एवलइअं ।
सअळावअवाइसच्चळंतिसंतम्मिआवसिओ ॥

णवलअपहरं अंगे जहिंजहिं महइदेअरोदाउं ।
रोमंचदंडराई तहिंतहिं दीसइ वहूए ॥

नवलताप्रहारमंगेयत्रयत्रेच्छति देवरो दातुं । रोमांचदंडराजिस्तत्र तत्र दृश्यते वध्वाः ॥

तेण इरुणवळआए दिण्णोपहरोइमीएथणवट्ठे ।
गामतरुणीहिअज्जविदिअहंपरिआळिआ भमइ ॥

तेनकिलडोलाविलासेदत्तः प्रहारपतस्याः स्तनपृष्ठे ।
ग्रामतरुणीभिरद्यापि दिवसं प्रतिपालिताभ्रमति ॥

णवळअपहरुत्तट्ठाएतंकअंकिंविसुह्लाए ।
जंअज्जवि जुअइजणो घरेघरे सिक्खिउंमहइ ॥

प्रतिनाम प्रश्नपूर्वक प्रहारत्रुष्टया तत्कृतं किमपि हालिकस्नुषया ।
यदद्यापियुवतिजनो गृहेगृहे शिक्षितुं भ्रमति ॥

पाञ्चालमुनिप्रवर्तितमिश्रभाषायेषचेष्टितैः प्रहासक्रीडा पाञ्चालानुयातम्, यस्या भूतमाः
प्रसिद्धिः, यथा—

हत्थेमहामंसवलीधराओहुंकारफेक्कारसवार उद्दा ।
णिसाअरीणंपडिसोसएहिंमहामसाणाभिणअंकुणन्ति ॥
इमामसीकज्जलकालकायातिक्खणुचावाभविलासिणीओ ।
पुलंदवेणेजणरसहासंसमोरपिंछभरणाकुणंति ॥
कोमुइछ्लअजणंगमवेसावेणुवादणपराअवराओ ।
वेणुतालरवतासिजलोअं ओसरंतिपणवंतिहसंति ॥
काविआरिदकरालहुडुक्का मड्ढमद्दललएणमअच्छी ।
भूलदाहि परिवाडिचलाहिं चेदिकम्मकरणंमियअट्टा ॥

प्रथमपर्षणप्ररूढनपतृणाङ्कुरासु स्थलीषु शाद्वलमभ्यर्च्य भुक्तपीतानां छत्रिमविवाहादिक्रीडानव-
पत्रिका । तत्र च वरनविधानादौ तेषामेवंविधाः परिहासा भवन्ति, यथा—

आसण्णकुट्टगेजुण्णदेउळेबहुजुआणसंकिण्णे ।
थेरोत्तिपइमारुअसुपुत्तिदिण्णासि सुग्गामे ॥

ताकुणह कालहरणं तुयरंतम्मिविवरेविशाहस्स ।
जावउणणह्पआलं होंत्तिकुमारीए अंणाइं ॥

तावत्कुरुतकालहरणं त्वरमाणेपिवरे विवाहस्य । यावत्पांडुनवपद्मानिभवन्ति कुमार्या अंगानि ॥

कइआजाआकइआणुत्तुसिकिसवआमाउआह्अकुमारी ।
तंतं जाणइसप्वं जंजं महिलाओजाणंति ॥

कदाजाताकदानुशिक्षितामातईतकुमारी । तत्तज्जानातिसर्वं यद्यन्महिलाजानन्ति ॥

तत्थवि होंति सहीओ पुच्छिइमारुअसुज्झत्थदिण्णासि ।
वंजुलणिउंजलीलातत्थयिगिरियाहिणीगोला ॥

वर्षासु कदम्बनीपहरिद्रुमादिकुसुमैः प्रहरभूतैर्द्विधाबलं विभज्य कामिनां क्रीडाः कदम्बयुद्धानि यथा—

सहिंआहिपिअविसज्जिअकलंवरअभरिअणिब्भरूससिओ ।
दीसइ कदंवथवओव्वथणहरोहलिअसुह्लाए ॥

सखीभिः प्रियविसर्जित कदंबरजोभरितनिर्भरोच्छ्वसितः ।
दृश्यते कदंबस्तबकइव स्तनभरो हालिकपुत्र्याः ॥

थणवट्टुच्चिअकलंवरेणुणिब्भरणिमीलिअच्छीए ।
भम्मइसेसोनिजणोकलंम्बकुसुमो हिसुह्लाइ ॥

भम्मइपिआए दइओ कलंवगुच्छेणमुच्छपदिअरो ।
हम्मइदइएण पिआपीडाउससे सवत्तीणं ॥

अण्णोसिरेहजिदुअंहत्तिअसुआपणअमहरुच्छंगे ।
पेच्छंतस्सविपइणोजंतुहकुसुमाउणिपडंनि ॥

अभिनवबिसाङ्कुरोद्भेदसमये सरस्समाभिरामकामिमिथुनानां क्रीडा बिसखादिका यथा—

गेह्लंति पिअअमापिअअमाणवअणाहिंबीसअलद्धाइं ।
हिअआइंविकुसुमाउहवाणकआणेअरं घाइं ॥

गृह्णन्ति प्रियतमाः प्रियतमानां वदनाद्बिसलतार्धानि ।
हृदयानीव कुसुमायुधबाणकृतानेकरन्ध्राणि ॥

दिअरोयहुत्तिआए पुणोपुणोमुहमुणालसत्थाए ।
दंतप्पहंसवित्थइ पिहसिज्जंतो पिअअमाए ॥

एतेन नात्यूपच्छादिकेक्षुमधिका च व्याख्याता । यथा—

मअणग्गिणाकरोमेदड्ढोत्तिपुणोपुणच्चिअकहेइ ।
हळिअसुआमळिअब्भूसदोहळिपामरजुआणो ॥

दिअरस्स सरसमउरं सिंदूसळिएणदेइ हत्थेण ।
पढमंहिअअंवहुआपच्छागंडंसदंदंतवणं ॥

देवरस्य शरम्मृदुकमथुमलिनेन ददातिहस्तेन । प्रथमं हृदयं वध्वा पश्चाद्गण्डं सदन्तव्रणं ॥

शक्रमह इन्द्रोत्सवो यथा—

सच्चंच्चिअकट्ठमओ सुरणहोजेणहळिअधूआए ।
हत्थेहिंकमळदळकोमळेहिं चित्तोणपल्लविओ ॥

सत्यमेवकाष्ठमयस्सुरनाथोयेनहालिकदुहित्रा । हस्तैः कमलदलकोमलैः स्पृष्टोनपल्लवितः ॥

इदमहंदट्ठुमणो सच्चोच्चिअदड्ढणामरच्छाए ।
मोत्तूणतंणिसंको अज्जजणोणवोळीणो ॥

आश्विनपौर्णमासीविलासः कौमुदीप्रचारः, यथा—

अहतुइसहत्थदिण्णोकहकहविहलंतमत्तजणमज्झे ।
तिस्साघणेसुजाओविलेवणंकोमुईवासो ॥

अथाथवास्वहस्तदत्तः कथमिवस्खलन्मत्तजनमध्ये । तस्याःस्तनेषुजातो विलेपनं कौमुदीवासः ॥

घेत्तूणपुप्फमुट्ठिंहरिसूमळिएणवेपमाणीए ।
भिसुळेमित्तिपिअअमहत्थेगंदोअअं जाअं ॥

गृहीत्वापुष्पमुष्टिं हर्षोत्सुकितायाः वेपमानायाः । अवकिरामीति प्रियतमहस्ते गन्धोदकंजातं ॥

दिअरेणपिआथणए कोमुइवासेणकद्दमिज्जंते ।
हसईपरिओससुण्णं उव्वअमुहं हळिअवुत्तो ॥

दीपोत्सवो यक्षरात्रिर्यथा—

अण्णेविहिहुहोंतिछणाणउणोदीवाळिआएसारिच्छाते ।
जत्थजहिच्छंगम्मइपिअवसईदीवअमिसेण ॥

अन्येपिप्रभुभवन्तिक्षणा नपुनर्दीपालिकासदृक्षास्ते ।
यत्रयथेच्छंगम्यते प्रियवसतिदीपकमिषेण ॥

सुह्लाए हिअअगुणिअंदासइदिअरस्सछणपईवेण ।
सज्झसपअंपिअत्थणणीसासंदोळिअसिहेण ॥

इयुहयन्तीव्रतमष्टमीचन्द्रकः, सहिचैत्रचतुर्थीतोऽष्टमचतुर्थ्यांमुदीयमानः कामिनीभिराव्यते, यथा—

अवसहपव्वअचरणेणपुत्तिमाखेसुवेसुअणो ।
उग्गमिहमाणससीतुहवअणसिरीएजुहसोहो ॥

अवसहअजणोपइणासलाहमाणेणएच्चिरं हमिओ ।
छंदोत्ति तुज्झमुहसमुहदिण्णकुसुमंजलिविलक्खो ॥

अपद्याहतजनः पत्याश्लाघ्यमानेन यच्चिरंहसितः ।
चंद्रइतितवमुखसम्मुखदत्तकुसुमांजलि विलक्षः ॥

यस्यां यवप्रस्तरेष्वपलोलंति सा कुन्दचतुर्थी, यथा—

ञाहितुमं सच्चविआत्रिणअंसणलोलिरीजुआणेहिं ।
तेतचच्छिअच्छेत्तेमअउळउव्भेसआ जाआ ॥

लुलिआगहवइधूआदिह्लंवफलंजवेहिंसविसेसं ।
एह्लिआणिवारिअमेयगोहणं चरउछेत्तंमि ॥

लुलितागृहपतिसुता दत्तमिषफलं यवैस्सविशेषं । इदानीमनिवारितमेयगोधनं चरतुक्षेत्रे ॥

वसन्तावतारदिवसः सुवसन्तकः, यथा—

फंगुच्छणणिद्दोसंकिणाविद्दमपसाहणंदिण्णं ।
धणअलसमुहपलोद्दंतसेअधोअंकिणोधुअसि ॥

फाल्गुणोत्सवनिर्दोषं केनापि कर्दमप्रसाधनं दत्तं ।
स्तनकलश मुखप्रलुठत्स्वेद धौतंकिमिति धावयसि ॥

छणपिट्ठधूरत्थणिमुहुमअंतंबच्छिकुवलआहरणे ।
कण्णकअचूअमंजरिपुत्तितुए मंडिओगामो ॥

क्षणपिष्टधूसरस्तनिमधुमदताम्राक्षिकुवलयाभरणे ।
कर्णगतचूतमंजरि पुत्रित्वयामंडितोग्रामः ॥

सहकारकुसुमपल्लवादिभञ्जनं सहकारभञ्जिका, यथा—

तुंसिमए चूअंकुरदिण्णो कामस्सगहीदधणुअस्स ।
कामिअणअअदळणे पंचब्भहिओसरोहोहि ॥

त्वमसिमयाचूतांकुरदत्तः कामस्यगृहीतधनुषः ।
युवतिमनोमोहनसखः पंचाभ्यधिकदशरोभव ॥

रइअंपितण्ण सोहइरइजोग्गंकामिणीणणेवच्छं ।
कण्णेजावणरज्जइकओलघोलीतपल्लवं सहआरं ॥

रचितमपितावच्छोभते रतियोग्यं कामिनीनां क्षणनेपथ्यं ।
कर्णेयावन्नरज्यते कपोलघूर्णमान सहकारं ॥

अन्दोलनक्रीडाडोलाविलासः, यथा—

अंदोळणलंघिअवइसिहाएदिट्टेतुमम्मिमुद्धाए ।
आसंघिज्जइ काओकरपेल्लणणिच्चळादोळा ॥

उच्चपसहित्तणं ते अवरज्झइ चंदमंदसुहस्स ।
वारहिं जणविवसिवहूए अंदोळमाणीए ॥

उदकपूर्णा दृत्तेलांघनाडी यस्यां क्रीडायां सा उदकक्ष्वेलिका, यथा—

अस्मिन्प्रकीर्णपटवासकृतेऽन्धकारे दृष्टोमनाङ्मणिविभूषणरश्मिजालैः ।
पातालमुद्यतफणाकृतिश्रृङ्गकोऽयं मामद्य संस्मरयतीवभुजङ्गलोकः ॥

श्रृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः कौसुम्भं पृथुकुचसङ्गि वासः ।
माध्वीकप्रियतमसन्निधानमासां नारीणामितिजलकेलिसाधनानि ॥

मदनत्रयोदश्यां कामदेवादिपूजा मदनोत्सवः, यथा—

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभातिमकरकेतोः पार्श्वस्था चापयष्टिरिव ॥

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपप्रभवा लतेव ॥

क्रीडान्ते गृहागमनं गृहप्रत्यागमः, यथा—

कंठावलंबिअपिओपिअअमकंठावलंबिओगेहं ।
अणुसरइखेअपसिढिलगुरुआवअवोपिआसद्धो ॥

हंहोकण्णुल्लीणा भणामिरे सुहअकिंपिमातूर ।
णिज्जणपाणत्थि संकडंमिपुण्णेहिकद्धोसि ॥

बालअदूरे गामो पत्तलबहुलाइमाइवणराई ।
मावच्छतुमंअज्झिऊणसहिसत्थविच्छुडिअं ॥

सातुइ सहत्थदिण्णंकण्णेकाऊणघोरसंघडिअं ।
लज्जालुइणी बहुआघरं गआ गामरच्छाए ॥

सात्वयास्वहस्तदत्तामद्यापिरे सुभग गन्धरहितामपि ।
उद्वसित नगरगृहदेवतेव नवमालिकांवहति ॥

सख्यादीनां कर्माणि सहायव्यापारः, यथा—

एहेहि किंपितिरसाकएणणिक्खिवभणामि अळमहवा ।
अविआरिअकज्जारंभआरिणी मरउणभणिस्सं ॥

सच्चं जाणइ दट्ठुं सरिसम्मिजणम्मिजुज्जए राओ ।
मरउणतुमंभणिस्संमरणंपि सलाहणिज्जंसे ॥

सत्यंजानातिद्रष्टुंसदृशेजने युज्यतेरागः ।
म्रियतां नत्वांभणिष्यामि मरणपि श्लाघनीयंतस्याः ॥

तार्किकरेदुउ जइतुंसितीएवइवेढवेल्लिअथणीण ।
पाअंगुट्ठेक्खित्तणीसहंगीएविणदिट्ठो ॥

अप्पाहिआइतुहतेण जाइताइम्मएणमुणिआइं ।
अच्चुक्खयसासपरिक्खइंतविसमक्खरपलाइं ॥

व्याहृतानितवतेनयानितानिमयानज्ञातानि । अतिमात्रश्वासपरिस्खलद्विषमाक्षरपदानि ॥

सम्भोगार्थं शरीरप्रतिकर्म प्रसाधनम्, यथा—

दिण्णतणूअंजणाइं जुअइअणरसदररत्ततावोग्गाइ ।
आसण्णरइसुहाइं अहिवासिज्जंतिवम्महेणमुहाइं ॥

परिउंबणेण अहरो अंधइहिअअहरिसेणणअणच्छाआ ।
सोहंकुणइपिओच्चिअ विरएइमुहावसाहणंजुग्यइजणो ॥

दरत्तमपत्तलेहोमग्गागविअमोवहूणसुहिओ ।
पट्ठिमुहद्धिअहिअओजाअइपंजंतमंडणोजुअइजणो ॥

णिम्मविअमंडणाणविसोहायासअंपिमाणिआणविळिआ ।
मोहंगणेश्वच्छइणेगरिओसोच्चिअपसाहणंअंअईण ॥

समानलीलाविद्याविलयवसानुरूपालापैरासनबन्धो गोष्ठी । तस्यां विहरणं गोष्ठीविहारः । तत्र च ।

पुष्पोपहाररत्नमिजृम्भितपिण्डधूपे दीपांशुभिः कपिशिते धृतदाम्नि हर्म्ये ।
कान्तासखः सहचरानुगतश्च कामी श्यामामुखे स्मितमुखो विदधीतगोष्ठीम् ॥

सङ्गीतमत्र कलयेन्मृदुकाकलीभिः गाथाः पठेच्च मसृणंमदनाग्रदूतीः ।
द्व्यर्थैः पदैः पिशुनयेच्च रहस्य वस्तु हृद्यं हसेच्च दशनांशुभिरुल्लसद्भिः ॥

तत्र गाथा यथा—

पोढमहिकाणजंसुट्ठुसिक्खिअंतरएसुहावेइ ।
जंजं असिक्खिअणवहूणतंतंदिहिं देइ ॥

द्व्यर्थपदप्रयोगो यथा—

चंदणवलिअंदड्ढकंचिबंघणंदीहरंसुपरिणाहं ।
होइघरे साहीणं मुसलं घण्णाण महिळाण ॥

रत्नावासप्रवेशो धासगृहोपगमनम्, यथा—

वेसइससिइ किळम्मइसअणे आसुअइणीसहेअंगाइं ।
णविणज्जइ किंभीओमअवरव्वसोविळासिणीसत्थो ॥
णेवच्छदिण्णहिअओ ओसारिअसहीअणंतठिअणिट्टअं ।
चुच्छइआइत्तिपहं विअपडिवतिरसिओविळासिणीसत्यो ॥
आळिहदिपिअमाआसण्णविओअवम्माहाउरहिअअं ।
पुलडग्गमेण विधुणिअकेअमाणविमुहविकासिणीसत्थं ॥
अप्पेइअजुअइजणोतपिअदइआएसमुहदसदिण्णं ।
हिअअपहुत्तभहिअंमुहणवहुप्पंतळोअणोपरिओसं ॥

मदनार्तागामिकामिनीप्रतिपालनमभिसारिकाप्रतीक्षणं, यथा—

अहिसारणंणगह्नइतसंठवेलअलपुच्छइआई ।
चंदाळोअपडिहओविवेइमूढहिअओ विकासिणीसत्थो ॥
अहिसारणट्ठात्थेचिरगमणुच्चाअणीसहाइसमअंणं ।
वीसमउंपडमगाअं णदेइजुवरीणसुरअतुरिअंहिअअं ॥
अमभत्तमंडणच्चिअपच्चघरंसेसकोउहल्लरसा ।
वोळाविअहळहळअरसपुत्तिचिंतेणलग्गिहिसि ॥

असमाप्तमंडनैवप्रजगृहं तस्यसकौतूहलस्य । व्यतिक्रान्तौत्सुक्यस्य पुत्रिचित्तेनलगिष्यसि ॥

अळिअपसुत्तअविणिमिल्लेअच्छदेसुहअमज्झओआसं ।
गंडपरिउंबणापुळइअंगणउणो चिराइस्सं ॥

अलीकप्रसुप्तविनिमिलीताक्ष देहिसुभगममायकाशं ।
गण्डपरिचुंबनापुलकितांग नपुनश्चिरयिष्यामि ॥

प्रियजनाह्वानाय सखपार्श्वसंप्रेषणं दूतिविसर्जनं यथा—

दूइतुमंविअणिउणाकक्कउमउआइजाणसेवोच्चुं ।
कंडुइअपंडुरंजहणहोइतहतंकुणिज्जासु ॥

दूतित्वमेव निपुणाकर्कशमृदुळानि जानीषेचकुं । कण्डूयितपांडुरं यथानमघाति तथाकुरु ॥

णिवससिदुक्खसहाआमहहिआए सोपिओ तहिं चेअ ।
सहिसुणहदोविदुसेपरमत्थंव . . संदिसिमो ॥
सुरअसुहल्लालसाहिं पिअअमपत्थंतरेसुपुणरुत्तं ।
पेसिज्जंतिसरहसं समअंदूईहिदिट्ठीओ ॥
अहिअं समागमाहिविपिअमसंदेसिआहिआईहि ।
सोक्खंधूणंदअरासीसंतादेत्तिसंदेए ॥

निमित्तविशेषात्प्रियाणां गमने स्वयंवा तत्रगच्छेदिति स्वयंवा गमनं यथा—

विच्छिडिज्जइधीरं दारगआपडिवहंणिज्जदिट्ठी ।
गम्मइहिअअम्मिगए पिआणगअदूइमग्गउच्छिअअवसहिं ॥
पढमपहा . . पुहिज्जओपओसआळवपीडसिद्धवीराभे ।
पेच्छइगमणंधवहे चंदकराअप्पिए पिएजुअइजणो ॥
सेओल्लअसव्वंगी णामग्गहणेण तस्ससुहअस्स ।
दूइं अप्पाहेंतीतस्सेअधरंगणं पत्ता ॥

स्वेदार्द्रीकृतसर्वांगी गोत्रग्रहणेन तस्यसुभगस्य । दूतीं अपहन्ती तस्यैवगृहांगणंप्राप्ता ॥

सुहउज्जअंजणंदुल्लहंपिविदूराओअह्मआणेंत ।
उअआरिअजरअजीअंपिणेंतणकआवराहोसि ॥

सुखपृच्छकंजनंदुर्लभमपिदूरादस्माकमानयन् । उपकारकज्वरजीवमपिनयन्नकृतापराधोसि ॥

मातस्वार्म्युत्थानादिप्रतिपत्तिरागतोपचारः, यथा—

जणिअहरिसाणतक्खहिअआपडिअंपि पिअअमन्भुट्ठाणं ।
अंगेहि कामिणीणं संभावेउंमआणसेणच्चलअं ॥

कामिणिजणस्स सहसापिअदंसणवित्थणंतहरिसविमुहिसा ।
दियसगुणिआवि हिअएणहोंतिपडिवत्तिभरसहाउव्ळावा ॥
तामरसकोमळाओपिअकंठालिंगणेसमुक्खिताओ ।
परिअंमावेलमओ जुअईणघरेइवम्महोवाहाओ ॥
मरिमन्थराभिरलघूरुभरादथिवेश्मपत्युरुपचारविधौ ।
स्खलिताभिरप्यनुपदं प्रमदाः प्रणयातिभूमिमगमन्गतिभिः ॥

आगतानामनुरागवृद्धये प्रसाधनसंवाहनादिविधिः परिचरणम् । यथा—

तां पुलोमतनयालकोचितैः पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनस्सस्पृहं सुरवधूभिरीडितः ॥
आविवाहसमयाद्गृहेवने शैशवे तदनुयौवनेपुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेषते ॥
लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टिहारिममलोचनबान्धवस्य ।
अध्यासितुं तव चिरं जघनस्थलस्य पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥
किंशीतलैः क्लमविनोदिभिरार्द्रवातान् सञ्चारयामि नलिनीदलतालवृन्तैः ।
अङ्केनिधायकरभोरुयथासुखंते संवाहयामिचरणावुतपद्मताम्रौ ॥

रिरंसातिशयात्सख्यादीनामनवेक्षणादिभिरत्यापनं विसर्जनम्, यथा—

भर्तृपूपसखि निक्षिपतीना मात्मनःस्फुटमदोद्यमितानाम् ।
व्रीडया विफलयावनितानां न स्थितं न विगतं हृदयेभ्यः ॥
मिथ्यामीलदरालपक्ष्मणि वलयन्तःकुरंगीदृशो दीर्घापाङ्गसरित्तरङ्ग-
सरलेतल्पोन्मुखे चक्षुषि । पत्युःकेलिमतः कथा विरमयन्नन्योन्य-
कण्डूयनैः कोमां व्याहरतीत्युदीर्य निरगात्सव्याजमालीजनः ॥
मधुमदपरिपाटलप्रकोपद्विगुणतरारुणितेक्षणं मृगाक्ष्या ।
रतिरसमनयाघनापराधं प्रियमिव सेर्ष्यदृशा व्यलोकिदीपः ॥

अथ रतिरभसादलीकनिद्रामधुरविघूर्णितलोचनोत्पलाभिः ।
शयनतलमधिश्रयद्वधूभिः सहमदमन्मथमन्थरा युवानः ॥

कूर्पासकविभूषणादित्यागः कञ्चुकादिमोक्षः, यथा—

सव्वंगत्ता कंचुअम्मिमणिवलअणिबडेपडिव . .
गेरइलालसलीलाविसूरिअंसहउमिहुणस्स ॥

खिप्पइहारो थणमंडलाओतरुणीहिंरमणपरिरंभे ।
अच्चिअगुणाविगुणिणोलहंतिलहुअत्तणंकाले ॥

क्षीप्यतेहारः स्तनमण्डलात्तरुणीभीररमणपरिरंभे ।
अर्चितगुणाअतिगुणीनोलभन्ते लघुत्वं काले ॥

वीसंतरसविळासिणि हिअअं कुसुमाउहस्सरसणाए ।
पुण्णाइमंगळंपिव गिज्जउमुच्छंतवंधाए ॥

उत्तारिअणेउरहारतिलआताडंकवळअरसणंमि ।
अविहअपसरोमअणो धावइ अंगम्मि तरुणीणं ॥

. . . . . प्रक्रमो रतारम्भः, यथा—

तत्क्षणंविपरिवर्तितह्रियोः नेष्यतोः शयनमिद्धरागयोः ।
सा बभूव वशवर्तिनी द्वयोः शूलिनः सुवदना मदनस्य च ॥

घूर्णमाननयनं स्खलत्कथं स्वेदबिन्दुमदकारणस्मितम् ।
आननेन न तुतावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥

नाभिदेशनिहितः सकम्पया शङ्करस्य रुरुधे तयाकरः ।
तद्दुकूलमथचाभवत्स्वयं दूरमुच्छ्वसितनीविबन्धनम् ॥

घोल्इतहिंतहिंचिअणतरणतरुणीएळंघिउंमज्झं ।
णाभिमहावत्तममाडीओव्वहृत्थोपिअअमस्स ॥

आलिङ्गनादिप्रयोगो रतम्, यथा—

उत्तरीयविनयात्त्रपमाणा रुन्धतीकिल तदीक्षणमार्गम्।
आवरिष्ट विकटेनविवोढुर्वक्षसैव कुचमण्डलमन्या॥

लोलदृष्टिवदनं दयिताया३चुम्बति प्रियतमे रभसेन।
व्रीडया सह विनीवि नितम्बादंशुकं शिथिलतामुपपेदे॥

सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुक्तमलमर्थवचांसि।
हासभूषणरवाश्च रमण्यः कामसूत्रपदतामुपजग्मुः॥

नान्दीपदानिरतिनाटकविघ्नशान्तावाज्ञाक्षराणि परमाण्यथवा स्मरस्य।
दष्टेऽधरे प्रणयिना विधुताग्रपाणेःसीत्काररुष्करुदितानि जयन्ति नार्याः॥

रतप्रयोगविरामो रतावसानं यथा—

प्राप्यमन्मथमदादतिभूमिं दुर्वहस्तनभराः सुरतस्य।
शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः॥

विश्रमार्थमुपगूढमजस्रं यत्प्रिये प्रथमरत्यवसाने।
योषितामुदितमन्मथमादौ तद्द्वितीयसुरतस्य बभूव॥

प्रेक्षणीयकमिवेक्षणमासां ह्रीतभङ्गुरविलोचनपाताः।
श्लिष्टचन्दनविशेषकभक्तिभ्रष्टभूषणकदर्थितमाल्यः॥

सापराधइव मण्डनम . . . . त्मनैव सुदृशामुपभोगः॥

रतावसाने सुखस्वापो निद्रानुभवः, यथा—

आश्लेषिणः पृथुतरक्रमशीतपीतमायामिनीर्घनमुदो रजनीर्युवानः।
ऊर्वोर्मुहुर्वलयबन्धनसन्धिलोलपादान्तसंवलिततूलपटाः स्वपन्ति॥

लघुनि तृणकुटीरे क्षेत्रकोणे यवानां नवकमलपलालस्रस्तरे सोपधाने।
परिहरति सुषुप्तं हालिकद्वन्द्वमारात्कुचकलशमहोष्मावद्धरेखस्तुषारः॥

व्रीहिःस्तम्बकरी प्रभूतपयसःप्रत्यागताधेनवः
प्रत्युज्जीवनमीक्षणाभ्यसमिति ध्यायन्तयेनान्यधीः ।
सान्द्रोशीरकुटुंबिनीस्तनभरव्यालुप्तघर्मक्लमो
देवेनीरमुदारमुञ्झतिसुखं शेते निशिग्रामणीः ॥

चिरतररतिखेदप्राप्तनिद्रासुखानां
चरममपिशयित्वा पूर्वमेवप्रबुद्धाः ।
अपरिचलितगात्राःकुर्वते नप्रियाणा
मशिथिलभुजचक्रश्लेषभेदंतरुण्यः ॥

क्रियात्मनोऽसीकालस्य भेदाद्विस्रम्भणादयः ।
विस्रम्भणादिसम्भोगभेदावच्छेदहेतवः ॥
चतुष्षष्टिरतोत्रैवकेचिद्विस्रम्भणादयः ।
मानाद्यनन्तरेपि स्युः केचिच्चन्द्रोदयादयः ॥

सम्भोग उक्तः प्रथमानुरागादनन्तरस्सोयमनेकभेदः ।
मानात्प्रवासात्करुणाचसम्प्रत्यनन्तराः किञ्चिदुदाहियन्ते ॥

इति श्रीमहाराजाधिराज श्रीभोजदेव विरचिते
शृङ्गारप्रकाशे प्रथमानुरागप्रकाशो नाम
चतुस्त्रिंशः प्रकाशः समाप्तः ॥



॥ श्रीः ॥

# महाराजाधिराज श्रीभोजदेवविरचिते

# शृङ्गारप्रकाशे

## ॥ पञ्चत्रिंशः प्रकाशः ॥



अथ मानानन्तरः—तत्र रतिप्रकर्षनिमित्ताभिलाषणीयालिङ्गनाधनवातिहेतवः मानागम प्ररोदनादयः सम्भोगप्रादुर्भावाख्याः भवन्ति। कः पुनरत्रसमासः, षष्ठी तत्पुरुषएव। काबृत्तिः, प्रथमानुरागादनन्तरचानुरस्तुपरस्यार्थेपुरकं। तत्र विस्रम्भणादिभेदाः प्रथमानुरागस्य विद्यमानत्वात्। इहतुमाननिवृत्तौ मानावगमादयःजायन्ते। अन्यथाद्विशेषणं भविष्यंति। तद्यथा—घृतघटः, तैलघटः इति। निषिक्तेपि घृतेतैलेवा . . . . विशेषणं भविष्यति, अयं घृतघटः, अयं तैलघटः इति। भवतिहि तत्र यावद् यावतीवा अर्थमात्रा इहापि . . . . स्तुवयमेव, सकषायैरेवमानयैनीयक . . . . स्तुदन्ति। शयनीयंगच्छेति। किञ्च—

> उन्नमय्य सकचग्रहमास्यं चुंबतिप्रियतमे हठवृत्या।
> हुंहुमुञ्चममामितिमन्दंजल्पितंजयतिमानवतीनाम् ॥

इति मानान्वयः दृश्यते। ननु च अन्वयग्रहणेनान्वयव्यतिरेकयोः स्मारितोऽस्ति। ततश्च निश्चिनमेभिर्मानापगमादिभिर्मानधाश्शब्दैरेवमवितव्यं। तथाहि—प्रथमानुरागानन्तर इत्युक्ते कश्चिद् शब्दश्श्रूयते। प्रथमानुरागोत्यनन्तरेतिच प्रतीयमानविभागः। अर्थोऽपिकश्चिद्दृश्यते। विस्रम्भणादिभिरवधिमत्वं च। मानानन्तर इत्युक्ते कश्चिच्छब्दभागोहीयते कश्चिदुपजायते कश्चि-दन्वयी प्रथमानुरागो हीयते मानेत्युपजायते अनन्तरेत्यन्वयी। तेन मन्यामहे यच्छब्दयोगो हीयते तस्यासावर्थो योऽर्थो हीयते यदुपजायते तस्यासावर्थोऽर्थ उपजायते योन्वयी तस्यासावर्थो योऽर्थोऽन्वयी। नैवं, यतोऽनन्यथासिद्धाभ्यामेवान्वयव्यतिरेकाभ्यां शब्दार्थयोः सम्यग्भावधारण-मनन्यथासिद्धौ चेमौ। तथाहि। यत्र बृंहितं हीयते हेषितमुपजायते रेणुचक्रमन्वयि तत्र हस्तिनोहीयन्ते पिपीलिकान्वयिन्यो न चैतावता रेणुचक्रस्य पिपीलिकान्वयिन्यो भवन्ति, यत्र वा क्षीरं हीयते दध्युपजायते पात्रमन्वयि तत्र माधुर्यं हीयतेऽम्लतोपजायते तृप्तिरन्वयिनी। न चैतावता—

पात्रस्य तृप्तिः कार्या भवति। अवधृतंहिसामर्थ्यमन्वयव्यतिरेकाभ्यां प्रविभज्यते। यथा लोकेऽवधिः . . . पि चक्षुष्मानालोकयति सत्यपि श्रोत्रे उपहतचक्षुर्नालोकयति रूपमित्यन्वयव्यतिरेकाभ्यां चक्षुःश्रोत्रसन्निधाने रूपालोकनं चक्षुष एव व्यवस्थाप्यते न श्रोत्रस्य। यस्य च केवलस्य योऽर्थोऽवधृतः पदान्तरसन्निधानेपि स एव। नहि रसनमसन्निधौ दर्शनस्य मधुरादिव्यञ्जक दर्शनसन्निधौ नीलादिव्यक्तिसामर्थ्यं प्रतिलभते। प्रथमानुरागशब्दस्य च केवलस्योत्कण्ठादिषु मानशब्दस्येर्ष्यायितादिषु अनन्तरशब्दस्य पुनरवधिमत्स्वेव सामर्थ्यमवधृतं तेषांतावानेवार्थो भवति। यः पुनः पदयोरितरेतरोपश्लेषात् विस्रम्भणादिर्मानशैथिल्यादिर्वाभवधिमद्विशेषोऽभ्यधिकः प्रतीयते, वाक्यार्थः सम्भवतीति।

केपुनर्मानशैथिल्यादयः। मानशैथिल्यं, मानापगमलिङ्गानि, मानापह्नवः, मानापगमः, प्ररोदनं, प्रियाभ्युपपत्तिः, मुखाप्रतिषेधः, परिसान्त्वनानि, चित्रचाटूक्तयः, स्खलितगोपनानि, प्रणिपातः, प्रियोत्थापनानि, अश्रुप्रमार्जनं, मानशेषः, अपराधस्मरणं, प्रेमवैमनस्यं, स्तनोत्कम्पः, निश्वसितानि, स्वेदरोमाञ्चौ, कपोलेषु स्पन्दनानि, मुखप्रसादः, व्याजशपथाः, वक्रवीक्षितानि, उपालम्भाः, प्रत्युत्तराणि, अवज्ञाभङ्गाः, प्रेमाविर्भावः, प्रेमालिङ्गनानि, प्रियोपरोधः, शृङ्गारवृद्धिः, हठकचग्रहः, मसृणाश्लेषः, पाणिताडनं, पादाभिघातं, दयितयातना, प्रत्यनुनयः, प्रेमवैकृतानि, लज्जागमः, मानरामणीयकानि, विस्रम्भसम्भाषा, मानासक्तिः, मानप्रतिपादनं, सखीपरिहासः, मानानुशयः, माननिन्दा, मानानुचिन्तनं, मानध्वंसः, मानपुनर्भाव इति।

तेषु देशकालोत्कण्ठादिभिर्मानापचयो मानशैथिल्यम्, यथा—

दिढमण्णुदूमिआएविगहिओदइअम्मिपेच्छइमाए।
ओसरइवालुआमुट्ठि ओव्वमाणो सुरसुरन्तो॥

दृढमन्युदूनमपिगृहीतोदयितेपश्यतानया। अपसरतिवालुकामुष्टिरिवमानः सुरसुरायमाणः॥

अव्वहलदइअगइआहरोज्ज झिज्जंतरोसपडिराअ।
माणोसरसमइरंचपलिहचसअंमुहं बाला॥

गच्छतो मानस्य चिह्नानि मानापगमनलिङ्गानि, यथा—

णेउरकोडिवळग्गं चिहुरं दइअस्सपाअपडिअस्स।
हिअअंमाणवउत्थं उम्मोअंतिच्चिअकहेहिइ॥

आलोक्यप्रियतमअंशुकेत्रिनीवौ यत्तस्येनमितमुखेन्दुमानवत्या।
तन्नून पदमवलोकयाम्बभूव मानस्यद्रुतमपयानमास्थितस्य॥

मानगोपनं मानापह्नवो यथा—

दत्तावाचः प्रकृतिमधुराः पूर्ववत्प्रीतिरम्या न्यस्ता दृष्टिर्वदनशशिनो
दर्शितश्च प्रसादः। मुग्धे मुग्धस्मितमविकृतं सर्वमेतद्वृथाते
नन्वाख्यानो रहसि विनयेनैव कोपानुबन्धः ॥
भ्रुकुटिरारचिता गतमग्रतो हृतमथाननमुक्तमसाधुना।
इयमतिप्रभुता क्रियते बलादकुपितेऽपि हि यत्कुपिते जनः ॥

मानस्यापसरणं मानापगमः, यथा—

दृष्टे लोचनवन्मना ग्मुकुलितं पार्श्वस्थिते चक्रवन्न्यग्भूतं वहिर्गसितं
पुलकवत्स्पर्शं समातन्वति। नीवीबन्धवदागतं शिथिलतां
सम्भाषमाणेप्रिये मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥
विहायैतन्मानव्यसनमनयोरुच्चकुचयोर्निधेय.प्रेयांस्ते यदि
वयमनुल्लङ्घ्यवचसः। सखीभ्यः स्निग्धाभ्यो गिरमिति
निशम्यैणनयना निवापाम्भो दत्तेनयनसलिलैर्मानसुहृदे ॥

बाष्पमोक्षः प्ररोदनं यथा—

सव्यलीकमवधीरितखिन्नं प्रस्थितं सपदिकोपपदेन।
योषितः सुहृदिव स्म रुणद्धि प्राणनाथमभिवाष्पनिपातः ॥
नस्पृष्टोऽपि त्रिदशसरिता दूरमीर्ष्यानुबन्धां नाप्युत्सृष्टो
भुजगपतिना तर्जनाभिर्जयायाः। मानस्यान्ते नयनसलिलैः
क्षालितः शैलपुत्र्या पत्युर्मौलौ नतिजुषि जयत्यात्मनः पादपांसुः ॥

प्रियेण मानवैमनस्यादिपृच्छा प्रियाभ्युपपत्तिः, यथा—

कीसमलिआवइस्संवअण्णणीसासवअणआहरराअं।
वअणंवहसि किसोअरिकरसंकामिअकओलपत्तालेक्खं ॥
कीसभइमे सुवहुसो विसमप्पंततलिणंजणच्छविकळसा।
दीहावंगेसु तुमं परिगोळंतिणअणे सवाहुप्पीडा ॥

मुधाप्रतिषेधो यथा—

उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।
हुंहुमुञ्च ममेति च मन्दं जल्पितंजयति मानवतीनाम् ॥
रुद्धंबाष्पजलेन लोचनयुगं त्वद्दर्शनानिच्छया गात्रं त्वत्परिरम्भ-
मन्तरयितुं रोमोद्गमेनावृतम् । वक्तुंत्वां परुषा गिरःस्फुरतिमे दन्तच्छदः
किं मुधा मामाश्लिष्यसि निस्त्रपोऽसि शठ हे नैवप्रसन्नास्मिते ॥

सामवादयानि परिसान्त्वनानि, यथा—

आधातुं विनयं निरागसि जने कुप्यन्तुनामेश्वराः तेनस्वाशयशुद्धिरेव
सुकरा प्रायः प्रभूणांपुरः । मिथ्यामानिनि मन्यसे यदि तदा नित्यं
मनोवर्तिनी ध्याता नामरसाक्षि चित्रपटके कावा त्वदन्यामया ॥
अवहारे उणचिरं भणसुत्तुमंचिअअमुक्करोसावि ।
पुढकि चित्तेऊणइमं ओहज्जळमंमिमहपमाअक्खळण ॥

नानाविधवर्णनावाक्यानि चाटूक्तयः, यथा—

कपोले पत्राली करतलनिरोधेन मृदिता निपीतो निश्वासैरयममृत-
हृद्योऽधररसः । मुहुर्लग्नःकण्ठे तरलयति बाष्पः स्तनतटीं प्रियो
मन्युर्जातस्तवनिरनुरोधे न तु वयम् ॥
कृशप्राया रात्रिः कृशतनु शनैर्येन विनमन् प्रदीपोऽयं
निद्रावशमुपगतो घूर्णत इव । प्रणामान्तोमान स्त्यजसिन
तथापि क्रुधमहो कुचप्रत्यासत्त्या हृदयमपि ते चण्डिकठिनम् ॥

विप्रियेषु कारणान्तरोपन्यासः स्खलितगोपनानि, यथा—

जंपि अळिओपआरं वरस्मदक्खिणपाए खेप्पइहिअअं ।
जइसोविसिणेहोच्चिअणणामसंमावकइअवाणविसेसो ॥
अक्खंडिएविअणए अकअंमिविविप्पिए अकज्जेविमहं ।
जाअंचिअणिरअणिज्जं तुहरोसंमिवअणेणिमित्तम्मिपअं ॥

पादपतनं प्रणिपातः, यथा—

तोइअमुरअरुकारणसउइअहिअआएसावसेअअहलहुओ ।
संभाविअच्छिअहिअओ हरिणापाअपडणम्मि तीएअमरिसो ॥
तीएहिअआणुचिंतिअमणोरहब्भहिअंरसंगमसुहाए ।
हरिवहसिरवेतिरकरअइवडिक्कुम्भत्तमउडोगओच्चिअचलणे ॥

प्रियप्रणामविगमनहेतवः प्रियोत्थापनानि, यथा—

तोसेरुभंतच्छिअहिअअयिअंजंतहसिसदेउच्चलिआ ।
पाअपडिआअहरिणोपडिभाअट्ठएवाहसलिलच्छेवा ॥
तीएअणुराअपसरिअसुहपडिवज्झंतपहलपुलडब्भोओ ।
उण्णासिअसहरिसग्गारिसंदूरोणामिअसवच्चिहिआए ॥

बाष्पापनयनमश्रुप्रमार्जनं यथा—

अवसरसरोत्तुचिअणिं मिआइमाफुससुसेहपअच्छीइं ।
दंसणमेत्तुंमइए हंजेहिंसीळत्तुहणणाअं ॥
जहजहसेपरिउव्वइमतुब्भरिआइणी सुवणे दइओ ।
अच्छीइरुवरिरुवरिं तहतहभिण्णालंबगलंति ॥

उद्धृतमानलेशो मानशेषः, यथा—

आननैर्विचकसे हृषिताभिः वल्लभानभितनूभिरभावि ।
आर्द्रतां हृदयमापचरोषो लोलतिस्म वदनेषु वधूनाम् ॥
माने म्लायति रक्ततां विरलयत्यच्छेकपोलस्थले याते बाष्पभरोप-
रोधसुभगे किञ्चिन्मुखे स्मेरताम् । पत्युः पादनतस्य कोमलकरेणा-
कर्षतः सस्पृहं मानिन्या करुणस्पृहेऽप्यनुनये नाकुञ्चितो नार्पितः ॥

व्यलीकानुचिन्तनमपराधस्मरणं, यथा—

तक्खणजणिअपहरिस संभरिअवरोहसंगळत्ताणं सअंतीए ।
गरुअंणिसंमलगओ अत्तंपिअमरिसच्चिअहिअअं ॥

उग्गामिहिअअम्मट्ठं खणसंभरिआवराहळम्भिअळइअं ।
अरसळमहुमअसुहअं अवरिपुढजंपिअंविलासवलणं ॥

मानविमनस्कतामानवैमनस्यानि यथा—

दूसहकआवराहं अवराहेविगरुरवसाइअहिमुहं ।
अप्पच्छंतपअत्तं अंवपेम्मंवहोंतिविजुउत्ति ॥

दूरगअम्मिणिअत्तलदूरणिवुत्तंपुणापअत्तइमं ।
मकहहोइपरिणामोमाणस्सलमोमहंतिविमुहिज्जंति ॥

कुचप्रकम्पनं स्तनाकम्पः, यथा—

कृशासि त्वं कस्मात्प्रकृतिरियमङ्गस्य ननुमे किमङ्गेसून्नत्वं गुरुजनकृतोपावकतया । नमेदोषः कश्चिद्वहिनहि नहीत्येवमुदिता स्तनोत्कम्पं बाला प्रियहृदि निपत्य प्ररुदिता ॥

परावृत्त्या शेने कलयति च कम्पस्स्तनतटी न सन्धत्तेवाचः स्फुरति च वरं वक्तुमधरः । विरुद्धान्यङ्गानि श्लथकरणमास्तेऽथ च वपुः मको ग्स्तन्वङ्ग्या मनसिजविलासो विजयते ॥

मानहानौ निश्वसितानि माननिश्वसितानि, यथा—

तोएविअलंनधीरं अब्भत्ततएखणपहोलिखाहं दूरोसरंतसरणंदूरपरमळग्गवेअणं णीसासिअं । माणं सिणीए अहिणवमइरामो . . पडिवद्धवम्महरसरदइअजणदिण्णणअणं विअळिअधीरळहुअंचिरंणीससिअं ॥

मानापगमादनुरागवृद्धौ सात्त्विकाविर्भावः स्वेदरोमाञ्चौ, यथा—

णवरिअकरावळंबण सुहपडिवज्जंतरसेअपुळउ . .
ताच्चिअअकिउवरिअंपि पिअअमं अच्छीणो ॥

ग्रन्थिमुद्ग्रथयितु हृदयेशे वाससः स्पृशति मानधनायाः ।
भ्रूयुगेन सपदि प्रतिपेदे रोमभिश्च सममेव विभेदः ॥

तद्वदेव कपोलोद्भुस्फुरणानि कपोलोद्भुस्पन्दनानि, यथा—

बाहोहपुरिअंगडाहाराएभणिअंविळक्खहसिरीए ।
अज्जवि किं दूसिज्जइ सवहात्थंगएपेम्मे ॥

बाष्पौघभृतगण्डाधरया भणितेविलक्षहसनशीलया । अद्यापि किलदूष्यतेशपथावस्थांगतंप्रेम ॥

आअंवंतकओलं खळिभक्खरजंपिरिपुरं तोट्ठी ।
माछिवसुत्तिसरोसं समोसरंतीपिआम्हरिओ ॥

माताम्राम्तःकपोलां स्खलिताक्षरजल्पनशीलां स्फुरदोष्ठीं ।
मास्पृशेतिसरोषं समपसरन्तीं प्रियांस्मरामः ॥

मुखस्य मानकालुष्यापगमो मुखप्रसादः, यथा—

आळोइअच्चिअपिए विओतीएमअणेणमोहणसुहओ ।
कुसुमधणुम्मिविवाणोळइअविब्भमगुणम्मिपहरीसो ॥
थोवोसरंतरोसं थोअमुहघोअपरिवड्ढमाणवरिसं ।
ह्रोळअदूसपसाअंतुहपरसाअं विक्खमंतीएमुहं ॥

तत्प्रत्यायनानि व्याजशपथाः, यथा—

सव्याजैर्वचनैः प्रियेणवचसा चित्तानुवृत्त्याधिकं वैलक्ष्येण परेण
पादपतनैर्वाक्यैःसखीनांमुहुः । प्रत्यापत्तिमुपागता मयि तथा
देवीरुदत्या यथा प्रक्षाल्यैव तयैव बाष्पसलिलैः कोपोऽपनीतः स्वयम् ॥
मुहुरविशदाः प्रेमप्रह्वा मुहुःर्मुहुरस्थिरा मुहुरसरला विस्रम्भार्द्रा-
मुहुःस्मृतमन्यवः । वितथशपथोपालम्भाङ्का मुहुःकृतसन्धयः
परिववृधिरे निष्पर्यन्ता मिथो मिथुनोक्तयः ॥

प्रेमार्द्रकोपावष्टालोका वक्रवीक्षितानि यथा—

दूरादुत्सुकमागतेविवलितं सम्भाषिणिस्फारितं संश्लिष्यत्यरुणं
गृहीतवसनेकोपाञ्चितभ्रूलतम् । मानिन्याश्चरणानतिव्यतिकरे
बाष्पाम्बुपूर्णंक्षणाच्चक्षुर्जातमहो प्रपञ्चमधुरं जातागसि प्रेयसि ॥

माने मानमुपेयुषि स्वभवनं द्वारावसक्ताङ्गया किञ्चित्कम्पित-
मन्थरोरुयुगया व्रीडावनम्रभ्रुवा । बाष्पाम्भःकणपूरपूरितदृशा
गच्छत्पुरोरथ्यया मानिन्याकृतविप्रियःप्रियतमस्तिर्यक्छनैरीक्षितः ॥

व्यलीकोद्घट्टनमुपालम्भः, यथा—

साक्कुसुमेहिं गुरु . . महरि . . सुहअदंसणेणरसाओ ।
कहअणहिआअसद्दो लग्गउएआहिआइमिस्सतुहं ॥
सहिअंमाणक्खळणं णाओपडिवक्खविहाअसव्वाणरसो ।
सहिओतुहतुहविभोओमालज्जसुसुहअलज्जिअव्वंमिमए ॥

वचनस्य प्रतिवचनानि प्रत्युत्तराणि, यथा—

कान्ते नाथ विमुञ्चमानिनिरुषं रोषान्मयाकिंकृतं खेदोऽस्मासु नमेऽप-
राध्यतिभवान् सर्वेऽपराधामयि । तत्किंरोदिषिगद्गदेनवचसा
कस्याग्रतोरुद्यते नन्वेतन्मम कातवास्मि दयिता नास्मीत्यतोरुद्यते ॥
किंगौरिमांप्रतिरुषा ननुगौरहंकिं कुप्यामिकांप्रति मयेत्यनुमानतोऽहम् ।
जानाम्यतरत्वमनुमानतएवसत्यमित्थं गिरो गिरिभुवः कुटिलाजयन्ति ॥

मानग्रहमोक्षणमवधार्यः, यथा—

हरिसविअसंतवअणं कवोळअळसंगळंतपुळउब्भेअं ।
अवसाहिअंपि जअं पसाहिअब्भहिअमणहरंतीएमुहम् ॥
णिम्मरिअसंधिअम्मा तावअदूरपडिबद्धवम्महपसरा ।
गरुअंसुरउच्छाअं दाऊणसहिव्वज्जामिणीतीएगआ ॥

. . . तावद्दूरप्रतिबद्धमन्मथप्रसरा । गुरुकंसुरतोत्साहंदत्वासखीयामिनी तस्यागता ॥

गाढानुरागप्रकाशः प्रेमाविर्भावः, यथा—

सोत्कण्ठं सरसागति प्रियतमे पादानतिं वाञ्छति स्मृत्वा मन्युविनिर्ग-
ताश्रुचरणे क्लिष्टे तदभ्युद्गमात् । तंचाधूनति मर्मणा विदधतं दृष्ट्वा
पुनः कान्तया प्रेमच्छेदभिया कृतः प्रणतये पादार्पणानुग्रहः ॥

अपयाति सरोषया निरस्ते कृतकं कामिनि चुक्षुभे मृगाक्ष्या ।
कलयन्नपि सव्यथोऽवतस्थे शकुनेनस्खलितःकिलेतरोऽपि ॥

प्रियानुगमनचिह्नानि प्रेमलिङ्गानि, यथा—

अवलंबिअमाणपरंमुहीएपच्चरसमाणिणीपिअस्स ।
वड्ढिअलउग्गमोए केहलसमुहट्ठिअं हिअअं ॥

विविधविलसद्भावाकूता तनुस्मरघूर्णिता निबिडपुलका गाढाश्लेषं बलादभिवाञ्छति । नयनविषयं याते तस्मिन् विचारविधिक्रियां त्यजति हृदयं कोपस्तस्मिन् जने सखि कीदृशः ॥

प्राणेशश्चरणानतो दयितया नोपेक्षितो नेक्षति . . . . . . .
. . . . . . . . . . . . . . . .

एविअलंतवीरं अब्भुट्ठतीए खणपहोलिरवाह ।
दूरोसरंतसरणंदूरअवलग्गवेअणं णीससिअं ॥

रतेरतिप्रकर्षः शृङ्गारवृत्तिः, यथा—

. . . . चतिअप्पणच्चिअकआवराहाहिंकामिणिहिं ।
पिअअमाकिलअसिक्खावेंतो अवरिज्झइओरिअंरोइमहुमओ ॥

आयातः कृतविप्रियः प्रियसखीदत्तोपजापश्चिरात्कृत्वाचाटुससाध्वसं निपतितः प्राप्तान्तरःपादयोः । नश्लिष्टःसरुषा नचापिविरह-क्लिष्टात्मनाभर्त्सितो मानिन्या नयनाम्भसैव पतता किंनामनोक्तःप्रियः ॥

बलात्केशग्रहणं हठकचग्रहः, यथा—

उग्गाहिअंणमणिअं हिअएच्चिरचिंतिअं राअपरिणामं ।
माणंसिणीएविअअंमुरहसकरग्गाहिअंमिमाणग्गहणे ॥

सकअग्गहवलिउत्ताणिआणणापिवइपिअमुहविइण्णं ।
थोअं थोअं रोसोसहंवमाणं सिणीमइरं ॥

बलादालिङ्गनं प्रसह्याश्लेषः, यथा—

लभपुसिआघराभोरहासलीगणपिइण्णवम्महपसरो ।
होइरमिअव्वजोग्गो दइअवष्णमोद्दिअंवउ जुअइजणो ॥
अग्घइवळंतधीरं दइअहठालिंगआणणअळोउंपरिअं ।
विसमपरिअण्णिअमुहंसमुहवळंतहिअअंविकासवइणं ॥

हस्तेनाभिघातः पाणिताडनम्, यथा—

मुधेनवेविरंगुळिणहमुहविप्पंतसेअसलिलेण ।
हत्यक्ळएणमाणिणिमावहणपिअंतुलिज्जिहिसि ॥
एक्करहरुव्वाअंहत्थं मुहमारुएणवीअतो ।
सोबिअसंतीएमएगहिओपिएणकंठम्मि ॥

चरणाहतिः पादाभिघातः, यथा—

चलणाहअरसपइणो पुळइअमसच्छवंपुळोअंती ।
सुअइसळज्जळवाहच्छलेणमाणंसिणीमाणं ॥
मनसिजसरसीविकासिपद्मः प्रियतममौलिविलोलनैकदक्षः ।
प्रणयजकलहेषु वामपादो जयति रणन्मणिनूपुरः प्रियायाः ॥

प्रियकदर्थनं दयितयातना, यथा—

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलंचवीक्षितम् ।
मेखलाभिरसकृच्चबन्धनं वञ्चयन्प्रणयिनीरवाप सः ॥
कोपात्कोमललोलबाहुलतिकापाशेनबध्वादृढं नीत्वावासनिकेतनं
दयितया सायं सखीनां पुरः । भूयोनैवमिति स्खलत्कलगिरा संसूच्य
दुश्चेष्टितं धन्यो हन्यतएवनिन्हुतिपरः प्रेयान्रुदत्या हसन् ॥

मन्नुनयावधीरितकान्तोपच्छन्दनं प्रसादनम्, यथा—

प्रेयान् सोऽयमपाकृतसशपथ पादानतः कान्तया द्वित्राण्येव पदानि
वासभवनाद्यावन्नयात्युन्मनाः । तावत्पाणिसरोजसम्पुटलसन्नीवी-
निबद्धधृतो धावित्वैवकृतप्रणामकमहो प्रेम्णोविचित्रागतिः ॥

कोपवत्यनुनयानगृहीत्वा प्रागयोमधुमदाहितमोहा ।
कोपितं विरहखेदितचेतो कान्तमेव कलयत्यनुनिन्ये ॥

खेदवामता प्रेमवैकृतानि यथा—

अचखरूसणं खणवसज्जणअलिअवअणणिव्वंघो ।
उम्मच्छअसंताओ पुत्तअपअईसिणेहस्स ॥

माकस्मिकरोषणं क्षणप्रसादन मलीकवचननिर्बन्धः । उन्मत्सरसंतापः पुत्रकपदवीस्नेहस्य ॥

कथमपि सखि क्रीडायोगाद्व्रजेति मयोदितः कठिनहृदयः शय्यां
त्यक्त्वाबलाद्गत एव सः । इति सरभसग्रस्तप्रेम्णि व्यपेतदये
स्पृहां पुनरपि हतव्रीडं चेतः करोति करोमि किम् ॥

मानापगमाद्व्रीडायोगोलज्जापगमः, यथा—

थोआरूढमहुमआ खणपह्लट्टाअराहदिण्णुव्लावा ।
हसिऊणसण्णविज्जइ चिएणसंभरिअलज्जिआकाञ्चिपिआ ॥
करजदशनचिह्नं नैशमङ्गेऽन्यनारीजनितमितिसरोपादीर्ष्ययाशङ्कमानाम् ॥
स्मरसि न खलु दत्तं मत्तयैतत्त्वयैवेत्यनुनयति नवोढां लज्जमानां विलासी ॥

मानवति क्षोभमानरमणीयकानि यथा—

भवतु रुषिकठोरा किन्तु रम्या मृगाक्षी निरुधिमधुराणां
स्वादयोऽमी विकाराः । श्रयति कठिनभागशुक्तिपात्रेष्व
पोयाः कइञ नवबहुमानस्तासु मुक्ताः फलान्ताः ॥
सोद्योगस्य स्खलितवचसो यत्नसंस्तम्भिताश्रोः सावेगस्य श्रमजलभृतो
निर्णिमित्तस्मितस्य । भूयोभूयः कृतकघटितभ्रूलताभङ्गकेतोः
मानस्यास्या रहसि कथितापन्हुतस्यास्ति नार्घः ॥

सखीरहोवृत्तान्तवर्णनं विस्रम्भमाणा, यथा—

सख्यास्तानि वचांसि यानि बहुशोधीतानि युष्मन्मुखाद्रक्ष्येऽहं
बहुशिक्षिता क्षणमिति ध्यात्वास्मि मानंगता । धूर्तेनेत्यथमण्डलीकृतकुचं
गाढं समालिङ्ग्यमां पीतान्यन्यसहाधरेणहसताचक्षुःस्थितान्येवमे ॥

कोपान्निर्वहणात्तथैवशयनेपर्यस्यमौनव्रतैर्नस्थातुं क्षमया
बलाद्विवलनप्रत्युत्सुके चेतसि । मिथ्यामीलितलोचनं सरभस-
व्यावृत्तमुक्ता . . द्रावलयाकिलप्रियतमोरात्रौमयालिङ्गितः ॥

मानधारणसामर्थ्यं मानशक्तिः, यथा—

केळीएविरउसे उण्णतीरएतम्मिचुक्कतिणअम्मि ।
माएजाइअर्वाहं पहिमेहि अवसेहि अंगेहिं ॥
अच्छीइँतायइरसंदोहिविहत्थेहितम्मिदिट्ठम्मि ।
अंगकलंबकुसुमंवपुलइअं कहणुढंक्किस्सं ॥

मानापगमेऽपि मानलिङ्गाविष्करणं मानप्रतिपादनम्, यथा—

स्फुटोवास्यो रोषःस्फुरति परितोषोनयनयो र्विमुग्नेभ्रूलेखे
विकसतिकपोलस्थलमिदम् । मुखंतिर्यक्प्रीतिं गमयति च
रोमाञ्चनिचयः प्रियेदुस्सम्पादा कृतकरु . . . ॥
सा यावन्ति पदान्यलीकपिशुनैरालीजनैः पाठिता तावंत्येव कृतागसो
द्रुततरं संलप्य पत्युःपुरः । प्रारब्धापरितो यथा मनसिजस्येच्छा
तथावर्तितुं प्रेम्णामौग्ध्यविभूषणस्य सहजः कोऽप्येषकान्तःक्रमः ॥

मानहानौ वयस्यानर्मसखीपरिहासो यथा—

. . . चेतसिवर्तते स्तनचक्रम् . . . .
विशालाक्ष . . - ते स्सखिपदाङ्कितम् ॥
इदमम्लानमालायालग्नं स्तनतटे तव । छाद्यतामुत्तरीयेणनवंनखपदंसखी ॥

मानपश्चात्तापोमानानुशयः, यथा—

अगहिअदइआणुणओ पच्छाणुणेइअणुसअवीसंवइओ ।
कइअवणरुवि - - मअणळहुइओ जुअइजणो ॥
पाअपडिओणगणिओ पिअंमणंतोविअप्पिअंमणिओ ।
गच्छंतोणणिरुद्धो भणकस्सक्कएकओमाणो ॥

पादपतितोनगणितः प्रियं भणन्नप्यप्रियं भणितः । गच्छन्नपि नरुद्धो भणकस्यकृते कृतोमानः ॥

मानजुगुप्सा माननिन्दा, यथा—

उत्क्षेपो हृदये स्खलन्ति वचना न्यावेगलोलं मनो गात्रं सीदति
चक्षुरश्रुक - - - ति । यस्यैषा सखि पूर्वरङ्गरचनां मानः स
मुक्तो मया वन्यास्ता अपि योषितः क्षितितले यासामसौ सम्मतः ॥

णइपूरसच्चहे जोव्वणम्मि दिअसेसु णि अइपहिएसु ।
अणिअत्तासु हराईसु पुत्ति किं दड्ढमाणेण ॥

नदीपूरसदृशे यौवने अतिप्रोषितेषु दिवसेषु । अनिवृत्तासु रात्रिषु पुत्रि किं दग्धमानेन ॥

मानस्यानुसरणं मानानुचिन्तनं, यथा—

चळणोवासणिसण्णस्स तस्स म्हरिमो अणालवंतस्स ।
पाअंगुट्ठावेढ्ठिअकेस दिढाअड्ढणसुहेल्लिं ॥

चरणावकाशनिषण्णस्य तस्य स्मरामोऽनालपतः । पादाङ्गुष्ठावेष्टितकेशदृढाकर्षणसुखं ॥

म्हरिमो सेसअणपरम्मुहीए विअळंतमाणपसराए ।
कुलअवसुंगुञ्चत्तंयणहरुप्पेल्लणसुहेल्लिं ॥

मानभङ्गो मानप्रध्वंसः, यथा—

एकस्मिञ्छयने पराङ्मुखतया वीतोत्तरं ताम्यतोरन्योन्यं हृदयेऽपि स-
तेऽप्यनुनये संरक्षतोर्गौरवम् । पश्चादाकुलयोरपाङ्गवलनान्मिश्री-
भवच्चक्षुषोर्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहैः ॥

अण्णोण्णच्छळपेसिअ तुलं - - - प सराइं ।
दोविअणे तहकअभंडणाइस्समअंपहसिआ ॥

अप्रयत्नमानस्य पुनरनुद्गमो मानापुनर्भावः, यथा—

माननिरोधाधार त्वं गच्छ शिवास्ते भवन्तु पन्थानः ।
अमुना बद्धाञ्जलिना हृदयमशेषं निपीतं मे ॥

चूएचडे विणुक्कोळइइं एउंपिउग्गुट्ठ - - -
- - - रतरुणीअणे जंजंमे विपम्मुत्ता ॥

मानानन्तर इत्येष सम्भोगस्य च वर्णितः ।
प्रवासानन्तरस्याथ स्वरूपमुपवर्ण्यते ॥

तत्र रतिप्रकर्षनिमित्ताभिलषणीयालिङ्गनाद्यवासिदेशवः प्रियागमनवार्ताप्रियसखीवादयादयः सम्भोगशब्दवाच्या भवन्ति । कः पुनरत्र समासः, षष्ठीतत्पुरुषश्च । कावृत्तिः, नतावदनुत्सृष्टस्वार्था, तर्हि भवतु युक्तं पुनर्यदुत्सृष्टस्वार्थानामवृत्तिः स्यात् । बाढं युक्तम् । एवंहिदृश्यते लोके पुरुषोऽयं परकर्माणि प्रवर्तमानः स्वकर्मोत्सृजति, तद्यथा—तक्षा राजकर्मणि प्रवर्तमानस्तत्कर्मोत्सृजति ।

नन्वेवं सति राजपुरुषमानयेत्युक्ते पुरुषमात्रस्य आनयनं प्राप्नोति । नैव दोषः । उत्सृजन्नप्यसौ स्वार्थं नात्यन्तायोत्सृजति । यः परार्थविरोधी स्वार्थस्तमेवोत्सृजति । तद्यथा—तक्षा राजकर्मणि प्रवर्तमानस्तक्षकर्मोत्सृजति, नहीङ्गितहसितकण्डूयितानि, न चायमर्थः परमार्थविरोधी विशेषणं नाम तस्मान्नोत्सृजति, अस्तु वा स्वार्थस्यात्यन्तमुत्सर्गः समर्थाधिकारौ वृत्तौ क्रियते तत्र राज इत्युक्ते सर्वस्वंप्रसक्तं पुरुष इत्युक्ते सर्वेषामभिप्रसक्तः । इहेदानीं राजपुरुषमानयेत्युक्ते राजा पुरुषंनिवर्तयत्यन्येभ्यः स्वामिभ्यः पुरुषोऽपिराजानमन्येभ्यःस्वेभ्यः । एवमेतस्मिन्नुभयतो व्यवच्छिन्ने यदिराजार्थोनिवर्तते कामंनिवर्ततां नजातुचित् पुरुषमात्रस्यानयनं भविष्यति, प्राग्वृत्तेरष्टसार्थस्य निवृत्तो वृत्तिरेव न स्यात्, वृत्तिनिमित्ता च निवृत्तिस्तस्मान्नैव दोष इति । किंपुनरिदं सामर्थ्यं नाम । भेदः संसर्ग उभयं वा । तत्र राजः पुरुष इत्यत्र यदा तावदेतदवधूतंपरायत्तवृत्तिरियंपुरुषो नत्वतन्त्रः स्वदास्वामिसंसर्गव्यापगतत्वात् स्वामिविशेषप्रज्ञानायोपादीयमानो राजशब्दः स्वाम्यन्तरेभ्यः पुरुषं व्यावर्तयति, सोऽयं स्वाम्यन्तरव्यवच्छेदो भेद इत्युच्यते । यदा पुनरनवगतपरायत्तभावस्यपुरुषस्य स्वामिसम्बन्धद्योतनाय राजशब्दः प्रयुज्यतेतदा विशेषसंसर्गस्य शब्दोपादानस्यादनवकाशो विशेषान्तर सम्पात इत्यर्थाच्छास्याप्यन्तरनिवृत्तिरर्थाद्वसीयते, यदा–स्वर्थान्तरनिवृत्तिः स्वार्थसंसर्ग चाभिसम्भाव उपसर्जनपदप्रयुक्त . . . शब्दार्थसामर्थ्ययोः प्रतिपत्तिनिबन्धनयोरभेदापेक्षायां भेदसंसर्गसमुदायः सामर्थ्यं भवति । तत्रेह भेद एवसामर्थ्यं यतोऽनन्तर इत्युक्ते अवधृतमिदं कस्याप्यवधेरनन्तरंनस्वतन्त्र इति समन्ततोऽवधिप्रसक्तः प्रवासस्येत्युक्तेऽर्थः सम्बन्धप्रयुक्त इहेदानीं प्रवासानन्तर इत्युक्ते प्रवासोऽनन्तरं निवर्तयत्यन्येभ्योऽप्यवधिभ्यः अनन्तर प्रवासमनिवर्तयत्यन्येभ्यः सम्बन्धिभ्यः, तत्र योऽसौ भेदः तत्सामर्थ्यं तन्निबन्धना च वृत्तिः भेदनिमित्तायांचवृत्तौसत्यां प्रत्यभिमुखस्य भेदमुपजन . . . पसर्जनस्यार्थो निवर्तते, यस्यापि प्रधानस्यान्तरावधिमतो निवर्तते सोऽपि अवधिमवच्छिनत्ति । एवमुभयतोऽप्यवच्छेदेन निर्धातेऽनन्तरविशेषे समुदायार्थे चान्यस्मिन् प्रादुर्भूते यदि प्रवासार्थोनिवर्तते कामं निवर्ततां नजातु . . .

धन्यासस्य सम्भवयो भविष्यति । के पुनः प्रियागमनवार्तादयः । प्रियागमनवार्ता,

प्रियसखीवाक्यानि . . वृत्तयः, प्रीत्यादयः, सम्भ्रमः, अभ्युत्थानं, प्रियाभ्यागमः, सन्दर्शनं, प्रियाभ्युपपत्तिः, परिजनप्रमोदः, मङ्गलसंविधानं, मनःप्रहर्षः, उत्सवः, भवनप्रतिसंस्कारः, काद्यर्थाद्युपलम्भः, प्रहर्षोदयः, प्रेमपुष्टिः, प्रसाधनग्रहणं, वृत्तानुसरणं, अवस्थानिवेदनं, दुःखादिपरिप्रश्नः, देशसम्पदुपवर्णनं, शृङ्गारवृत्तिरिति ।

तेषु प्रियागमोद्घोषणं प्रियागमनवार्ता, यथा—

अहआगओत्तिणवरिअञ्चासण्णोविसच्चभामाएहरी ।
परिअणमुहच्चिअमुओवाहजळंतरिअलोअणाएणइट्ठो ॥
कुडम्मिओहिवासररेहासंगणणमेत्तवावारो ।
त्रिमणमुहीएणिअच्छसुकोअणुवद्धिअरसमुक्खिअई ॥

इष्टवयस्यानां मिथोव्यवहारः प्रियसखीवाक्यानि, यथा—

अच्चासमुद्धोसिअदइआगमणेणवहुउइमीए ।
पहरिसणिरुद्धकंठथणित्थमूढोवटक्कंठो ॥
सहसामासहिप्पत्तपिआगमोतीएविरहकिसिआए ।
अच्चंतपहरिसेणवि जामआसामअच्चेअ ।

प्रियागमपारितोषिकमङ्गलानि दिष्ट्यावृत्तयः, यथा—

घरकज्जेणविजोचळइजत्थधावइतहिंतहिंचेअ ।
वहुआएओहिदिअहेवद्धावअसंकिअेहिअअं ॥
अज्जहठमं सहिदाहिणेअरंपिअअमागमणदूअं ।
अवणिअखेअंतदाविआसिपप्फुदएअच्छी ॥

पूर्णपात्रादिहरणं प्रीत्यादयो यथा—

कइआतम्मिअइतेसहसच्चिअपुळ्ळवक्ळहारिकसं ।
धासअमिळिआओअणहोरणिअह्मकहिंति ॥
कोमं बद्धावेहिइ जस्सतुमं हरिसअसिअकओला ।
तस्स तुमं किंदाहिसिमणिऊणपिएणमवहूढा ॥

सादरातिशय सम्भ्रमो यथा—

आनन्दोद्गमबाष्पपूरपिहितं चक्षुः क्षमं नेक्षितुं बाहूसीदतिकम्पएव
विधुरौ शक्तौ नकण्ठग्रहे। वाणीसाध्वसगद्गदाक्षरपदा संक्षोभलोलं
मनो यत्सत्यं प्रियसङ्गमोऽपि सुचिरादादौ वियोगायते ॥

सहसा पत्तम्मि पिए समुद्धिआणंदवाह पिहिअच्छी।
अज्झासरज्झवहुलावअंपि दाउण्णचोरेइ ॥

प्रत्युद्गमोऽभ्युत्थानम्, यथा—

प्रत्युद्गम्य तनूरुहोद्गतिवशात्स्वेदस्खलच्चेष्टया दत्वा स्वेदलवैः
स्वहस्तपतितैः प्रक्षालन पादयोः। किञ्चित्स्मेरमुखप्रकीर्णदशन-
स्वच्छांशुपुष्पोज्ज्वलै रानन्दाश्रुभिरर्घितोदयितया पान्थश्चिरादागतः ॥

वाहजलोच्छिअलोअणवणउप्पुमिअणविंदहिंअअं।
उक्कंवभरपेक्खविद्दण्णुपहुत्तउलग्गिकंठेपर ॥

कमितुरागमनं प्रियाश्रवणम्, यथा—

उअजावमाकिळम्मइअप्पवक्खअविरहवित्थरंतानुसआ।
तावत्ते जहळच्छातहमिअत्तिअमणोरहोमहुमअणो ॥

नखलुदूरगतोऽप्यतिवर्तते महमसाविति बन्धुतयोदितैः।
प्रणयिनो निशमय्य वधूर्बहिः स्वरमृतैरमृतैरिव निर्ववौ ॥

प्रियावलोकनं सन्दर्शः, यथा—

आणिअसळउब्भेओसअत्तिअणअपडिपूरअंमिविगरुए।
पिअदंसणे पवड्ढइमुंतुद्धाणेविएव्वहरिसो ॥

अरिसअसोहाइसओ सचाअविभोइदेमदंसणदणिओ।
जहहिअअरसपहरिसो तहहरिसविसंढुळाणअच्छीणमुहं ॥

तत्कालचेष्टा प्रियाभ्युपपत्तिः, यथा—

आयाते दयिते मरुस्थलभुवामालोक्य दुर्लङ्घ्यतां गेहिन्या परितोष-
बाष्पतरलामासज्य दृष्टिं मुखे। दत्वा पीलुशमीकरीरशबलां स्वेनाञ्चले-
नादराद्गुन्मृष्टं कलभस्य केसरसटाभाराग्रलग्नं रजः॥

तहसोहइदीआगमपुलउव्वेलिअउसिअवलओ सुमहीअलेदलिअविरह्लिअ-
ओउणमुहंदे दोहहेहएणसमप्पिअउग्घदुजिरहिणिवैरिउकलकलकं विअउ।

सन्ध्यादिसम्पदः परिजनप्रमादः, यथा—

दारद्धविअ . . रमुमतंचिअसंगमकुसुमोपआरसविअं।
अण्णंविसच्चहिज्जइपरिओसपरित्तग्घणंतीएघरं॥
वसट्ठिअम्मिसोहापपरिओसपसाहिआणणाएमणहरा।
अप्पुट्ठसोअविमले सहिसत्यदीएदप्पणम्मिविदिट्ठो॥

दधिदूर्वाङ्कुरादिसंयोजनं मङ्गलमनिधानम्, यथा—

पुलइसिद्धथउहासुग्गमदहिउभूलअदुव्वाकंदलुणआ।
. . सहिउआसेणिसेदिंअरो अणुतक्खणेणलकिउवअणुजिमंगलमाअणपेक्खे-
विएंतुपिह्यउळोणच्छलेणअथादेविग्गलिउरणरणउपुलुजणमिसिणवअंसिहिबा-
हुक्करघणउविरहाणलुणिड्ढायिउअत्तिअणिहीणमुद्दाहेतवुणुपडिअदव्वाग-
मसुहेण।

चित्तसन्तोषो मनःस्पर्शः, यथा—

दूरविअंभिअरसरोकअकज्जणिअंदइअदंसणजणिओ।
हिअएणमाअलच्छिअरेइअसोअविअडेधिसेपरिओसो॥
पणअपरिपूरणेणअविरआसुभपिअधागमेणअगरुओ।
पसरइलद्धद्धामोअण्णुण्णासंतरेहिंतीएपहरिसो॥

सांभ्युदयिकमुत्सवो यथा—

पर्युत्सुकं पुरमिदं सकलं निरीक्ष्य दूरोज्झितध्वजसहस्रहृतार्कतापं।
अन्योत्सवेनमहताकुलितान्तरात्मा रामाभिषेकदिवसस्य पुनःस्मरामि॥

एषप्रासादमालं धवलयति सितैरंशुकैराजलोकः संमर्दं वेत्रहस्तै . . रयतिभरतो लक्ष्मणेनानुयातः। सानन्दा स्नानभूमौ तरलितनयना हर्षबाष्पेणचाम्बा सीतास्नेहावकृष्टालिखतिविकसितंपद्ममातर्पणेन ॥

पुनर्गृहमण्डनं भवनप्रतिसंस्कारः, यथा—

तुहसुंदरिघरकुड्डंदूरोग्गअवाहुउंअंडुमंतीए।
मज्झणिराअवळीयलेइपडवक्खहिअआइं॥
तुहच्छामो अरिदूमिअंदूरच्छिच्चेणहोह हत्थेण।
आळिहिअमुद्धकंकेल्लिपडुलवकुडुमिणं॥

विरहकृतदौर्बल्यादिदर्शनं कार्श्याद्युपलब्धिः, यथा—

वसने परिधूसरे वसाना नियमक्षामतनुः कृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला ममदीर्घां विरहव्यथां बिभर्ति॥

केयूरीकृतकङ्कणावलिरसौ कर्णावतंसीकृतव्यालोलालकपद्धतिः पतिपुरो बद्धाञ्जलिः पृच्छति। यान्नत्किञ्चिदुदन्तमात्मकमितुस्तावत्स एवेत्यथ व्रीडावक्रितकण्ठनालमबला कैःकैर्नभिन्नारसैः॥

आनन्दात्कार्श्यमोक्षः प्रहर्षोपचयः, यथा—

वाअसउड्डावंहंति हएपिअपत्तएसहसत्ति।
अद्धावळआवइअणअद्धापुत्तेडंति . . दूसहसत्ति॥
पहुत्तएविहडिअतहवळअपुळउत्तंभिअणत्तहेसोहहिं।
महिहिगअंतवक्खणमुद्धहोसोअहोंतवंधणकउअ-
णाइपणट्ठहोविरहहोतरलतरंगवअ॥

स्नेहातिरेकः प्रेमपुष्टिः, यथा—

णिम्महिअकुसुमपरिमळहिअहिअआएविमहुअरावलिचडुला।
पडमं पिअम्मिदिट्ठीपच्छातीएविसुपाअवम्मिणिसण्णा॥

तोसेविअम्मिरसिआ तादुमरअणम्मिविअसुउप्पळसुहआ ।
परिओसरसुव्वेळअणुराअंदोळिआणिसम्मइदिट्ठी ॥

भूषणादियोगः प्रसाधनग्रहणम्, यथा—

इतिनिश्चितप्रियतमागतयः सितदीधितावुदितवत्यबलाः ।
प्रतिकर्मकर्तुमुपचक्रमिरे समयेहिसर्वमुपकारिकृतम् ॥
पुळउब्भेउवसाहळदरकुम्माणघणपहरिसवाहुविहूसउणक्कजणणअण ।
अंसुजलुग्गविसोहलवक्खामकवोलसुहेमुद्धहिकालण्णमंडण दइआगमणसुहे ॥

व्यतीतचेष्टानुचिन्तनं वृत्तानुस्मरणं, यथा—

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते यो बद्धबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्म विलग्नमद्य बाष्पं प्रमृज्य विगतानुशयो भवामि ॥
अत्रानुगोदं मृगयानिवृत्त स्तरङ्गवातेनविनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तिम् ॥

स्वाकल्पकादिप्रतिपादनमवस्थानिवेदनम्, यथा—

त्वद्वियोगभवेचण्डि मयातमसिमज्जता ।
दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना ॥
स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्तेशशिनरसमुपगतारोहिणीयोगम् ॥

विरहवेदनादिपर्यनुयोगोदुःखादिपरिप्रश्नः, यथा—

रतिखेदसुप्तमपिमां शयने या मन्यसे प्रवासगतम् ।
सात्वमबले सहेथाः कथं मदीयं विरहयोगम् ॥
चिरविरहिणोरुत्कण्ठार्त्यांश्लथीभवगात्रयो र्नवमिव जगज्जातं
भूयश्चिरादभिनन्दतोः । कथमपि दिने दीर्घे याते निशामधि-
रूढयोः प्रसरति कथा बह्वीयूनोर्यथा नतथा रतिः ॥

गिर्यादिरमणीदारयानं देशसम्पद्वर्णनम् । यथा—

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम् ।
नवंपयोयत्र घनैर्मयाच त्वद्विप्रयोगाश्रुसमंविसृष्टम् ॥
गन्धश्चधाराहतपल्वलानां कदम्बमर्धोद्गतकेसरं च ।
स्निग्धाश्च केकाः शिखिनांबभूवुर्यस्मिन्नसह्यानि विना त्वयामे ॥

स्वोत्कण्ठाद्याविर्निवेदनं स्वदुःखसङ्कीर्तनम्, यथा—

पूर्वानुभूतं स्मरता च यत्र कम्पोत्तरं भीरु तवोपगूढम् ।
गुहातिसारीण्यतिवाहितानि मया कथंचिद्घनगर्जितानि ॥
इमा नवाशोकलतां च तन्वीं स्तनाभिरामस्तबकाभिनम्राम् ।
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा साश्रमहं निरुद्धः ॥

रतिप्रकर्षोदयः शृङ्गारवृद्धिः, यथा—

उअणिअपाअवरअणेइअअणुराअपिसुणपिअम्मि भणंते ।
सविसेसं वड्ढवसराआढत्तोतीरपरिउप्परिओसो ॥
तीए सनिसेमदूमिअसवत्तिहिअआएणिव्वबंतसिणेहं ।
पिअगुरुइआएणिमिअंसोहग्गगुणाणअंगभूमीएवअं ॥
प्रवासानन्तरोऽप्येष सम्भोगः समुदाहृतः ।
करुणानन्तरस्याथ प्रपञ्चः परिकीर्त्यते ॥

तत्र रतिप्रकर्षनिमित्तासिलपणीयालिङ्गनादयस्तिष्ठेसवः, प्रियसन्दर्शनप्रमोदप्रभृत्यादयः सम्भोग शब्दवाच्या भवन्ति । कः पुनरत्र समासः, षष्ठीतत्पुरुष एव । का वृत्तिः, प्रवासानन्तरवदन-स्यन्तमुत्सृष्टस्वार्थैव, विषम उपन्यासः । तत्र हि प्रवासकार्याणि कार्श्यादीन्युत्कण्ठादयोऽव मात्रयानुवर्तन्ते । इह तु सर्वथाकरुणस्य वार्तापि नास्ति । तथा तर्हि मल्लिकापुटश्चम्पकपुट इति निष्कीर्णास्वपि सुमनस्सु मल्लिकादिवासनावशाद्विशेषणं भवति, अयं मल्लिकापुटोऽयंचम्पकपुटइति एवं निवृत्तेऽपि स्वार्थे वासनावशात्करुणोऽनन्तरस्य विशेषणं भविष्यति । यदिवाप्रधानपेक्षिताऽवयवार्था वृक्षमोत्रियवाक्तवोपादयः स्वसामर्थ्यनियतमर्थमाचक्षते, तथा सङ्गात एवैते प्रथमानुरागा-नन्तरादयो राजपुरुषादयश्चानपेक्षितावयवार्था एव यथासामर्थ्यमर्थेषु निविशन्ते । ननुचाव्यप-

द्देश्यपूर्वापरविभागा अभिधार्थाभिधायिनो वृक्षादयः प्रतीयमानभागभेदानुयाताः सम्बन्धिपदार्थोपहितभेदवृत्त्यर्थाभिधायिनः पुनरिमे तत्कथं प्रथमानुरागानन्तरादयो वृक्षादिवद्रूढिशब्दा भवितुमर्हन्ति । तदसत्, रूढिशब्दा यौगिका इति हि विभागो भेददर्शनाभ्यासादभिनिविष्टबुद्धेः प्रतिपादनोपाय एव, अपथाभिनिविष्टो ह्ययं क्रमेण, तस्मादपथाद्व्यावर्तयितव्यः । ततोऽस्याः प्रत्यभिज्ञायमानप्रकृतयः श्रोत्रियक्षत्रियादयोदन्ते, न ह्यत्र प्रकृतिरूपमपह्नीयते, यतः प्रकृत्यर्थोपच्छिन्नः प्रत्ययार्थोऽभिधीयते । ततोऽप्रतीयमानावयवविभागा रूढयः काश्चिदुपन्यस्यन्ते, यत्रात्यन्तमसंभवोऽवयवार्थस्य, यथा शक्रगोपकैलपायिकेति । पुनः कदाचित्सन्निहिता अवयवार्था जातिविशेषाभिधायिनः सप्तपर्णकृतमालादय उदाह्रियन्ते, यतः अपलाशोऽप्यनुज्झितपलाशोऽपि च वनस्पतिः सप्तपर्णोऽप्यसप्तपर्णोऽपि पर्वणीति सप्तपर्ण इत्याख्यायते । तथा निष्कीर्णकुसुमस्तबकालम्बकलिकाजालकोऽपि कृता माला अनेनेति कृतमाल इत्यभिधीयते । अथ पञ्चाङ्गुलमिदमश्वकर्णं इव पर्णमस्येत्युपचरितार्थोऽपि यथा जातिवाचिन एव पञ्चाङ्गुलाश्वकर्णादयो वर्ण्यन्ते, तेषु हि पञ्चाङ्गुलादिव्यपदेशः सोऽज्झितमानप्रवालमपि यावदनुवर्तते । तत्सन्निधानेऽप्य . . म्रियमाणवर्तिपदार्था लोहितशालिगौरसर्षपादयो निगद्यन्ते । अत्र यद्यपि वर्णविशेषः समुदायस्य जातिवचनत्वात्तदर्थान्वयेन नाश्रीयते, तदेवमयं शकलीकृतावर्तिपदार्थाभिनिवेशः प्रथमानुरागानन्तरादिष्विव राजपुरुषादावप्यपार्थाभिनिवेशः शक्यते त्याजयितुमत एव प्रथमानुरागादीनां विप्रलम्भसम्भोगादीनां च पारिभाषिक्योऽपि संज्ञा . . . न्त इति । के पुनः प्रियसन्दर्शनादयः—प्रियसन्दर्शनं, सम्भ्रमाकुलता, प्रमोदवृद्धिः, चित्तविस्मयः, प्रियाभिभाषणं, जीविते‌ऽतिलज्जा, प्रियोपच्छन्दनं, सुहृदपेक्षा, वृत्तान्तकथनं, विस्रम्भोत्पत्तिः, इतिकर्तव्ययोगः, बान्धवागमः, गुरुजनाभ्युपपत्तिः, गुरुजनखेदः, जात्यभिनन्दनं, भाग्यप्रशंसा, नैपथ्यादिग्रहणं, पुरप्रवेशः, नागरिकाक्षोभः, गृहोपगमनं, उत्सवानुभवः, दयितसाहाय्यं, शृङ्गारपुष्टिः, सौख्यपरम्परा, . . . लोकः, प्रियसन्दर्शनम्, यथा—

स दृष्ट्वा तां तदा तन्वीं जगाद नृपनन्दनः ।
मम प्रियेयं सैवेति तत्क्षणं विगतव्यथः ॥
अथ सा पितृनाथसद्मतः प्रतियाता वनमेव कामिनी ।
दयितं शयितं महीतले दधतं प्राणकलामलोकयत् ॥

किमेतदित्याकस्मिकाकूतं सम्भ्रमाकुलता, यथा—

नज्वाला नचदहनो नधूमजालं काकस्मात्सिकतिलवेदिकानिपातः ।
स्वप्नोऽयं किमुत महेन्द्रजाल माहोमाया तत्किमिदमहोमहाविचित्रम् ॥

प्रियातावत्सेयं कथमपि मनोमेरफुटमिदं तदाकारौत्सुक्यादपथनयने नाद्यविपये। प्रकारेणानेन प्रियजनमृषाभ्रान्तमथवा विधिर्मां क्रीडाथान् सुखयति शठो दुःखयति च ॥

हर्षोदयः प्रमोदवृद्धिः, यथा—

चन्द्रापीडं सा च जग्राहकण्ठे कण्ठस्थानं जीवितं च प्रपेदे।
तेनापूर्वां सा समुल्लासलक्ष्मीमिन्दुस्पृष्टा सिन्धुवेलेव भेजे ॥

दिष्ट्या . . श्रुतविप्रलम्भ . . क्रोधदहनोगतो दिष्ट्यानो परुषा रुषार्धकथिते कश्चिन्मया व्याहृतम्। मां प्रत्याययितुं विमूढहृदयं दिष्ट्यागतान्तं रुषा मिथ्यारोपितयानया विरहितं दिष्ट्यानजातं जगत् ॥

मन आश्चर्यं चित्तविल्पवो यथा—

मृतेति प्रेत्य सङ्गन्तुं यथामे मरणं मतम्।
सैषावन्ती मया लब्धा कथमत्रैव जन्मनि ॥
किमिन्द्रजालं किंस्वप्नः किंमाया किंमनोभ्रमः।
यत्पश्यामि विशालाक्षीं साक्षादेतां मदालसाम् ॥

कान्तव्याहारः प्रियाभिभाषणम्, यथा—

शिलाशय्यां त्यक्त्वा तदनु चिरसुप्तोत्थित इव क्षणं स्थित्वा जृम्भालसवदनमुन्मील्यनयने। ततश्चन्द्रापीडः प्रहृतमुरजध्वानपटुना स्वरेण स्वेनैव स्मितमधुरमाह प्रियतमाम् ॥

तदमृतप्रभवेऽप्सरसांकुले सुतनुजन्मसमुत्थितवत्यसि।
यदमुना परिरम्भलवेनते सपदि जीवितमापदयं जनः ॥

वियोपरमे विप्राणाविगमक्रीडाजीविकेति लज्जा यथा—

कामं जीवति मेनाथ इतिसाविजहौ शुचम्।
प्राङ्मत्वा सत्यमस्यान्तं जीवितास्मीतिलज्जिता ॥

दग्धैष दयितेपूर्वं न मृतासीति लज्जया ।
अद्यापि कामिनां चित्ते रतिर्वहति जिह्मताम् ॥

कान्तानुवृत्तिः प्रियोपच्छन्दनं यथा—

किंप्राणानमयातवानुगमनंकर्तुंसमुत्साहिता बद्धाः किंनुजटानवा
प्रतितनुर्भ्रान्तेवने निर्जने । त्वत्सम्प्राप्तिविलोभनेन पुनरप्यूढं न पापेन
किं किंकृत्वाकुपिता यदद्यनवचस्त्वंमेददासिप्रिये ॥
विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः परिजनपथवर्तिन्यत्र
किं सम्भ्रमेण । स्मितमधुरमुदार . . मालपोच्चैः प्रभवति
मम पाण्योरञ्जलिस्त्वंस्पृशास्मान् ॥

मित्रावलोकनादिकं सुहृदपेक्षा, यथा—

सख्याः प्रियं पितृतपोभिरिवाप्तजीवं भूयः कपिञ्जलकरार्पितपाणिपद्मम् ।
मन्मण्डलादवतरन्तमखण्डकान्तिमापाण्डुगण्डमवलोकय पुण्डरीकम् ॥
कौतूहलात्सहमयैवगतेन्दुलोक मालोकयिष्यति कदाचनपत्रलेखाम् ।
काचित्प्रिये सहचरी मम सातिभव्या मातेद्यभूत्तदनवाप्तिकृते विषादः ॥

अनुभूतार्थनिवेदनं वृत्तान्तकथनम्, यथा—

मामन्वब्रीभवदिमां इयतीमवस्थां शापः कलङ्क इव कान्तिहरो द्वितीयः ।
तद्विप्रयोगकृत एव बभूव तापः तन्वङ्गि शूद्रकतनोरपि मृत्यवे मे ॥
संरक्षिता तनुरियं नु तव प्रियेति शापः कृशोदरि विराममवाप पापः ।
अद्यप्रभृत्यखिलमेव हि चन्द्रलोकं शाधि त्वपादकृतमुद्रमसुंचलोकं ॥

विश्वासोपजनो विस्रम्भोत्पत्तिः, यथा—

श्रुत्वेति तस्य गतमुत्सुकतां गतासौ रोमाञ्चकञ्चुकमकृत्रिममुद्वहन्ती ।
कादम्बरीचरणयोर्निपपातपत्यु रानन्दबाष्पकणशीकरितेक्षणश्रीः ॥
पलयणुर पवआणसमरसण्णापडहे जनअतणआ ।
एणोअंति अडाए णाणुरामफणिअरसफळं ॥

यथोचितविधायानुष्ठान मितिकर्तव्ययोगः, यथा—

उत्थागतवन्तिोपसृत्य च महाश्वेतां परिष्वज्य सा प्रत्यक्षीकृतपुण्डरीक-
पदवीं कृत्वाचलब्धोत्सवाम्। दिष्ट्या वर्धयितुं न्ययुङ्क्त रभसेना-
हूय केयूरकं तारापीडतपोवने परिजनं पित्रोर्गृहे चापरम् ॥
मुनिरवभृथावधिः पितुरमुष्य सिद्धेः कृता कृतस्त्वमपि संस्मृतस्व-
तनुरद्यनच्छामनात। तदुज्झितमलीमसेदृशशरीरयोगौ युवां
निजेन वपुषाधुनानुभवतं प्रियासङ्गमम् ॥

स्वजनोपगमो बान्धवागमः, यथा—

तारापीडः परिणतिकृशोऽप्याययौ तत्रतूर्णं सानन्दान्तःपुरपरि-
जनामात्यवर्गानुयातः। अस्मिन्काले सखि सहचरः पुण्डरीको-
पिनाकात् किञ्चिल्लज्जाविनमितमुखो वल्लभाभ्याशमभ्यैत् ॥
आजग्मुस्तत्रवल्गत्तुरगखुरपुटोद्भूतधूलीकडारै श्चूडारत्नप्रतानोज्ज्वल-
रुचिरुनिरैश्शोभमाना शिराभिः। चन्द्रापीडेन्दुसन्दर्शनरभससमुत्फुल्ल-
लोलेक्षणाब्जा निर्व्याजौत्सुक्यसज्जीकृतनिरतिशयोपायनाः पार्थिवेन्द्राः ॥

पूज्यपूजनं गुरुजनाभ्युपपत्तिः, यथा—

चन्द्रापीडःस्वामथजानन्नपिमूर्तिं तारापीडेपुत्रवदेवप्रणनाम।
तद्वत्पूर्वंप्रश्रयशीलःशुकनासं दत्तानन्दोऽवन्दतसर्वाःस्वजनित्रीः ॥
सपुण्डरीको मुनिरप्यपश्यदात्मानमन्तःशुकनासपुत्रम्।
प्रणम्य भूपं पितरं क्रमेण मनोरमाद्या जननीर्ववन्दे ॥

पित्रादिप्रात्सल्यं गुरुजनस्नेहः, यथा—

अथ विलासवती समनोरमा स्रुतपयोधरदुग्धकणावली।
सुतवपुःपरिरंभमहोत्सवं फलितसर्वमनोरथमन्वभूत् ॥
तारापीडोथपादानतमनवरतप्रसृतानन्दबाष्प श्चन्द्रपीडंभुजाभ्यां
कथमपिसहसोत्याप्यकण्ठेगृहीत्वा। शापेनात्रवतीर्णो यदितदपि
भवानुत्तमोलोकपालःप्रख्याप्येतिप्रतीपं प्रणततनुरसावस्यपादौववन्दे ॥

गुर्वादिप्रशंसा शल्यभिनन्दनम्, यथा—

उदात्तवत्से ननुसानुजोसौवृत्तेनभर्त्राशुचिना तवैव ।
कृच्छ्रंमहत्तीर्णइतिप्रियार्हां तामूचतुस्ते प्रियमप्यमिथ्या ॥
शापादसि प्रतिहता स्मृतिलोपरूक्षे भर्तर्यपेततमसि प्रभुता तवैव ।
छायानमूर्च्छतिमलोपहतप्रसादे शुद्धेतुदर्पणतलेसुलभावकाशा ॥

दैवसम्पदुपवर्णनं भाग्यप्रशंसा, यथा—

दग्धैकेनहनूमतामखिययथालङ्कायथाम्भोनिधौ शैलैः सेतुरकारि
भस्मनि हुत नागास्त्रबन्धो यथा । द्वीपादद्य यथान्यतोऽपि निशया नीता
विशल्यौषधिः दिष्ट्या जानकि वर्धसे तवतथाजातोऽनुकूलोविधिः ॥
उदेतिपूर्वंकुसुमंततःफलं घनोदयःप्राक्तदनन्तरंपयः ।
निमित्तनैमित्तिकयोरयं क्रम स्तवप्रसादस्य पुरस्तु सम्पदः ॥

वेषभूषाद्यवाप्तिर्नैपथ्यादिग्रहणम्, यथा—

ताभ्यामेव निरस्य तापसतनुच्छायां दुहित्रोःकृते भास्वत्कौतुकमङ्गलेनच
वधूवेषमनोहारिणि । निर्वृत्तेचममन्त्रहोमसुभगारम्भे विवाहोत्सवे
तत्रान्योन्यसमागमे प्रमुदिताः सर्वेऽपि ते रेमिरे ॥
अग्रेमरीभवति काञ्चनचक्रमेत देषद्विपश्चधवलो दशनैश्चतुर्भिः ।
श्यामोहयो मलयदत्यपिरत्नभाते रत्नान्यमूनि परिभावय चक्रवर्तिन् ॥

स्थानीयासादनं पुरप्रवेशः, यथा—

ततःप्रहृष्टःप्रतिलभ्यकान्तांप्रणम्यनागान्निजमाजगाम ।
सशोभमानःस्वपुरंतमश्वमारुह्यसञ्जि · · तमभ्युपेतम् ॥
समूलरक्षोहरिमिश्रसैन्यस्तूर्यस्वनानन्दितपौरवर्गाम् ।
विवेश सौधोद्गतलाजवर्षामतोरणामन्वयराजधानीम् ॥

पुरस्त्रीसम्भ्रमो नागरिकाक्षोभः, यथा—

संभरिअंपिणगह्लइगहिअंपिणअंठवेइ अंगम्मि ।
ठविअंपिअंप्पुअण्णअ घरेइरहसेण जुअइजणो ॥

सेन्नाणक्कमणसमूससत्तमजाद्धवासमारुहइ ।
कमिवसविहुउंतवलिइअंकामिणीसत्थो ॥

भवनप्रवेशो गृहोपगमनं, यथा—

अथाजगाम सावित्री सत्त्वसम्पत्समन्विता ।
वरेण धर्मराजस्य सहपत्या स्वमन्दिरम् ॥
हेमसिंहासनासीनो मुनिस्त्रीभिःप्रकल्पितम् ।
अन्वतीतां महाभाग्यौ दम्पती तत्रमङ्गलम् ॥

अभ्युदयसेवा उत्सवानुभवः, यथा—

ततोमहोत्सवोजज्ञेराज्ञःसान्तःपुरेपुरे ।
सभाजनागतामात्यपौरलोकसमाकुले ॥
सङ्कल्पाधिकहर्षलाभरभसोजृम्भाविलोलीभवद्गन्धर्वप्रमदाकदम्बक-
कृतक्रीडाशतास्फालनाम् । साकं चित्ररथस्ततो मदिरयाहंसश्च
गौर्यासह द्रष्टुंनृत्तमयीमिव व्यवसितावाजग्मतुर्मेदिनीम् ॥

पत्युरवियोगो दयितसाहचर्यम्, यथा—

ऋतध्वजश्चसुचिरं तयारेमेसुमध्यया ।
नितम्बेषुचशैलानां निम्नगापुलिनेषुच ॥
कामिनीसहचरस्यकामिनस्तस्यवेश्मसुमृदङ्गनादिषु ।
ऋद्धिमन्तमधिकर्द्धिरुत्तमः पूर्वमुत्सवमपोहदुत्सवः ॥

प्रेमाभिमानवृद्धिः शृङ्गारपुष्टिः, यथा—

इतिविततविलासःपुण्डरीकेणसार्धं दिविभुविच
विचित्रोद्यानलीलाविहारः । अभिनवफलसम्पद्वर्धमानाऽभि-
नन्दश्रियमभजतचन्द्रापीडमूर्तिर्मृगाङ्कः ॥

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोः देहत्यागादमरगणना-
लेख्यमासाद्यसद्यः । पूर्वाकाराधिकतररुचा सङ्गतःकान्तयासौ
लीलागारेष्वरमतपुनर्नन्दनाभ्यन्तरेषु ॥

कल्याणाम्बरावतंसा कल्याणसम्पत् कौबयपरंपरा—यथा—

हंसैराहृतहेमपङ्कजरजरसम्पर्कपङ्कोज्झितै रुत्पन्नैर्ममानसादविरतै-
स्तोयैर्महापावनैः । स्वेच्छानिर्मितहेमकुम्भनिहितैरेषाभिषिच्यस्वयं
त्वां विद्याधरचक्रवर्तिनमहं प्रीताकरोमिक्षणात् ॥

निष्क्रान्तश्शङ्खचूडःपतगपतिमुखा द्वैनतेयोविनीतः
तेनप्राग्भक्षितायेविषधरपतयोजीवितास्तेपिसर्वे ।
मत्प्राणाप्यानगुरुभिरसवश्चक्रवर्तित्वमाप्तं
साक्षात्त्वंदेविदृष्टा प्रियमपरमतः किंमयाप्रार्थनीयम् ॥

करुणानन्तरस्येयमुदाहरणपद्धतिः ।
प्रदर्शितानयैवासां समानन्यायमूह्यता ॥
अनन्तराणांसर्वेषामयमेकः प्रकृष्यते ।
रतिर्विस्रम्भजास्मिन् हि निष्कम्पत्वं प्रपद्यते ॥

इतिगदितमशेष विप्रलम्भस्वरूपोपहितनिजसमुत्थे श्लाघ्यशृङ्गारनाम्नः ।
रतिसमुदयरूपं जीवितं पुष्पकेतो र्निवसतुसुकवीनांसर्वदामानसेषु ॥

इति श्रीमहाराजाधिराज श्रीभोजदेव विरचिते
शृङ्गारप्रकाशे मानानन्तरादि प्रकाशोनाम
पञ्चत्रिंशः प्रकाशः समाप्तः ॥



॥ श्रीः ॥

# महाराजाधिराज श्रीभोजदेवविरचिते

# शृङ्गारप्रकाशे

## ॥ षट्त्रिंशः प्रकाशः ॥

अथातस्तयोरर्थतद्विशब्दविषयभूताया क्रियाकालरूपविशेषान्तःपातिन्यः सत्ताभिव्यक्त्यनुबन्धप्रकर्षसंज्ञिकाः चतुर्णामपि सम्भोगानाम् अवस्थाः चतस्र उपवर्ण्यन्ते । तत्र नायकयोः प्रागसक्तयोः सक्तविमुक्तयोर्वा चिरसमागमे प्रत्युत्पन्न तदानीं रत्न रत्याख्यः स्थायीभाव इति रत सत्तासंज्ञा प्रथमावस्थाभिरुपणीयादिनार्द्रनामयासौ तत्र समुपजायमानैः हर्षधृतिस्मृतिसिर्ध्यभिचारिभावैः सम्युज्यमानः ऋतूद्यानोपगमनजलक्रीडाप्रदोषप्रसाधनग्रहणमधुपानेन्दूदयादिभिरुद्दीपनविभावैरुद्दीप्यमानः नयनभ्रूक्षेपकटाक्षविक्षेपालापसम्भ्रमस्मितादिभिरनुभावैरभिव्यज्यमान इत्यभिव्यक्तिनाम द्वितीयावस्था । उच्छ्वसितमासादयन् जिहासितजिहासान इत्यनुबन्धसंज्ञा तृतीयावस्था । प्रागवाप्यप्रकर्षावस्य सम्भोगशृङ्गारतां लभत इति प्रकर्षसंज्ञा रतस्तुरीयावस्था । तासु च यथाक्रमं संक्षिप्तादयः सम्भोगपर्यायाः भोगशब्दार्थेन सम्बध्यन्ते । संक्षिप्तोभोगः सत्तावस्थायां सङ्कीर्णोभोगः अभिव्यक्तावस्थायां सम्पूर्णोभोगः अनुबन्धावस्थायां समृद्धभोगः प्रकर्षावस्थायामिति । स सर्वोऽपि द्विधा—सामान्यरूपो विशेषरूपश्च । सामान्यरूपः पशुमृगादीनाम् । विशेषरूपो नागरनायकादीनाम् । तयोराद्यो यथा—

मधुद्विरेफः कुसुमैकपात्रे पपौ प्रियास्वामनुवर्तमानः ।
शृङ्गेण सस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥
ददौ सरःपङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ॥
अर्धोपभुक्तेन बिसेन जाया सम्भावयामास रथाङ्गनामा ॥
गीतान्तरेषु श्रमवारिलेशैः ईषत्समुच्छ्वासितपत्रशोभम् ।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किम्पुरुषश्चुचुम्ब ॥

सम्प्राप्तपुष्पस्तवकस्तनीभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुः विनम्रशाखाभुजबन्धनानि ॥

अत्र च सरीसृपमृगपशुपक्षिपुरुषामासतस्थिवद्विशेषाणां निसर्गसिद्धैव रतोत्सवो दीयते, यथोच्यते ।

वृथोपदेशस्सिद्धोहिकामोऽनाख्यातशिक्षितः ।
स्वकान्तारमणोपाये कोगुरुर्मृगपक्षिणाम् ॥

कमलिनीनलिनीदयितंविना नसहते सहनेननिषेविताम् ।
तमधुनामधुनानिहितंहृदि स्मरति सा रतिसारमहर्निशम् ॥

दन्तच्छदा . . मास्त्रितकान्तदन्तमुद्गम्य चुम्बति . . नः प्रियायाः ।
काम्पिल्यकप्रसवपाटलगण्डपालीपाकारुणस्फुरितदाडिमकान्ति वक्त्रम् ॥

पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखशीधुसिक्तः ।
गर्वायतेकुरबकोऽभिहतःकचाभ्यां आलोकितस्तिलकमुत्कलितो विभाति ॥

साच रतेः सत्ताभिलषणीया लिङ्गनादिसत्तां समुपजायमानैर्हर्षधृतिस्मृतिव्यभिचारिभावैः संसृज्यते । तदिह सम्प्राप्तपुष्पस्तवकस्तनीभ्य इत्यादिना प्रतिपादयन्ति, तत्रहि वयस्सन्धौ हर्षोदयो जायन्ते । यदाह—

तदा किञ्चित्किञ्चित्कृतपदमहोभिःकतिपयैरथाग्रेविस्तारिस्तन
मुकुलमासीन्मृगदृशः । वयस्स्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारस्खलतिहृदिमुग्धश्चवपुषि ॥

जाताश्चैतेऽधरस्फुरणादिभिर्ज्ञायन्ते, तथाहि—

नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्विषादः स्वेदश्चक्षुर्मसृणमधुरा-
केकरास्निग्धमुग्धम् । गात्रस्तम्भःस्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो
गण्डाभोगे पुलकपटलं मूर्च्छना चेतनाच ॥

रतिप्रकर्षादीन्यालिङ्गनानि तदिह स्फुरत्प्रवालोष्ठमनोहराभ्य इत्यनेन दर्शयति । अभिज्ञाता ऋतुयानोपगमनजलक्रीडाक्रीडापर्वतप्रवेशमधुपानेन्दूदयादिभिरुद्दीप्यते । तत्रेहर्तुः प्रकरणाद्गम्यते,

तद्यथा—

तस्मिन्वने संयमिनां मुनीनां तपस्समाधिप्रतिकूलवर्ती ।
सङ्कल्पयोनेरभिमानभूतमात्मानमाधाय मधुर्जजृंभे ।
असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां संपर्कमाशिञ्जितनूपुरेण ॥
बालेन्दुवक्राण्यविकासभावा द्बभुः पलाशान्यतिलोहितानि ।
सद्योवसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥
चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलोऽयं मधुरं चुकूज ।
मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥
हिमव्यपायाद्विशदाधराणामापाण्डरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किम्पुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥

उद्यानोपगमनमधुपानादयः प्रतिपादयन्ति, जलक्रीडां करि . . . चक्रवाकमिथुनं चाभिधत्ते क्रीडापर्वतप्रवेशं प्रसाधनग्रहणं मधुपानं किमरविन्दरेफवृत्तान्तः सूचयति, इन्दूदयो दिवासम्भोगे न विद्यते, आदिग्रहणात्तु—

कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतिः क्षीरतया प्रभूतः सानूनि गन्धः सुरभीकरोति ॥
भागीरथीनिर्झरशीकराणां वोढा मुहुः कम्पित . . .
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥
वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराःसुरतप्रदीपाः ॥
यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किम्पुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥
तस्मिन् समारोपितपुष्पचापे रतिद्वितीये मदने प्रविष्टे ।
काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥ इति ॥

देशविशेषस्योद्दीपनविभावत्वं प्रतिपादयति, उद्दीपिताश्चते सविभ्रमभ्रूकटाक्षविक्षेपालापसम्भृतस्मितानि विभावानुभावैरभिव्यज्यन्ते। तेऽपि किन्नरीमुखे यथोक्तगुणयुक्ते युक्तितो भवन्त्येवेति, इत्युपचारश्चेहसर्वोऽपि सर्वोपकरणप्रगुणयैव विशिष्टदेशकालोपकल्पितः प्रतीयते। तथा हि—

रम्भा नवद्युतिरपैति न शाद्वलेभ्यः श्यामीभवन्त्यनुदिनं नलिनीवनानि।
अस्मिन्विचित्रकुसुमस्तबकाचितानां शाखाभृतां परिणमन्ति न पल्लवानि॥

त्वक्सारन्ध्रपरिपूरणरक्तगीतिरस्मिन्मुहुर्मृदितपक्ष्मलरल्लकाङ्कः।
कस्तूरिकामृगविमर्दसुगन्धि . . . रागीव सक्तिमधिकं विषयेषु वायुः॥

सम्मूर्च्छतां रजतभित्तिमयूखजालैरालोलपादपलतान्तरनिर्गतानाम्।
. . . मुहुः पटलानि धाम्नामादर्शमण्डलनिभानि समुल्लसन्ति॥

श्रीमल्लताभवनमोषधयःप्रदीपाः शय्यानवानिहरिचन्दनपल्लवानि।
अस्मिन्रतिश्रमजितश्च सरोजवाताः स्मर्तुं दिशन्ति नदिवः सुरसुन्दरीभ्यः॥

सेयं रतेरभिव्यक्त्यवस्था। अत उत्तरं प्रियाचरणविप्रियाकरणाभ्यां प्रवर्धमाना रतिः भावुकैरेव विभावानुभावव्यभिचारिभिरनुबध्यते, तच्च तदोपपद्यते यदेप्सितमासाद्यते मनीप्सितं च नस्य . . . पराधीनवृत्तीनां मुनिवननिर्मांसनिर्भयानां भयाहारमैथुनमात्रवेदिनामुपनतमनोऽभिलषितांपुष्पघ्राणतल्लकीमृणालतरुगोपवर्णनिर्वृतानामलिमृगमातङ्गरथाङ्गकिन्नरोर्वीरुहमिथुनानामभिव्यैव भवन्ति, सैषा रतेरनुबन्धसंज्ञकातृतीयावस्था। चतुर्थ्यपि प्रकर्षसंज्ञिका विद्यते . . यद्यपि मु , . इत्येतेनोपदिष्टा, तथापिचात्रविशेषोपदर्शनैरुपादेयैवभवति, तद्यथा—मधुद्विरेफ इत्यादि। तत्र विदग्धकामिनामन्योक्तिषु भ्रमर एव प्रकल्प्यते, तत्र शठधृष्टदक्षिणानुकूलनायकधर्माः कविभिरारोप्यमाणा उपलभ्यन्ते, तेषु शठधर्मो यथा—

पिबन्मधुयथाकामंभ्रमर.फुल्लपङ्कजे।
अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुट्मलम्॥

धृष्टधर्मो यथा—

श्वसनचलितपल्लवाधरोष्ठी नवनिहितेर्ष्यमिवावधूनयन्ती।
मधुसुरभिणि षट्पदेन पुष्पे मुख इव साललतावधूश्चुम्बे॥

दक्षिणधर्मो यथा—

भ्रमराः कुन्दलतायां चिररूढप्रणयभङ्गभीरुतया।
दयिततमामपि विपिने चूतलतां निभृतमभिलषंति ॥

अनुकूलधर्मो यथा—

अन्यासुतावदुपमर्दसहासुभृङ्ग लोलं विनोदय मनः सुमनोलतासु ॥
बालामजातरजसं कलिकामकाले व्यर्थंकदर्थयसि किं नवमल्लिकायाः।

तत्पत्र परयति तासक्षमसुमगमानिनः स्वयोपितिरतिस्तयानस्वदते यथामिथोवियुक्त मृगयूनोरिति तदुत्तरार्धेन प्रतिपादयति, प्रकृष्टश्च मृगस्नेह इति सार्धलौकिकी गाथा—

रण्णम्मितणं रण्णम्मिपाणिअंसव्वओसअंगाहं।
तहवि मिआणमईणअआमणंताइपेम्माइ ॥

मृगस्नेहाद्गजस्नेह इति प्रकृष्टमन्यदपि विलोकितम्। यथोच्यते—

रेवापयः किसलयानिचसल्लकीनां विन्ध्योपकण्ठविपिनं विपुलं विहाय।
किं शोचसे गज गतोऽसि वशं करिण्याः स्नेहोहि कारणमनर्थपरम्परायाः ॥

गजस्नेहाच्चक्रवाकस्नेहो विशिष्यत इत्यपि विलोकितं। सहि प्रियतमया वियुज्यमानः किलैवमाह, यथा—

. . . व्यथतिमनोदुर्बलावासरश्री रेवालिङ्ग क्षपय
रजनीमेकिका चक्रवाकी। नान्यासक्तो न खलुकुपितो
नानुरागच्युतोवा दैवाधीनस्तदिह भवतीमस्वतन्त्रस्त्यजामि ॥

तदुभयमपि द्वितीयश्लोकेनाचष्टे, चक्रवाकस्नेहादपि किन्नरमिथुनस्नेहः प्रकृष्यते, तद्धि मिथोवियुक्तं क्षणमपि नजीवति, तत्तृतीयश्लोकेनाभिधत्ते। ततोऽपि वृक्षवल्लीप्रेमप्रकृष्टम्, ते इतरथा मिथो व्यतिषज्येते यथा यावज्जीवं तथैवार्धनारीश्वरवदवतिष्ठेते, तच्चतुर्थश्लोकेनाह। सोऽयं चतुरवस्थोऽपि सम्भोगशृङ्गारः सामान्यरूपस्तस्य। अथैष विशिष्टनायकविषयो विशेषरूप उच्यते, स च सात्त्विकादिनायकभेदात् स्थिरास्थिरत्वादितारतम्यात् प्रबन्धेनोपपद्यमानो द्वादशप्रकार उपपद्यते। प्रथमसन्दर्शनक्षण एव संक्षेपेणोत्पन्नः संक्षिप्त इत्युच्यते। अथैवं द्वितीयावस्थायां विभावानुभावव्यभिचारिसंयोगैरभिव्यज्यमानः स्वभावकुटिलत्वाद्व्यञ्जनसम्बन्ध . . . रसोऽपि द्वादशप्रकार एव विभज्यते। सङ्कीर्यमाणत्वाच्च सङ्कीर्ण इत्युच्यते, अथायमेव ईप्सितमासादयन्

जिहासितंजिहानः परप्रकर्षोन्मुखस्तृतीयावस्थाया धर्मार्थकामाननुबध्नाति, तदप्राप्यद्वादशप्रकारो जायते। सम्पूर्णरूपत्वात्सम्पूर्ण इत्युच्यते। अथ चतुर्थावस्थायामयमेव प्राप्तप्राप्यप्रकर्षितभूतकरण-सामग्र्यतो द्वादशप्रकारः। यथापाकाच्च सम्यगास्वाद्यत्वमुपगतः सम्पन्नमित्युच्यते। तत्र संक्षेपपक्षे-रागोपाधिः प्रेमापि द्वादशप्रकारं भवति। तत्र हरिद्रारागं रोचनारागं काम्पिल्यरागं रीतिरागमिति सात्त्विकस्य, कुसुम्भरागं स्वरा . . . अक्षीबरागं मञ्जिष्ठारागमिति राजसस्य, कर्दमरागं, कषायरागं, सकलरागं, नीलीरागमिति तामसस्य। तेनायेन पुरुषाणां विशेषत उपजायन्ते। तत्राल्पकारणापनेयः हरिद्रारागः, तदतिस . . . रस्य सहितया न कामेन बाध्यते। यथा सत्त्वोद्रेकात्करुणादिभिस्तेनासौ नातितरामतिचिरधा रज्यते। अतो हरिद्रारागः इति, नागानन्दे . . . जीमूतवाहनः—

नतथा सुखयति मन्ये मलयवती मलयचन्दनरसार्द्रा।
अभिवाञ्छितार्थसिध्यै वध्यशिलेयं यथाश्लिष्टा॥

मनल्पकारणापनेयो रोचनारागः, तन्महासत्त्वस्य, सहि कामेनाबाध्यमान धर्मादिप्रवृत्तिरेव-स्वकारणसामग्र्यतो जायते, तेनास्य नातिदुरपनेया नातिरक्ताधा रोचनाया इव रागलेखा भवति। यथा शाकुन्तले दुर्वाससः शापेनापनीतस्मृतेर्दुष्यन्तस्य—

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते किमपिमनसः सम्मोहोमे
तदा बलवानभूत्। प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया॥

मनल्पकारणोपनिपातेऽपि प्रयत्नापनेयं काम्पिल्यरागं तदतिसात्त्विकस्य, यथा हरिश्चन्द्रचरिते विश्वामित्रमोचनाय दासविक्रयिणो हरिश्चन्द्रस्य—

हेधन्याः श्रृणुतावधत्त धनिनः सेयं मया प्रेयसी मत्पाणिग्रहदूषणादिति
दशां याता जगत्पावनी। दुर्वृत्तेन दुरन्तपातकशतध्वस्तेहितः पौरुषे
स्वामित्वैकसहा . सुदती विक्रीयते क्रीयताम्॥

कारणोपनिपाते महत्यास्वप्रयत्नेनापनेतुं शक्यते। तद्रीतिरागं, तदतिमहासत्त्वस्य, यथा जनापवादभीततया निर्वासितायामपि सीतायां रामायणे रामस्य—

ततः कैरप्युक्ते परिणयत्रिधौकाग्रमुनिभिः पुराणै रातंकल्पित-
हृदयेन क्षितिभृता। विनावाचं नैतत्क्षममिति निधायाननमधः
पतद्बाष्पाम्भोभिर्लिखितमिव दत्तं प्रतिवचः॥

एतेषु च सत्त्वच्छायाधिक्या सतथाविधा रागच्छायानुवृत्तिरित्यापीतपद्मरागवर्णो भवति। सहि न तथा धर्मार्थयोरनुषज्यते, तथाकामं तेनातितरां रज्यते, गुणेषु च यथोत्तरेच्छत्वारकामिनामनुरागेऽपि शीघ्रमेव विरज्यते। यथा हरिवंशे, वासुदेवः—

पान्थ द्वारवतीं प्रयासि यदि हे तद्देवकीनन्दनो वक्तव्यः स्मरमन्त्र-
मोहविवशाः गोप्योनकामोज्झिताः। एताः केतकपुष्पधूलिपटलैरा-
लोक्य रम्यादिशः कालिन्दीतटभूमयोऽपि तवहे नायान्ति चिन्तास्पदम् ॥

अनल्पकारणेनापनेयं लाक्षारागम्, तदपि रजोबहुलत्वैव जायते, यथा विक्रमोर्वश्यां ऊर्वशीविलोकनापहृतमहादेवीप्रेमसम्पदः पुरूरवसः—

देव्या दत्त इति यदि व्यापारं व्रजसि मेशरीरेऽस्मिन्।
प्रथमं कस्यानुमते चोरि हृतंमेत्वया हृदयम् ॥

कारणोपनिपाते महाप्रयत्नापनेयमक्षीमरागं यथा यौगन्धरायणादिप्रयत्नतो राज्यलाभाय तापसवत्सराजे वासवदत्तायां वत्सराजस्य—

चक्षुर्यस्य तवाननादुपगतं नाभूत्क्वचिन्निर्वृतं येनैषा सततं
त्वदेकशयनंवक्षस्थली कल्पिता। येनोक्तासि विना त्वया मम
जगच्छून्यं क्षणाज्जायते सोऽयं दम्भधृतव्रतः प्रियतमे कर्तुं किमप्युद्यतः ॥

महाप्रयत्नेनापनेतुमशक्यं मञ्जिष्ठारागम्, यथा मदालसोपाख्याने मदालसायामेव कुवलयाश्वस्य—

श्रेणीभूतामिवाशासु निखातामिवचेतसि।
प्रोतामिव विकल्पेषु राजसूनुरमंस्तताम् ॥

इदं चाह—

यदि सा मम तन्वङ्गी न स्याद्भार्या मदालसा।
अस्मिञ्जन्मनि . . . सावित्रीसहचारिणी ॥

एतेषु च रजोभूयिष्ठत्वाद्रागभूयिष्ठेषु रागान्तरोपनिपातात् रक्ततायामेव वर्णोत्कर्षो भवति। अपायप्रकारणापनेयमेव ताम्रवत्त्व कर्दमरागं यथामालविकाग्निमित्रे . . . व मालविकाविलोकनापहृतचेतसो महादेव्यांधारिण्यामिरावत्यांच प्रणयवत्यामग्निमित्रस्य—

मन्ये प्रियाहितमनास्तस्याः प्रणिपातलङ्घनं सेवा।
एवं हि प्रणयवती सा शक्य . . . . ता ॥

कारणापनेयं तामसस्यैव कषायरागं यथा विक्रान्तशूद्रके शिवगणस्य—

सा वक्षःपरिवर्तनैकललिता विश्वासभूमिः प्रिया बालानिष्करुणेन
मुग्धतपसा दग्धा वराकी मया । भर्तुर्भक्तिरपेक्षितानन्तु पुनः स्त्रीदाहदोषो
महान् जातं सच्चरितैषिणो ममपुनः म्लेन्छस्य यत्नोचितम् ॥

कारणोपनिपाते महाप्रयत्नतोऽपि सर्वथा दुरपनेयं सकलरागम्, तदपि तामसस्यैव यथा इन्दुमत्याः प्रमादतायामपि षर्वकतिपयजीविनो जनस्य ।

तेनाष्टौ परिगमिताः समाः कथंचिद्बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥

सर्वथैवापनेतुमशक्यं नीलीरागम्, तदतितामसस्य, यथा कादम्बरीकथायां महाश्वेताविषये वैशम्पायनस्य—

दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वयानीतः ॥

एषां च तामसानां तमोऽतिरेकाद्रागयोस्स्वै . . णतिरस्कारे वर्णान्तरमुत्पद्यते । सोऽयमुपस . . . . र्थः मप सङ्करार्थपक्षे . . . . प्रेम द्वादशप्रकारं भवति । आवृत्तव्याजं, अनुवृत्तव्याजं, परिणतव्याजं, अभ्याहृतव्याजं, बहुव्याजं, निर्व्याजमिति । सर्वव्याजमि . . . णस्त्रीणां विशेषत इव . . यते, तत्रावृत्तव्याजं यथा—

चतुरचटुभिर्गाढाश्लेषैर्हठात्परिचुम्बनैः अल . . . . वारं
गतोऽप्यतिमन्दताम् । . . .
. . नवतां गतः ॥

अनुवृत्तव्याजं यथा—

योषिदुद्धतमनोभवभावा मानवत्यपि ययौ दयिताङ्कम् ।
कारयत्यनिभृता गुणदोषं वारुणी खलु रहस्य . . ॥

परिणतव्याजं यथा—

अव्वो अणुणअसुहर्कि खिरीएअकअंकअंकुणंतीए ।
सरळसहावेवि पिओ अविणअमग्गंबळाणीओ ॥

अभ्याहृतव्याजं यथा—

अण्णदइआपसंगं देदेन्तकुणेसुमञ्झदइअस्स ।
पुरिसा एक्कं तरसाणहदोसगुणे विआणंति ॥

यथा—

मानयोग्यां करोमीति प्रियस्थाने स्थितां सखीम् ।
बालाभ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥

अपेक्षितव्याजं यथा—

भङ्गस्फुरितोष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृताः स्त्रीणामप्रसादार्थिनः प्रियाः ॥

अन्तव्याजं यथा—

अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयावि - - - - - तिमनसोममहेतुः ॥

बहिर्व्याजं यथा—

आननैर्विचकसे हृषिताभिः वल्लभानभितनूभिरभावि ।
आर्द्रतां हृदयमाप च रोपो लोलितः स्म वचनेषुवधूनाम् ॥

एकव्याजं यथा—

शङ्कयान्ययुवतौ वनिताभिः प्रत्यभेदि दयितः स्फुटमेव ।
नक्षमं भवति तत्त्वविचारे मत्सरेण हतसंवृति चेतः ॥

बहुव्याजं यथा—

कथमपि कृतप्रत्यापत्तौ प्रियेस्खलितोत्तरे विरहकृशया कृत्वाव्याजं
प्रकल्पितमश्रुतम् । असहनसखीश्रोत्रप्राप्तिप्रमादससम्भ्रमं
विवलितदृशा शून्येगेहे समुच्छ्वसितं पुरः ।

अर्थव्याजं यथा—

मागमन्मदविमूढधियोनः - - रन्तुमिति शङ्कितनाथाः ।
योषितो न मदिरां भृशमीषुः प्रेमपश्यति भयान्यपदेऽपि ॥

निर्व्याजं यथा—

द्वारिचक्षु रधिपाणिकपोलं जीवितं त्वयि कुतः कलहोऽस्याः ।
योपितामिति वचः - - - - - - ये नवनवत्वमियाय ॥

सोऽयमुपर . . . . र्थं, अथ सम्पूर्णतापक्षे अनुबन्धोपाये प्रेमप्रादशप्रकारं भवति धर्मानुबन्धमर्थानुबन्धं धर्मार्थानुबन्धमधर्मार्थानुबन्धं इत्यादि ।

—॥ ग्रन्थपातः ॥—

. . . अरसपत . . . सं . . . रसो होइ ।
आद - - - - - - - - - - - ॥
. . . . . . . . . . . . . .
- - - - - - - प्रोक्तावद्वच्छद्मना ।
तत्सर्वं प्रणतस्य मेऽद्यदयिते दाक्षायणि क्षम्यता
मित्युक्त्वा - - - - - - - - ॥
शापादसिप्रतिहता स्मृतिरोधरूक्षे भर्तर्यपेततमसिप्रसुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा ॥

माद्यन्तयोरस्वादुपिचुमन्दपाकं यथा—

जइदेवतुं पसण्णो माकारिहिमञ्झमाणुसंजह्म ।
*जइजम्मं अहपेम्मं माजणेदुल्हे ॥*

मनवरतपाकं कपित्थपाकं, यथा—

सोतुं सुहंणलंभइअ अंबोपेम्मरसवक्कविसमरसवो ।
दुग्घडिअमंचअस्सव खणेखणेपाअपडणेण ॥

यथोत्तरस्वादु क्रमुकपाकं, यथा—

- - - सर्वास्ववस्थासु य - - द्विस्रम्भो हृदयस्य
यत्नरजसा यस्मिन्नहार्यो रसः । कालेनावरणात्ययात्परिणते
यत्स्नेहसारोत्थितं भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥

तदेतत्कामसर्वस्वं तदेतत्काव्यजीवितम् ।
य एष द्विप्रकारोऽपि रसः शृङ्गारसंज्ञकः ॥

तारका सविदग्धा यथा—

गोष्ठीनि - - - - - - - । यथांशुम - पीतांशु र्यथानर्चिर्हुताशनः ॥
यथाऽप्रतापीनृपति रशृङ्गारस्तथा पुमान् । यथेन्दुना निशा भाति निशाभिश्च - ॥
. . . . शृङ्गारेण तयाङ्गना । यथा तटिदनम्भोदा पयोदस्त . . . ॥
. . शृङ्गाराः शृङ्गाराच्चानहङ्कृतिः । रसः शृङ्गार एवैको भाया रत्यादयो मताः॥
प्रकर्षगामिनोऽपीह प्रेमग्लानिश्रमादिवत् ॥

इति निगदितभङ्ग्यानङ्गसर्वस्वमेतद्द्विविधमपिमनोभिर्भावयंतोऽस्य भेदम् ।
तदनुभवसमुत्थानन्दसंमीलिताक्षाः परिषदि परितोषं हन्त सन्तः प्रयान्तु ॥

यावन्मूर्ध्निहिमांशुकन्दलवतीस्वर्वाहिनीधूर्जटे र्यावद्वक्षसि
कौस्तुभस्तबकिने पद्मा मुरद्वेषिणः । यावच्चित्तभुवस्त्रिलोकविजय-
प्रोच्चं धनुः कौसुमं भूयात्तावदियंकृतिःकृतधियांकर्णावतंसोत्पलम् ॥

इति श्रीमहाराजाधिराज श्रीभोजदेव विरचिते शृङ्गारप्रकाशे संभोगावस्थाप्रकाशोनाम षट्त्रिंशः प्रकाशः ॥

॥ ग्रन्थश्च परिसमाप्तः ॥

॥ भगवान् जनार्दनः प्रीयताम् ॥

॥ धन्योस्म्यनुगृहीतोस्मि कृतार्थोस्मि पुनःपुनः ॥

